



# ऋग्वेद-भाष्यम्

## भगवत्पाद-दयानन्दसरस्वती-विरचितम्

[ उपोद्घातेन विविधाभिष्टिप्पणीभिः सूचीभिश्चालंकृतम् ]

तस्यायं

## प्रथमो भागः

मण्डल १, सूक्त १—१६

सम्पादकः—
युधिष्ठिरो मीमांसकः

# समर्पण

ब्रह्मा से लेकर जैमिनि पर्यन्त वेद के द्रष्टा-मन्ता-प्रवक्ता-उपदेष्टा
ऋषि-मुनि-आचार्यों के वेदविषयक मन्तव्य के अनुसार
वर्तमान युग के विलुप्तवेदविद्या के पुनरुद्धारक
युग-प्रवर्तक योगिराज महातपस्वी आनन्दकन्द

**महर्षि दयानन्द सरस्वती**

विरचित ऋग्वेदभाष्य के
सुसम्पादित संस्करण के
प्रथम भाग को
'त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये'
के अनुसार आपके ग्रन्थ को
आपकी पवित्र स्मृति में
पत्र-पुष्प रूप में
आप को ही

**समर्पित**

करता हूं।

प्रतापसिंह ( करनाल )

# प्रकाशकीय

ऋषि दयानन्द के ऋग्वेदभाष्य का सुसम्पादित कोई संस्करण अभी तक प्रकाशित नहीं हुआ। उसके सुसम्पादित शुद्ध प्रामाणिक संस्करण की महती आवश्यकता थी। उसे पूरा करने की शुभ इच्छा से मैंने श्री पं० युधिष्ठिर जी मीमांसक से विचार किया, और उन्हें इस कार्य को करने के लिये कहा। श्री मीमांसक जी ने इस महत्वपूर्ण कार्य को करना स्वीकार करके मुझे उत्साहित किया। आपने ऋषि दयानन्द के हस्तलेखों और मुद्रित संस्करणों से मिलान करके इसका सुसम्पादन किया। भाषा को भी, जहां वह ऋषि के मूल संस्कृत-पाठ के अनुकूल न थी, थोड़ा-बहुत शोध कर संस्कृत-भाष्य के अनुकूल बना दिया। साथ ही ऋषि के भाष्य पर शतशः उपयोगी टिप्पणियां देकर इस संस्करण को महत्त्वपूर्ण एवं प्रामाणिक बना दिया। साथ ही अपने निरीक्षण में रामलाल कपूर ट्रस्ट के प्रेस में छपाने की सुव्यवस्था की। इस कार्य से मुझे भी ऋषि-ऋण से कुछ उऋण होने और वैदिक साहित्य की सेवा करने का सुअवसर प्राप्त हुआ। ऋषि दयानन्द के ऋग्वेद-भाष्य के सुसम्पादित प्रथम भाग को वेद-प्रेमी सज्जनों के हाथों में उपस्थित करते हुए मुझे प्रसन्नता हो रही है। इसका दूसरा भाग भी छप रहा है, वह भी कुछ मास पश्चात् प्रकाशित हो जायेगा।

इस कार्य का अधिक भार श्री मीमांसक जी को ही उठाना पड़ा। उनके ऊपर रामलाल कपूर ट्रस्ट का कार्य-भार पहले ही पर्याप्त था, फिर भी उन्होंने इसे पूर्ण करने का जो उद्योग किया है, उसके लिए मैं उनका आभारी हूं।

इस कार्य में श्री पं० वीरसेन जी वेदश्रमी, और श्री डा० रत्नचन्द्र जी शर्मा, प्रि० दयालसिंह कालेज करनाल का सहयोग भी प्राप्त हुआ। इसके लिये मैं इन दोनों महानुभावों का भी आभार प्रकट करता हूं।

श्री रामलाल कपूर ट्रस्ट के अधिकारियों ने ऋषि के इस कार्य को अपना ही कार्य समझते हुए श्री पं० युधिष्ठिर जी मीमांसक को इस कार्य के करने की अनुमति प्रदान की। इसके लिये मैं श्री रा.ला. कपूर ट्रस्ट के अधिकारियों का भी आभारी हूं।

रामलाल कपूर ट्रस्ट के कार्यकर्त्ताओं विशेषकर श्री पं० महेन्द्र शास्त्रीजी का भी आभारी हूं, जिनके सहयोग से यह ग्रन्थ सुन्दर एवं शुद्ध छप सका।

अन्त में श्री आर० सी० सेठी जी, एजेण्ट 'कर्मचन्द थापर एण्ड ब्रदर्स' का धन्यवाद करता हूं, जिन्होंने समय पर और उचित मूल्य पर कागज देकर हमारी सहायता की।

५७ एल. माडल टाउन
करनाल (हरयाणा)

निवेदक—
प्रतापसिंह

# भगवद्दयानन्दसरस्वतीस्वामिनां वेदभाष्यस्य महत्त्वम्

वेदप्रचारायोत्सर्गीकृतकायस्याशेषशेमुषीसम्पन्नस्य श्रीमद्भगवत्पाददयानन्दसरस्वतीस्वामिनः कृतस्यर्ग्वेदभाष्यस्य प्रथमं भागं वेदविद्याजुषां वैदिकवाङ्मये कृतभूरिपरिश्रमाणां विदुषां करकमलेषूपस्थापयन् कमपि परमं सन्तोषमलौकिकमानन्दं चाहमनुभवामि। मम चिरकालाद् भगवत्पादकृतस्य वेदभाष्यस्य सुसम्पादितसंस्करण-प्रकाशनस्य महतीच्छाऽऽसीत् । तस्याः कार्यरूपे परिणतिरेतद्भागप्रकाशनेन प्रारब्धा । कार्यमिदमत्यन्तपरिश्रमसाध्यं बहुद्रव्यविनियोजनसाध्यं च वर्तते । तथापि—

'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥'

इति भगवद्गीतावचनमनुसरन्नस्मिन् दुःसाध्ये कर्मण्यहं प्रवृत्तः । यद्यहं स्वजीवने साधनाभावान्नैरोग्याभावाच्च समापने समर्थो न भविष्यामि, तदाप्यात्मतोषस्तु सम्पत्स्यत एव यदेतादृङ्महत्कर्मसम्पादनेनाहमृष्यृणात् स्वल्पेऽप्यंशे मुक्तोऽभूवम् ।

### भगवत्पादप्रादुर्भावात् प्राक्कालिका स्थितिः

वैदिकर्षिमुन्याचार्यवर्येष्वस्तन्नेष्वस्यां भारतभुवि वेदविद्या क्रमशो ह्रासतामगच्छत् । वेदविद्यारूपिणि सूर्येऽस्तंगते नानाऽनृषिकृताः कल्पितेतिहासपुराणोपपुराणस्मृत्युपस्मृतिग्रन्थाः खद्योता

---

### महर्षि दयानन्द के वेदभाष्य का महत्त्व

वेद-प्रचार के लिये प्राणों का भी बलिदान देनेवाले परम बुद्धिमान् भगवान् दयानन्द सरस्वती कृत ऋग्वेदभाष्य के प्रथम भाग को वेद-विद्या-प्रेमी विद्वानों के सन्मुख उपस्थित करते हुए मैं परम सन्तोष और आनन्द का अनुभव करता हूं । मेरी चिरकाल से अभिलाषा थी कि भगवत्पाद दयानन्द के वेदभाष्य का सुसम्पादित सुन्दर संस्करण प्रकाशित किया जाये । इस इच्छा की कार्यरूप में परिणति इस भाग के प्रकाशन से आरम्भ हुई है । यह कार्य महान् परिश्रम-साध्य एवं बहुत धन-साध्य है । फिर भी गीता (२ । ४०) के 'शुभ कर्म में प्रवृत्ति फलदायिनी होती है, उसके पूर्ण न होने पर भी अधर्म का स्पर्श नहीं होता । इस धर्म का स्वल्प पालन भी भावी महाभय से रक्षा करता है' इस वचन का अनुसरण करते हुए मैं इस दुःसाध्य कर्म में प्रवृत्त हुआ हूं । यदि मैं अपने जीवन में साधनों के अभाव तथा शारीरिक अस्वस्थता के कारण इसके समापन में समर्थ न भी होऊं, तो भी यह आत्मसंतोष तो होगा ही कि मैं ऋषि ऋण के स्वल्प अंश से तो उऋण हुआ हूं ।

**भाष्यकार से पूर्वकालिक परिस्थिति** – वैदिक ऋषि-मुनि-आचार्यों के इस भारतभूमि से समाप्त हो जाने पर वेदविद्या क्रमशः ह्रास को प्राप्त होती गई । वेदविद्यारूपी सूर्य के अस्त हो

इव प्रतिष्ठामलभन्त, वेदविरुद्धाश्चार्वाकबौद्धजैनवाममार्गादीन्यनेकमतमतान्तराणि च प्रादुरभवन्। एतेषां प्रचारेण प्रवृद्धया चाविद्यातामिस्रं प्रावर्धत, वेदवेदाङ्गानां पठनपाठनं च नामशेषमवाशिषत। तत्रापि वेदानां पठनपाठनं केवलं कण्ठस्थीकरणमात्रमेव प्राचलत्। एवंविधे काले केचन स्कन्दस्वामिवेङ्कटमाधवोवटसायणमहीधरादयो विद्वांसो नानावेदभाष्याण्यकार्षुः। वास्तविकवेदज्ञानविरहत्वादेते भाष्यकारा वेदमपौरुषेयं मन्यमाना अपि नानाकल्पितपुराणेतिहासादीन् आश्रित्य लौकिकेतिहासभूगोलपशुसंज्ञापनादीन् अन्यांश्चावैदिकान् आचारान् स्ववेदभाष्येषु वर्णितवन्तः। एतेषां वेदभाष्यैर्न केवलं लोक एव वेदान् प्रत्यनास्था प्रादुरभवद्, अपि तु पाश्चात्यैर्यहूदीसाईमताग्रहपक्षिविद्वद्भिर्यद् वैदिकवाङ्मये कार्यं कृतं तत्र तैरमान्यान्येव भाष्याण्यङ्गीकृत्य वैदिकवाङ्मयविषये बहुविधानास्थोत्पादकमतानि प्रादुष्कृतानि। तानि च पुरस्कृत्य ईसाईमुसलमानमतावलम्बिनो जना वैदिकधर्मिण आर्यान् स्वस्वमते दीक्षयितुं महत्प्रयत्नमातिष्ठन्त।

## भगवत्पाददयानन्दस्वामिनः प्रादुर्भावः

एवंविधेऽन्धतामिस्रे काले भगवत्पादस्य तत्रभवतः श्रीमद्दयानन्दसरस्वतीस्वामिनः प्रादुर्भावोऽभूत्। तैर्यथावद् वेदादीनि शास्त्राण्यधीत्याऽऽर्यावर्तवासिनां शारीरिकमानसिक-पीडामनुभूय, तत्कारणं च विज्ञाय भारते वर्षे प्रसृतान्यनेकविधावैदिकमतान्युन्मूलयितुं शास्त्रतर्कसमन्वितमभियानं प्राचालि। सर्वविधस्याज्ञानस्य मूलं वैदिकवाङ्मयस्याप्रचारं निश्चित्य वेदानां यथावत् प्रचाराय

---

जाने पर जुगुनुओं के समान नाना साधारणजन-कल्पित इतिहास, पुराण, उपपुराण, स्मृति, उपस्मृति आदि ग्रन्थ प्रतिष्ठा को प्राप्त हुए, और अनेक वेदविरुद्ध चार्वाक बौद्ध जैन वाममार्ग आदि मतमतान्तर प्रादुर्भूत हुए। इनके प्रचार और वृद्धि से अविद्यारूपी अन्धकार बढ़ा, और वेद-वेदाङ्गों का पठन-पाठन शिथिल हुआ। उनमें भी वेद का पठन-पाठन केवलमात्र कण्ठ करने तक ही सीमित हो गया। ऐसे काल में स्कन्द स्वामी वेङ्कटमाधव उवट सायण महीधर आदि ने वेदों के कई भाष्य लिखे। वास्तविक वैदिक ज्ञान से रहित होने के कारण इन भाष्यकारों ने वेद को अपौरुषेय मानते हुए भी नाना कल्पित इतिहास पुराणों का आश्रय लेकर लौकिक इतिहास भूगोल पशुबलि आदि तथा अन्य अवैदिक आचारों का अपने वेदभाष्यों में वर्णन किया। इन लोगों के वेदभाष्यों से केवल लोक में ही वेदों के प्रति अश्रद्धा उत्पन्न न हुई, अपितु पाश्चात्य यहूदी ईसाई मत के पक्षपाती विद्वानों ने वैदिक वाङ्मय के विषय में जो भी कार्य किया उसमें उक्त भाष्यों को ही आधार बनाकर वैदिक वाङ्मय के प्रति अश्रद्धा उत्पन्न करनेवाले नानावादों को उजागर किया। उन्हीं मतों का आश्रय लेकर ईसाई मुसलमान वैदिकधर्मी आर्यों को अपने मत में दीक्षित करने के महान् प्रयत्न में प्रवृत्त हुए।

**भगवान् दयानन्द का प्रादुर्भाव**— इस प्रकार के महा अन्धकारमय काल में भगवान् दयानन्द का प्रादुर्भाव हुआ। उन्होंने यथावत् वेदादिशास्त्रों का अध्ययन करके, भारतीय आर्यों की शारीरिक और मानसिक पीड़ा का अनुभव करके, उसके मुख्य कारण का निदान करके भारतवर्ष में फैले हुए बहुविध अवैदिक मतों के खण्डन के लिये शास्त्र-तर्क-समन्वित अभियान चलाया। सब प्रकार के अज्ञान का मूल वैदिक वाङ्मय का अप्रचार है, ऐसा निश्चय करके उनके यथावत्

भारतस्यार्धाधिके भागे भ्रमणं विधाय शास्त्रार्थोपदेशपाठशालास्थापनादिविविधकार्यैः सह स्थायि-लाभाय ग्रन्थनिर्माणकार्यमपि प्रारम्भि।

भगवत्पादकृतो ग्रन्थराशिः

भगवत्पादेन सर्वमपि कार्यजातं स्वजीवनस्यान्तिमे दशके एव कृतम् (ततः पूर्वं द्वित्रा एव स्वकाया ग्रन्था रचिताः)। तत्र प्रचाराय सर्वत्र भ्रमणं कुर्वता यद् ग्रन्थप्रणयनं विहितं तद्धस्तलेख-परिमाणमुपविंशतिसहस्रपृष्ठमितं वर्तते। दशवर्षमितेऽल्पीयसि काले देशाटनपूर्वकशास्त्रार्थोपदेशादि-बहुकार्यसंकुलिते उक्तपरिमाणमितं ग्रन्थनिर्माणकार्यमत्यन्तमाश्चर्यकरम्। तत्र भगवत्पादकृता इमे ग्रन्थाः—

| | | | | | |
|---|---|---|---|---|---|
| १. | सन्ध्या | (संस्कृत) | काल | १९२० | वैक्रमाब्दः |
| २. | भागवत-खण्डनम् | ,, | ,, | १९२३ | ,, |
| ३. | अद्वैतमत-खण्डनम् | ,, | ,, | १९२७ | ,, |
| ४. | सत्यार्थ-प्रकाशः | (भाषा) | ,, | १९३१ | ,, |
| ५. | सन्ध्योपासनादि-पञ्चमहायज्ञ-विधिः [भाष्य-सहितः] | (संस्कृत) | ,, | १९३१ | ,, |
| ६. | वेदान्तिध्वान्त-निवारणम् | (भाषा) | ,, | १९३१ | ,, |
| ७. | वेदविरुद्धमत-खण्डनम् | (संस्कृत) | ,, | १९३१ | ,, |
| ८. | शिक्षापत्रीध्वान्त-निवारणम् | ,, | ,, | १९३१ | ,, |
| ९. | वेदभाष्यनिदर्शनाङ्कः | (सं० गुज० मराठी) | ,, | १९३१ | ,, |
| १०. | आर्याभिविनयः | (भाषा) | ,, | १९३२ | ,, |
| ११. | संस्कारविधिः | (संस्कृत-भाषा) | ,, | १९३२ | ,, |
| १२. | चतुर्वेद-विषयसूची | (संस्कृत) | ,, | १९३३ | ,, |
| १३. | वेदभाष्यनिदर्शनाङ्कः (पुनः) | (संस्कृत-भाषा) | ,, | १९३३ | ,, |
| १४. | ऋग्वेदादिभाष्यभूमिका | ,, ,, | ,, | १९३३ | ,, |

---

प्रचार के लिये आधे से अधिक भूभाग में भ्रमण करके शास्त्रार्थ-उपदेश और पाठशालाओं का स्थापन आदि विविध कार्यों के साथ-साथ ग्रन्थ-निर्माण कार्य भी आरम्भ किया।

**भगवत्पादकृत ग्रन्थराशि**—भगवान् दयानन्द ने उक्त समस्त कार्य अपने जीवन के अन्तिम दश वर्षों में ही किया ( उससे पूर्व दो-तीन ही छोटी पुस्तिकाएं लिखीं )। इस स्वल्पकाल में भी सर्वत्र भ्रमण करते हुए जो ग्रन्थ लिखे, उनके हस्तलेखों का परिमाण फुलसकेप आकार के लगभग २० सहस्र पृष्ठ हैं। दश वर्ष के काल में देशाटन पूर्वक शास्त्रार्थ-उपदेशादि कार्य करते हुए उक्त परिमाण में ग्रन्थराशि का लिखना ही अपने आप में आश्चर्यजनक है। भगवद्दयानन्दकृत ४३ ग्रन्थ हैं—

ग्रन्थों के नाम और काल का निर्देश ऊपर संस्कृत-भाग में किया है, वहां देखें।

१५. पञ्चमहायज्ञविधिः [पुनर्निबद्धा] (संस्कृत-भाषा) कालः १९३४ वैक्रमाब्दः
१६. ऋग्वेदभाष्यम् [मं० ७, सू० ६१, मंत्र २ पर्यन्तम्] ,, ,, ,, १९३४ ,,
१७. यजुर्वेदभाष्यम् [सम्पूर्णम्] ,, ,, ,, १९३४ ,,
१८. आर्योद्देश्यरत्नमाला (भाषा) ,, १९३४ ,,
१९. भ्रान्ति-निवारणम् ,, ,, १९३४ ,,
२०. अष्टाध्यायी-भाष्यम् [चतुर्थाध्यायान्तम्] (संस्कृत-भाषा) ,, १९३५ ,,
२१. आत्मचरितम् (भाषा) ,, १९३६ ,,
२२. संस्कृतवाक्यप्रबोधः (संस्कृत-भाषा) ,, १९३६ ,,
२३. व्यवहारभानुः (भाषा) ,, १९३६ ,,
२४. गोतम-अहल्या की कथा (?) ,, १९३७ ,,
२५. भ्रमोच्छेदनम् (भाषा) ,, १९३७ ,,
२६. अनुभ्रमोच्छेदनम् ,, ,, १९३७ ,,
२७ गोकरुणानिधिः ,, ,, १९३७ ,,
२८—४१ वेदाङ्गप्रकाशः [चतुर्दशभागात्मकः] ,, ,, १९३६-३८ ,,

१. वर्णोच्चारणशिक्षा
२. सन्धिविषयः
३. नामिकः
४. कारकीयः
५. सामासिकः
६. स्त्रैणताद्धितः
७. अव्ययार्थः
८. आख्यातिकः
९. सौवरः
१०. पारिभाषिकः
११. धातुपाठः (सम्पादनम्)
१२. गणपाठः (सम्पादनम्)
१३. उणादिकोशः (संस्कृत-व्याख्या)
१४. निघण्टुः (सम्पादनम्)

४२. सत्यार्थ-प्रकाशः [पुनरुपनिबद्धः] (भाषा) कालः १९३९ वैक्रमाब्दः
४३. संस्कारविधिः [पुनरुपनिबद्धः] ,, ,, १९४० ,,

भगवत्पादकृतानामेतेषां ग्रन्थानां विस्तरेण परिचयोऽस्मत्कृते 'ऋषि दयानन्द के ग्रन्थों का इतिहास' नाम्नि ग्रन्थे द्रष्टव्यः।

## भगवत्पादकृतं वेद-भाष्यम्

वेदान् यथावत् पुनः प्रतिष्ठापयितुं, तद्विषये प्रसृतान् विविधवादानुन्मूलयितुं च तत्र भवताऽऽचार्यवर्येण वेदभाष्यस्योपक्रमः कृतः। भगवत्पादस्य चतुर्णामपि वेदानां भाष्यकरणस्या-

---

भगवान् दयानन्द विरचित इन सभी ग्रन्थों का विस्तार से परिचय मेरे 'ऋषि दयानन्द के ग्रन्थों का इतिहास' नामक ग्रन्थ में देखें।

भगवान् दयानन्दकृत वेदभाष्य—वेदों की पुनः यथावत् प्रतिष्ठा के लिये, और वेद के विषय में प्रचलित विविध मतों का उन्मूलन करने के लिये भगवान् दयानन्द ने वेदभाष्य रचने का

भिलाषाऽऽसीत्, परन्तु तत्र दैवदुर्विपाकेन केनचिद् आततायिना विषदानेन तदीयान् प्राणान् उन्मूल्य तुषारापातो व्यधायि । तेन तज्जीवनस्य प्रधानभूतं कार्यमिदं पूर्ति नालभत । यजुर्वेदस्य सम्पूर्णम्, ऋग्वेदस्य सप्तममण्डलस्यैकषष्टितमस्य च सूक्तस्य द्वितीयमन्त्रं यावदेव भाष्यं रचयित्वा दिवं गतवान् ।

वेदभाष्यनिर्माणात्, पूर्वं भाष्यकारेण चतुर्णामपि वेदानां यथावद् अवगाहनं कृत्वा करिष्यमाणस्य स्वीयवेदभाष्यस्य रूपरेखा निर्धारिता । वेदभाष्यसाहाय्यार्थं सर्वप्रथमं 'चतुर्वेद-विषयसूची' नाम्ना वेदचतुष्टयप्रतिपादितानां विषयाणामानुपूर्व्येण संकलनं विहितम् । संकलनमिदं तन्निर्वाणाद् अष्टाशीतिवर्षानन्तरं गतवर्ष एव तदुत्तराधिकारिण्या परोपकारिणीसभया प्रकाशितम् ।

एवं चतुर्णामपि वेदानां करिष्यमाणस्य भाष्यस्य रूपरेखां निश्चित्य वेदभाष्यकर्म प्रारब्ध-वान् । तत्रादौ चतुर्वेदभाष्याणाम् 'ऋग्वेदादिभाष्यभूमिका' नाम्नीं महत्त्वपूर्णां भूमिकां व्यरचयत् । तदनन्तरं च १९३४ वैक्रमाब्दस्य मार्गशीर्षमासस्य शुक्लपक्षस्य षष्ठ्यां तिथौ मंगलवारे ऋग्वेद-भाष्योपक्रमो विहितः । ततः सप्तत्रिंशद् दिवसानन्तरमेव १९३४ वैक्रमाब्दस्य पौषमासस्य शुक्ल-पक्षस्य त्रयोदश्यां तिथौ गुरुवारे यजुर्वेदभाष्यस्यारम्भः कृतः ।

यद्यपि यजुर्वेदभाष्यारम्भे 'ऋग्वेदस्य विधाय वै भाष्यं' इत्युक्तं, तथाप्युभयोर्भाष्ययोरुपक्रमे सप्तत्रिंशद्दिनानामेवान्तरदर्शनाद् 'विधाय' पदस्य 'आरभ्य' इत्यर्थ एव तात्पर्यं, नर्ग्वेदभाष्य-समाप्ताविति स्पष्टमेव ।

---

उपक्रम किया । आचार्यवर की चारों वेदों के भाष्य करने की अभिलाषा थी, परन्तु हमारी हत-भाग्यता से किसी आततायी ने विष देकर उनके प्राणों को हर लिया, और उनकी अभिलाषा पूर्ण न हो सकी । वे अपने जीवन में यजुर्वेद का सम्पूर्ण तथा ऋग्वेद के सप्तम मण्डल के इकसठवें सूक्त के दूसरे मन्त्र तक ही भाष्य रचकर दिवंगत हो गये ।

वेदभाष्य की रचना से पूर्व भाष्यकार ने चारों वेदों का भली-भांति विचार करके भावी वेदभाष्य की रूपरेखा निर्धारित की, और वेदभाष्य की सहायता के लिये **'चतुर्वेद-विषय-सूची'** का संकलन किया । इस संकलन को उनके स्वर्गवास के ८८ वर्ष के पश्चात् गत वर्ष ही उनकी उत्तराधिकारिणी परोपकारिणी सभा ने प्रकाशित किया है ।

इस प्रकार चारों वेदों के भाष्यों की रूपरेखा का निश्चय करके उन्होंने वेदभाष्य आरम्भ किया । वेदभाष्य से पूर्व चारों वेदों के भाष्यों की **'ऋग्वेदादिभाष्यभूमिका'** नामक महत्वपूर्ण भूमिका लिखी । उसके अनन्तर १९३४ वैक्रमाब्द के मार्गशीर्षमास के शुक्लपक्ष की छठी तिथि मंगलवार के दिन 'ऋग्वेदभाष्य' का आरम्भ किया । उसके ३७ दिन बाद ही सं० १९३४ के पौष शुक्ल त्रयोदशी गुरुवार को 'यजुर्वेदभाष्य' का आरम्भ भी कर दिया ।

यद्यपि यजुर्वेदभाष्य के आरम्भ में **'ऋग्वेद के भाष्य को ( विधाय = ) करके···'** लिखा है, फिर भी दोनों भाष्यों के आरम्भ करने में ३७ दिन का ही भेद होने से यहां **'विधाय'** का अर्थ **'आरम्भ करके'** इतना ही अभिप्रेत है, न कि ऋग्वेदभाष्य को पूर्ण करके, यह स्पष्ट है ।

आमहाप्रयाणात् (कार्तिक कृ० ३०, सं० १९४० पर्यन्तं) भगवद्दयानन्दसरस्वत्या ऋग्वेदस्य सप्तममण्डलस्यैकषष्टितमसूक्तस्य द्वितीयमन्त्रं यावदेव भाष्यं विहितमित्युक्तं पुरस्तात्।

यजुर्वेदभाष्यस्य समाप्तिबोधकं वाक्यं ग्रन्थान्त एवं दृश्यते—मार्गशीर्ष कृष्ण १ शनौ संवत् १९३९ में समाप्त किया।

एवं यजुर्वेदभाष्यस्य रचनोपपञ्चवर्षेष्वभवत्। यजुर्भाष्यरचनया सहैवर्ग्वेदभाष्यरचनाकार्यमपि प्राचलत्।

## भाष्यकारस्य वेदविषयिका धारणा

तत्र भगवतो भाष्यकारस्य वेदविषयिका या धारणा सा तदीयया चतुर्वेदविषयसूच्या ऋग्वेदादिभाष्यभूमिकया च स्पष्टं शक्यते ज्ञातुम्। तत्र यद् वस्तुतत्त्वं विस्तरेणोक्तं, तस्यायं संक्षेपः—

१. वेदोऽपौरुषेयः, देवाधिदेवस्य मनीषिणः स्वयम्भुवः कवेः काव्यम्, महाभूतस्य परब्रह्मणो निश्वासभूतो नित्यः। अत एव—

२. तत्र तत्र निर्दिष्टा मन्त्राणामृषयस्तेषां द्रष्टार एव न तु कर्तारः। अत एव (ऋषिप्रणीतत्वाभावादेव)—

३. वेदे कस्यचिद्देशस्य जातेर्व्यक्तेर्वेतिवृत्तं नास्ति। तत्र तत्र प्रतीयमानाः कथा आलङ्कारिकाः, न वास्तविकः। अत एव—

---

महाप्रयाण से पूर्व (कार्तिक कृ० ३०, सं० १९४०) तक भगवान् दयानन्द ने ऋग्वेद के सप्तम मण्डल के इकसठवें सूक्त के दूसरे मन्त्र तक ही भाष्य किया था, यह हम पूर्व लिख चुके हैं।

यजुर्वेदभाष्य का समाप्ति-बोधक वाक्य ग्रन्थ के अन्त में इस प्रकार मिलता है—**मार्गशीर्ष कृष्ण १ शनौ संवत् १९३९ में समाप्त किया।** इस प्रकार यजुर्वेद का भाष्य लगभग पांच वर्षों में पूरा हुआ। यजुर्वेद भाष्य के साथ-साथ ऋग्वेदभाष्य का भी लेखनकार्य बराबर चलता रहा।

**भगवान् दयानन्द की वेदविषयक धारणा**—भाष्यकार भगवान् दयानन्द की वेद-विषयक क्या धारणायें थी, यह उनकी 'चतुर्वेद-विषय-सूची' और 'ऋग्वेदादिभाष्यभूमिका' से स्पष्टतया जानी जा सकती हैं। वहां पर उन्होंने जो बातें विस्तार से लिखी हैं, उनका संक्षेप इस प्रकार जानना चाहिये—

१. वेद अपौरुषेय, देवाधिदेव मनीषी स्वयम्भू कवि का काव्य हैं, महाभूत परब्रह्म से निःश्वास के समान प्रादुर्भूत नित्य हैं। इसलिये—

२. वैदिक वाङ्मय में निर्दिष्ट मन्त्रों के ऋषि उनके द्रष्टा हैं, न कि रचयिता। इसी कारण (ऋषियों द्वारा प्रणीत न होने से)—

३. वेद में किसी देश जाति वा व्यक्ति विशेष का वर्णन नहीं है। यत्र तत्र प्रतीयमान कथाएं आलङ्कारिक हैं, वास्तविक नहीं। इसी कारण—

४. वेदे नामानि न रूढानि, अपि त्वाख्यातजानि यौगिकानि। अत एव तानि सर्वविध-प्रक्रियागामीनि। अत एव—

५. वेदः सर्वसत्यविद्यानामाकरग्रन्थः। अत एव—

६. वेदे समस्तमप्याधिभौतिकमाधिदैविकं पदार्थविज्ञानं सूत्ररूपेण निहितम्। सहैतेन—

७. वेदस्य मुख्यं तात्पर्यमध्यात्मज्ञाने परिणतिं लभते। अत एव—

८. वेदे निर्दिष्टानि अग्निवाय्विन्द्रादीनि समस्तानि दैवतपदानि उपासनाप्रकरणे (अध्यात्म-प्रक्रियायां) परब्रह्मण एव वाचकानि, न भौतिकपदार्थानाम्। तथा च

९. याज्ञिकक्रियाकाण्डस्याधिदैविकसृष्टियज्ञे (विज्ञाने) पर्यवसानम्। तेन—

१०. युक्तिप्रमाणसिद्धो याज्ञिकक्रियाकलापो मन्त्रार्थानुसृतो विनियोगः। तदनुसारी याज्ञिक-प्रक्रियानुरूपोऽर्थो ग्राह्यः, न तद्विपरीतः।

११. वेदस्य मनीषिणः स्वयम्भुवः कवेः काव्यत्वात् तद्वाक्यरचना बुद्धिपूर्वा। अत एव—

१२. वेदे भौतिकपदार्थानामुपासना, तेभ्योऽभिलषितवस्तुनो याचना, अश्लीलता, वर्गद्वेषः, पशुहिंसा इत्येवमादीनामसम्भवानर्थकारिणां विषयाणां लेशमात्रमपि न सम्भवति। तथा च—

१३. परब्रह्मणा सविश्रोत्पादिता अग्निवाय्वादयः पदार्था यथा सार्वजनीना, एवं तदीयं वेदरूपं ज्ञानमपि सार्वजनीनम्। न तत्र कस्यचिदेव वर्णस्य पुंव्यक्तेरेवाधिकारः।

---

४. वेद में कोई नाम रूढ़ नहीं है, अपितु सभी नाम धातुज ( =धातुओं से निष्पन्न ) होने से यौगिक हैं।

५. वेद सब सत्यविद्याओं की खान हैं। इसी कारण—

६. वेदों में समस्त आधिभौतिक एवं आधिदैविक ज्ञान-विज्ञानरूप पदार्थविद्या सूत्ररूप से निहित है। इसी के साथ—

७. वेद का मुख्य तात्पर्य अध्यात्मज्ञान में समाप्त होता है। इसी कारण—

८. वेद में निर्दिष्ट अग्नि वायु इन्द्र आदि देवतावाची पद उपासनाप्रकरण ( अध्यात्म ) में परब्रह्म के ही वाचक होते हैं, भौतिक पदार्थों के नहीं। इसके साथ ही—

९. याज्ञिक क्रियाकाण्ड की आधिदैविक सृष्टयज्ञ में परिसमाप्ति होती है। इस कारण—

१०. युक्ति-प्रमाण-सिद्ध याज्ञिक क्रियाकलाप, मन्त्रार्थ के अनुकूल विनियोग और तदनुसारी याज्ञिक प्रक्रिया पर मन्त्रार्थ भी ग्राह्य है, उससे विपरीत नहीं।

११. वेद मनीषी स्वयम्भू कवि का काव्य है। अतः उसकी वाक्य-रचना बुद्धिपूर्वक ही है। इसी कारण—

१२. वेद में भौतिक पदार्थों की उपासना, उनसे अभीष्ट वस्तु की प्रार्थना, अश्लीलता, वर्ग-द्वेष, पशुहिंसा इत्यादि असम्भव एवं अनर्थकारी विषयों का वर्णन लेशमात्र भी नहीं है। तथा—

१३. परब्रह्म से उत्पादित अग्नि वायु आदि पदार्थ जैसे प्राणिमात्र के लिये उपकारक हैं,

१४. वेदः प्रकाशवत् स्वतःप्रमाणम् । अन्यत्समस्तमपि लौकिकं वैदिकं च वाङ्मयं परः प्रमाणम् । तेनैतद् वेदविरोधे सत्यनपेक्ष्यम्, अर्थाद् अप्रमाणम् । अत एव—

१५. वेदव्याख्याविधाने व्याकरणनिरुक्तछन्दोज्योतिषपदपाठप्रातिशाख्यादिभ्यः, आ वेदाद्युपवेदेभ्यः, मीमांसादिदर्शनशास्त्रेभ्यः, शाखाब्राह्मणारण्यकोपनिषत्कल्पसूत्रादिभ्यश्च साहा ग्रहीतुं शक्यते । परन्तु तद्विरोधादनन्वयाच्चैव न काचिन्मन्त्रव्याख्याऽप्रामाणिकीति शक्यते वक्तु यावत्सा स्वयं वेदविरुद्धा न स्यात् ।

१६. वैदिकानि छन्दांस्यपि येन लक्षणेन यथावदुपपद्यन्ते, तदनुसारमेव निर्देष्टुमर्हा (पिङ्गलछन्दःसूत्रस्य सर्ववेदसाधारणत्वात्तस्यैव प्राधान्येनानुगमो युक्तः), न तेन लक्षणे यमाश्रित्य छन्दस्सु व्यूहादिकल्पना कर्तव्या भवेत् (सर्वानुक्रमण्याद्यनुसारं छन्दांसि व्यूहितव्या जायन्ते)[1]।

एतद्भाष्यविषय इदमन्यद् विज्ञेयम्—प्राचीनैर्ऋषिमुन्याचार्यवर्यैरधियज्ञाधिदैवताध्या विषयिका त्रिविधा वेदव्याख्योररीक्रियते । तदनुसारमयमपि भाष्यकारस्त्रिविधां मन्त्रार्थप्रति

---

उसी प्रकार उसका वेदरूपी ज्ञान भी मनुष्यमात्र के लिये है । इस कारण उस पर किसी वर्ण लिङ्ग-विशेष व्यक्ति का ही अधिकार नहीं है ।

१४. वेद प्रकाश के समान स्वतःप्रमाण हैं । अन्य सम्पूर्ण लौकिक-वैदिक-साहित्य परत प्रमाण है । इस कारण वेद के साथ विरोध होने पर वह अप्रमाण होता है । इसी कारण—

१५. वेद की व्याख्या लिखने में व्याकरण निरुक्तादि वेदाङ्गों, आयुर्वेदादि उपवेदों, मीमां आदि दर्शनशास्त्रों, शाखा-ब्राह्मण-आरण्यक-उपनिषत्-कल्पसूत्र आदि से सहायता तो ली सकती है, परन्तु कोई मन्त्रार्थ इस कसौटी पर अप्रमाण नहीं माना जा सकता कि वह इन से विरुद्ध है, जब तक कि वह स्वयं वेद से विरुद्ध न होवे ।

१६. मन्त्रों के छन्द जिस शास्त्र वा लक्षण से यथावत् उपपन्न होवें, उसी का उपयोग चाहिये (पिङ्गलसूत्र के सर्ववेदसाधारण होने से उसका अनुसरण ही युक्त है) । उस शास्त्र लक्षण का आश्रय नहीं लेना चाहिये, जिसका आश्रय करने पर अक्षरों की कमी को पूरा करने लिये व्यूह की कल्पना करनी पड़े ( ऋक्सर्वानुक्रमणी आदि के अनुसार छन्दोनिर्देश में व्यूह कल्पना करनी पड़ती है ) ।[2]

इस भाष्य के विषय में यह भी जानने योग्य है कि प्राचीन ऋषि मुनि आचार्यों ने अधिय अधिदेव अध्यात्म तीनों परक मन्त्रव्याख्या स्वीकार की है । उनके मतानुसार इस भाष्य रचयिता भी तीनों प्रकार की मन्त्रव्याख्या को यथावत् स्वीकार करता है (द्र०—ऋ० भाष्य भूमिक

---

१. एतस्य विस्तरेण ज्ञानायास्मदीयायाः 'वैदिक-छन्दोमीमांसायाः' अष्टादशोऽध्यायो द्रष्टव्यः ।

२. इस विषय को विस्तार से जानने के लिए हमारे 'वैदिक-छन्दो-मीमांसा' ग्रन्थ का १८वां अध्या देखना चाहिये ।

यथावत् स्वीकरोति (द्र०—ऋ० भा० भूमिका पृष्ठ ३८८–३९१ प्रतिज्ञाविषये), परन्तु भाष्ये न ता आश्रित्य मन्त्रान् विवृणोति । एतासामनाश्रयणे किं कारणमिति जिज्ञासाशान्त्यै ऋग्वेदादि-भाष्यभूमिकायां प्रतिज्ञाविषयो द्रष्टव्यः ।

## वेदानां पञ्चजनोपयोगित्वम्

वेदानां पूर्वोक्तस्त्रिविधोऽर्थोऽत्यन्तं गूढः, न च स सर्वसाधारणैर्ग्रहीतुमाचरितुं वा शक्यः । तथा सति, यथा परब्रह्मणा निर्मिताः पदार्थाः सर्वलोकोपकारिणः सर्वजनोपयोगिनः सन्ति, तथा यदि वेदरूपं तदीयं ज्ञानं न सार्वजनीनं स्यात्तर्हि कस्तस्य लाभः ? एतस्मिन् विषये तत्र भगवान् मनुराह—

सेनापत्यं च राज्यं च दण्डनेतृत्वमेव च । सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥

भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिध्यति ॥

बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् । तस्मादेतत् परं मन्ये यज्जन्तोरस्य साधनम् ॥

मनु० १०।१००, ९७, ९९ ॥

एतैः श्लोकैर्भगवान् मनुर्वेदानां सर्वजनोपयोगित्वं प्रतिपादयन् राजनीतिप्रवर्तनं, वर्णाश्रमाणां धर्माणां भूतभव्यभविष्योपयोगिनां विधानानां प्रकल्पनप्रभृति सर्वमपि लौकिकव्यवहारजातं

---

पृष्ठ ३८८-३९१) । परन्तु अपने वेदभाष्य में उन प्रक्रियाओं का आश्रयण करके सब मन्त्रों की व्याख्या नहीं की । वेदव्याख्या में इनके साक्षात्रूप से आश्रयण न करने का कारण भी ऋ०भा० भूमिका के प्रतिज्ञा-विषय में भाष्यकार ने लिख दिया है ।

**वेदों का मनुष्यमात्र[2] के लिये उपयोग**—वेदों का पूर्वोक्त तीन प्रकार का अर्थ अत्यन्त गूढ़ है । सर्वसाधारण द्वारा उसका समझना वा आचरण करना अशक्य है । इसलिये परब्रह्म-निर्मित अन्य पदार्थों के समान वेद सब जनों के लिये कल्याणकारी न होवें, तो उसका क्या लाभ हो सकता है ? इसी कारण भगवान् मनु ने लिखा है—

'सेनापतित्व ( रणनीति ), राजनीति, वर्णाश्रम के धर्मों का भूत भविष्य वर्तमान देशकाल के अनुरूप विधान आदि समस्त व्यावहारिक ज्ञान वेद से ही सम्भव है ।'

इस प्रकार के व्यावहारिक विषयों का विधान वेद के व्यावहारिक अर्थ का अनुसरण करके ही किया जा सकता है । और वह व्यवाहारिक अर्थ कहीं उपमा, कहीं लुप्तोपमा, कहीं अन्य

---

१. पञ्चजनाः—ब्राह्मणक्षत्रियवैश्यशूद्रातिशूद्राः । तथा चाह याजुषी श्रुतिः—'यथेमां वाचं तथा कल्याणी-मावदानि जनेभ्यः ब्रह्मराजन्याभ्यां शूद्राय चार्याय स्वाय चारणाय च' ( २६।२ ) । वेदाधिकारनिरूपणप्रसङ्गे सत्यव्रतसामश्रम्यप्याह—'शूद्रस्य वेदाधिकारे साक्षाद् वेदवचनमपि दर्शितं स्वामिदयानन्देन—यथेमां ········ चारणाय च' । ऐतरेयालोचन, पृष्ठ ७ ।

२. वेद पढ़ने का स्त्रीशूद्र अतिशूद्र को भी अधिकार है । इसका निरूपण ग्रन्थकार ने 'यथेमां वाचं कल्याणीम्' (यजुः २६ । २) मन्त्र से दर्शाया है । इस अभिप्राय को पं० सत्यव्रत सामश्रमी सदृश उदार चेता विद्वानों ने भी स्वीकार किया है । द्र०—ऐतरेया लोचन पृष्ठ ७ ।

वेदेभ्य एव सम्भवतीति प्रतिजज्ञे । एतादृशां सर्वकर्मणां विधानं वेदानां व्यावहारिकार्थमनुसृत्यैव सम्भवति । स च व्यावहारिकार्थः क्वचित् साक्षात् प्रयुक्तयोपमया क्वचिल्लुप्तोपमया क्वचिदन्यैश्चालङ्कारैरेव द्योत्यते । तद्यथा—

जायेव पत्य उशती सुवासा (ऋ० १०।७१।४) इति; विधवेव देवरम् (ऋ० १०।४०।२)इति च ।

अत्र प्रथमया जायया ऋतुकालेषु सुवासांसि धार्याणीति द्योत्यते, अपरया च पत्यौ मृते यथादेशकालं विधवाया देवरेण नियोगो विवाहो वा सम्भवतीति प्रदर्श्यते ।

इदमेव च दर्शनमाश्रित्य तत्र भवान् शबरस्वाम्यपि केषाञ्चिल्लौकिकशिष्टव्यवहाराणां प्रामाण्यं निदर्शयन् (मी० भा० १।३।२) आह—

(१) गुरुरनुगन्तव्य इत्यस्मिन् विषये—तथा च दर्शयति—'तस्माच्छ्रेयांसं पूर्वं यन्तं पापीयान् पश्चादन्वेति' (मै० सं० ३।१।३) इति ।

(२) प्रपा प्रवर्तयितव्या तडागः खनितव्य इत्यस्मिन् विषये—तथा च दर्शनम्—'धन्वन्निव प्रपा असि' (ऋ० १०।४।१) इति । तथा 'स्थलयोदकं परिगृह्णन्ति' (तै० सं० १ । ६ । ११) इति च ।

(३) शिखाकर्म कर्तव्यम् इत्यस्मिन् विषये—दर्शनं च—'यत्र बाणाः सं पतन्ति कुमारा विशिखा इव' (ऋ० ६।७५।१७) इति ।

शबरस्वामिनोद्धृतानां वचनानां वास्तविकोऽर्थस्तु तत्तत्प्रकरणानुसारं भिन्न एव, परन्त्वेतैरेव लौकिकव्यवहाराणां विधानमपि शबरस्वामिना प्रदर्शितम् ।

इममेव प्राचीनं पन्थानमाश्रित्यायं वेदभाष्यकारोऽप्यृग्यजुषोर्भाष्ययोः प्राधान्येन सर्वजनोपयोगिनां लौकिककर्मणां प्रतिपादनं चकार । भाष्यकारस्यानेन प्रयत्नेन मनुजानां जीवने समाजे वा वेदानां क उपयोग इति विस्पष्टतरं विज्ञायते । यथा ऋग्वेदस्य प्रथममण्डलस्थयोरुषःसूक्तयो-

---

अलङ्कारों से ही बोधित होता है। जैसे—'जायेव पत्य उशती सुवासा' ( ऋ० १० । ७१ । ४ ) में प्रयुक्त उपमा से ऋतुकाल में स्त्रियों को सुन्दर शुद्ध वस्त्र धारण करने चाहियें; '**विधवेव देवरम्**' ( ऋ० १० । ४० । २ ) से विधवा का देवर के साथ नियोग वा विवाह रूप अर्थ द्योतित होता है।

इस प्रक्रिया के अनुसार शबर स्वामी ने श्रेष्ठ पुरुषों का अनुगमन करना, प्याऊ लगाना, तालाब बनवाना, शिखा रखनी आदि कर्मों का निदर्शन मन्त्रब्राह्मण से दर्शाया है। यद्यपि शबर स्वामी द्वारा उद्धृत वचनों का तात्पर्य स्व-स्व प्रकरण में भिन्न है, तथापि उनसे इन अर्थों का भी विधान माना है।

इसी प्राचीन मार्ग का अनुसरण करते हुए भगवान् दयानन्द ने भी ऋग् और यजु के भाष्यों में प्रधानरूप से सर्वजनोपयोगी विषयों का प्रतिपादन किया है। भाष्यकार के इस प्रयत्न से 'वेद का मानव-जीवन के साथ सीधा सम्बन्ध है' यह विस्पष्ट रूप से ज्ञात हो जाता है। उदाहरण के लिये ऋग्वेद के प्रथम मण्डल के उषःसम्बन्धी सूक्तों के भाष्य को ही देखें। वहां उन्होंने

वाचकलुप्तोपमालङ्कारेण उषर्वत् स्त्रियः कैः कैः शुभैर्गुणैर्युक्ताः स्युरिति भाष्यकारो विस्तरेण वर्णयाञ्चकार। तद्यथा—

उषर्वद्धितसम्पादिके। ऋग्भाष्ये १।४८।१२॥

प्रभातवद् बहुगुणयुक्ते। ऋग्भाष्ये १।४८।११॥

उषवत् कल्याणनिमित्ते। ऋग्भाष्ये १।४९।१॥

उषर्वत् पुरुषार्थनिमित्ते। ऋग्भाष्ये १।४९।३॥

इदमस्य वेदभाष्यस्यान्येभ्यो वेदभाष्येभ्यो महद् वैशिष्ट्यमिति स्पष्टं शक्यते वक्तुम्।

इदं चान्यद् वैशिष्ट्यमन्येभ्यो वेदभाष्येभ्यः—

प्रायेण सर्व एव वेदभाष्यकारा मन्त्राणां व्याख्यानं लौकिककाव्य-व्याख्यानवद् अन्वयानुसारं विदधति। तेन मन्त्रार्थो यस्यां कस्यांचिदेव प्रक्रियायां संकुचितो भवति। अपि च बहुत्र अर्थ-प्राधान्यप्रदर्शनाय पादादौ वाक्यादौ वा प्रयुक्तानामुदात्तानामाख्यातानां वाक्यान्तेऽन्वयात् तेषां मुख्यार्थत्वं मृदितं भवति[1]। अतोऽयं भाष्यकारो विविधप्रक्रियानुगतविविधार्थनिदर्शनाय मुख्यार्थस्य चानाशाय निरुक्तादिप्राचीनमन्त्रव्याख्यानवत् मन्त्रपदानुसारं पदार्थं तावद् व्याचष्टे। पदार्थस्य पार्थक्येनोक्तत्वादत्र पूर्वोक्तौ दोषावपाकृतौ भवतः। साम्प्रतिका ये विपश्चितोऽन्वयबद्ध-मेवार्थं बोद्धुं समर्थास्तान् लक्ष्यीकृत्य भाष्यकारः पदार्थानन्तरं सान्वयमर्थमाह। ये नाम साधारणाः संस्कृतज्ञा न पदार्थं बोद्धुं समर्था न, चान्वयनिबद्धं तान् मन्त्राभिप्रायं बोधयितुमन्ते

---

लुप्तोपमादि अलङ्कारों से 'स्त्रियों को किन-किन शुभ गुणों से युक्त होना चाहिये' विषय का हृदयहारी वर्णन किया है। यह इस वेदभाष्य का अन्य वेद-भाष्यों से महान् अन्तर है।

अन्य वेदभाष्यों की अपेक्षा यह एक और वैशिष्ट्य इस भाष्य में हैं—

प्रायः करके सभी वेदभाष्यकार मन्त्रों की व्याख्या लौकिक काव्यों के अन्वयपूर्वक करते हैं। इस विधि में दोष हैं। प्रथम—मन्त्रार्थ किसी एक ही प्रक्रिया तक सीमित रह जाता है। दूसरा—मन्त्रों में अर्थ की प्रधानता की दृष्टि से पाद वा वाक्य के आरम्भ में प्रयुक्त उदात्त क्रियाओं का मुख्यार्थ प्रायः नष्ट हो जाता है।[2] इसलिये भगवान् दयानन्द निरुक्तादि प्राचीन मन्त्र-व्याख्याओं के समान अनेकार्थत्वद्योतन और मुख्यार्थ के रक्षण के लिये पहले मन्त्रपद-क्रमानुसार पदार्थ का निरूपण करते हैं। पदार्थ का पृथक् कथन होने से पूर्वोक्त दोनों दोष दूर हो जाते हैं। वर्त्तमान विद्वान् जो बिना अन्वय के मन्त्रार्थ-ज्ञान में असमर्थ हैं, उनके लिये भाष्यकार पदार्थ के पश्चात् अन्वय का निरूपण करते हैं। जो साधारण संस्कृतज्ञ अन्वय से भी मन्त्रार्थ-ज्ञान में समर्थ नहीं हो सकते

---

१. एतद्विषयेऽस्माभिः 'वैदिकस्वरमीमांसा' ग्रन्थस्य पञ्चमेऽध्याये ( पृष्ठ ६१-७२, सं० २ ), तथा 'वैदिक-छन्दोमीमांसा' ग्रन्थस्य पञ्चमेऽध्याये ( पृष्ठ ७८-८० ) च विस्तरेण प्रतिपादितं, तत्रैव द्रष्टव्यम्।

२. इस विषय का निरूपण हमारे 'वैदिकस्वरमीमांसा' के पञ्चमाध्याय (पृष्ठ ६१-७२, सं० २) तथा 'वैदिकछन्दोमीमांसा' के पञ्चमाध्याय (पृ० ७८–८०) में देखना चाहिये। वहां यह विषय विस्तार से लिखा है।

भावार्थं लिलेख । अपि च, यथा लौकिकग्रन्थेषु पठिष्यमाणः सन्दर्भः कमर्थं प्रतिपादयिष्यतीति निदर्शनाय सारल्येनार्थबोधनाय च प्रतिसन्दर्भं संदर्भशीर्षकमादायुपादीयते, तथैव भाष्यकारेणापि व्याख्यास्यमानो मन्त्रः कं विषयं ब्रूते इति निदर्शनाय प्रतिमन्त्रं मन्त्रपाठात् प्राक् तदर्थबोधकं शीर्षकं विन्यस्यते । एवमयं भाष्यकारः सर्वजनानां सुखेन मन्त्रार्थबोधाय चतुर्धा प्रयतितवान् ।

अपि च, प्राचीना वेदभाष्यकारा मन्त्रव्याख्याने यद्यपि तदीयमार्षं पदपाठमाद्रियन्ते, तथापि ते मन्त्रव्याख्यानात् पूर्वं तं नोपन्यस्यन्ति (मुद्रितेषु केषुचिद् भाष्येषु यः पदपाठनिर्देश उपलभ्यते, स सम्पादकेनोद्धृतो ज्ञेयः), परन्त्वयं भाष्कारः प्राचीनार्षपदपाठस्य रक्षार्थं प्रतिमन्त्रं पदपाठमपि समुद्धरति ।

संस्कृतभाष्यान्ते मन्त्रोक्तं व्यावहारिकं पारमार्थिकं वा विषयमसंस्कृतज्ञेभ्यो भाषामात्र-विज्ञेभ्योऽपि बोधयितुं भाषायामन्वयानुगतं पदार्थं भावार्थं च प्रत्यपादयत् । भारते वर्षे प्रथमतो वेदाभिप्रायस्य भाषायां निरूपणस्य श्रेयो भगवतैवावाप्तः ।

एतेन महता प्रयत्नेनेदं स्पष्टं ज्ञातुं शक्यते, यदयं भाष्यकारो वेदानां प्रचाराय लौकिकार्थ-जुष्टं पारमार्थिकार्थसमन्वितं च यद्भाष्यं रचितवान्, तस्मिन् स सम्पूर्णतया सफलीभूतः । अत एवै-तद्भाष्यकारसमकालिको वेदविद्याविचक्षणः सत्यव्रतसामश्रमी स्वीयैतरेयालोचनग्रन्थे सबहु-मानमाह--

---

उनको मन्त्र का अभिप्राय बताने के लिये भावार्थ दिखाते हैं । इतना ही नहीं, जैसे लौकिक ग्रन्थों में अगले सन्दर्भ में कहे जानेवाले अभिप्राय को सरलता से जताने के लिये आरम्भ में शीर्षक (हैडिंग) दिया जाता है, उसी प्रकार मन्त्र के भाष्य में प्रकट किये जानेवाले विषय को प्रत्येक मन्त्र के आरम्भ में दर्शाते हैं । इस प्रकार भाष्यकार ने सब प्रकार के संस्कृतज्ञों को सुख से मन्त्रार्थ का बोध कराने के लिये चार प्रकार से प्रयत्न किया है ।

**इस भाष्य में एक यह भी वैशिष्ट्य है**—सभी प्राचीन वेदभाष्यकार यद्यपि मन्त्र के प्राचीन प्रामाणिक पदपाठ के अनुसार प्रायः व्याख्यान करते हैं, तथापि वे उस पदपाठ को उपस्थित नहीं करते ( छपे हुए ग्रन्थों में जहां पदपाठ मिलता है, वह सम्पादकों द्वारा निर्दिष्ट है ) भगवान् दयानन्द प्रतिमन्त्र प्राचीन पदपाठ का भी निर्देश करते हैं ( इसमें जहां-जहां भेद मिलता है, वह प्रायः लिपिकर एवं मुद्रकों के प्रमाद से हुआ जानना चाहिये ) ।

जो लोग संस्कृत नहीं जानते वे वेद के अभिप्राय से सर्वथा वञ्चित न रह जावें, इसलिये अन्त में सान्वय पदार्थ और भावार्थ भाषा में भी कर दिया है । भारतवर्ष में वेद का हिन्दी भाषा में अर्थ प्रकाशित करने का प्रथम श्रेय भगवान् दयानन्द को ही प्राप्त है ।

इस महान् प्रयत्न से यह स्पष्ट विदित हो जाता है कि भगवान् भाष्यकार ने वेद के प्रचार के लिये व्यावहारिक और पारमार्थिक अर्थयुक्त जो भाष्य रचा है, उसमें वह पूर्णरूप से सफल हुए हैं । इसी कारण उनके समकालिक वैदिक विद्वान् **सत्यव्रत सामश्रमी** ने अपने **ऐतरेयालोचन** ग्रन्थ के पृष्ठ १२६ पर परम आदर युक्त शब्दों में उनको स्मरण किया है ।

वेदवैदिकमतप्रचारार्थोत्सर्गीकृत-जीवनेनाद्यतनसर्वार्यवर्येणास्मच्छ्रद्धाभाजनेनाचार्यदयानन्द-स्वामिना ····· पृ० १२६।

भाष्यकारस्यास्येदं वेदप्रचारलक्ष्यं लक्ष्यीकृत्य तदनुयायिभिर्बहुभिरार्यविद्वद्भिर्वेदानां संस्कृतप्राकृतोभयभाषानिबद्धं भाषामात्रनिबद्धं च व्याख्यानं, विभिन्नविषयाणां वा मन्त्राणां व्याख्यानमकारि। येन वेदप्रचारकार्ये महत्साहाय्यं समपद्यत।

बहवो विपश्चिता एतद्भाष्यविधातुर्महाभागस्य मुख्यं प्रयोजनं विलक्ष्यीकृत्य तद्व्याख्यान-सरणिं याथातथ्यतोऽनवगाह्य निरुक्तादिव्याख्यानप्रक्रियां चाननुनिशम्य सर्ववेदभाष्यकारोक्तं याज्ञिकार्थमत्रापश्यन्तो भाष्यमिदमप्रामाणिकमित्युद्घोषयन्ति। परं त्वहं मन्ये घोषणेयं भाष्यकारेण सह न्यायं न विदधाति।

## महाविदुषोऽरविन्दस्य दयानन्दीय-वेदविषयिका धारणा

अन्तेऽस्याः शताब्दयाः प्रसिद्धमनीषिणोऽरविन्दस्य दयानन्दसरस्वतीस्वामिनो वेदभाष्य-विषये या महत्त्वपूर्णा धारणा, तामुद्धृत्य विरम्यते। १९१६ खीस्ताब्दे 'वैदिक मैगजीन' पत्रिकायां तत्र भवान् अरविन्दः प्रतिपादयति—

[1]"दयानन्दीयवेदभाष्यस्याधारभूतान् तान् प्रसिद्धनियमान् उल्लिखामि, ये मयाऽवगताः—

सायणभाष्यं यथार्थं मन्यमाना दयानन्दसरस्वतीकृतस्य वेदभाष्यस्य विषये न किमपि वक्तुं समर्थाः। महाविदुषः सायणस्य वेदभाष्यमापाततो महत्त्वपूर्णं दृश्यमाणमपि वेदस्य यथार्थम् ऋज्वर्थ-समन्वितं नास्ति। तस्मिन् हि पूर्वकल्पितसिद्धान्ताग्रहपूर्वकं मन्त्राणामनृजुना पथा संगतिप्रदर्शनस्य

---

भगवान् दयानन्द सरस्वती के वेद प्रचार को लक्ष्य में रखकर उनके बहुत से अनुयायी विद्वानों ने संस्कृत वा हिन्दीभाषा में वेदों के भाष्य लिखे वा लिख रहे हैं। इस प्रयत्न से वेद के प्रचार में बहुत सहयोग प्राप्त हुआ।

बहुत से विद्वान् भगवान् दयानन्द के वेदभाष्य रचने के मुख्य प्रयोजन की उपेक्षा करके, उनकी भाष्य-सराणी का यथावत् आलोचन न करके, निरुक्त आदि प्राचीन प्रक्रिया को न समझ कर, अन्य भाष्यकारों द्वारा निर्दिष्ट याज्ञिक अर्थ का इसमें उल्लेख न पाकर इसे अप्रामाणिक कहने का साहस करते हैं। हमारा विचार है कि वे इस वेदभाष्यकार के साथ अन्याय करते हैं।

अन्त में इस शताब्दी के महान् विचारक योगीराज अरविन्द ने भगवान् दयानन्द कृत वेदभाष्य के सम्बन्ध में अपनी जो महत्त्वपूर्ण धारणा सन् १८१६ की 'वैदिक मैगजीन' पत्रिका में छापी उसे उद्धृत करके इस प्रकरण को समाप्त करते हैं—

"मैं दयानन्द के वेदभाष्य के आधाररूप उन प्रसिद्ध नियमों का उल्लेख करूंगा, जो मुझे समझ में आये हैं। सायण के भाष्य को ठीक समझनेवाले लोग दयानन्द सरस्वती के भाष्य के विषय में कुछ नहीं कह सकते। महा विद्वान् सायण का भाष्य ऊपर से महत्त्ववाला दिखाई देता हुआ भी वेद का यथार्थ और सीधा अर्थ नहीं है, उसमें पूर्वकल्पित सिद्धान्तों के साथ मन्त्रों की

---

१. मनीषिणोऽरविन्दस्य मूलभूतोऽङ्ग्रेजीभाषानिबद्धो लेखः परिशिष्टे द्रष्टव्यः।

प्रयत्नः कृतो दृश्यते । पाश्चात्या विद्वांसोऽपि दयानन्दीयभाष्यविषये न किमपि वक्तुं समर्थाः । तेषां वैदिकवाङ्मयपरिचयेन, शुभेच्छया अनुसन्धानशक्त्यापि चैकस्यां शताब्द्यां कृतो वेदार्थो न यथार्थः, यतस्तस्मिन् पूर्वापरसंगतेरभावो दृश्यते । अपि च, सन्दिग्धविषयान् प्रमाणीकृत्य सोऽर्थो विहितः ।

वेदार्थस्तु वेदेनैव कर्तव्यः । एतस्मिन् विषये दयानन्दसरस्वतीस्वामिनो विचारः सुस्पष्टः, तस्याधारशिला चाभेद्या । वैदिकसूक्तानि विभिन्नैर्नामभिरेकमीश्वरमेव संबोध्य गीतानि । विप्रा अर्थाद् ऋषय एकमेव परमात्मानम् अग्नीन्द्रयममातरिश्ववाय्वादिभिर्नामभिर्बहुधा वदन्ति । वैदिकर्षयः स्वधर्मविषये मॅक्समूलराथप्रभृतीनामपेक्षयाधिकं विदुः । अतएव वेदः स्पष्टं ब्रवीति—'एकस्यैव परमात्मनोऽनेकानि नामानि सन्ति' ।

वयमेतदपि विद्मो यदाधुनिका विद्वांस इमं विषयमनृजुना पथा (खींचातानी से) विपर्ययन्ति । ते ब्रुवन्ति—'सूक्तमिदं नूतनम्, एतादृशो महान् विचारः प्राचीननानामर्याणां मनसि प्रादुर्भवितुमयोग्यः' । एतद्विपरीतं वयं पश्यामो यद् वेदे बहूनि सूक्तानीममेव भावं प्रकटयन्ति—'अग्नावेव सर्वा अन्या देव्यः शक्तयो वर्तन्ते' इत्यादि । देवतानां विशेषणान्याप्येतादृशि सन्ति यानि परेशादन्यस्य भवितुं न समर्थानि । पाश्चात्या विपश्चितोऽस्माद् उद्विजन्ते—अहो एतादृशेण वेदार्थेन न भवितव्यम् । [प्रश्न उदेति] किं सत्यं स्वात्मानमाच्छादयेत् बुद्धिः स्वविषयं परित्यज्य प्रधावेत्, येनैकः सिद्धान्तः (क्रमिकविकासरूपः) प्रफुल्लेत् प्रफलेच्च । मया पृच्छ्यते ? यदस्मिन् विषये दयानन्दसरस्वती वेदस्य ऋज्वर्थं ब्रूते उत पाश्चात्या विद्वांसः ?

---

खींचातानी से संगति लगाने की चेष्टा की गई है । पाश्चात्य विद्वान् भी स्वामी दयानन्द के भाष्य के विषय में कुछ नहीं कह सकते । उनका परिचय शुभेच्छा, अनुसधान शक्ति से एक शताब्दी में किया गया अर्थ भी ठीक नहीं, क्योंकि इसमें पूर्वापर के सम्बन्ध का अभाव है, और संदिग्ध विषयों को प्रमाणभूत मानकर अर्थ किया गया है ।

वेदार्थ तो वेद से ही होना चाहिए । इस विषय में दयानन्द सरस्वती का विचार सुस्पष्ट है, उसकी आधारशिला अभेद्य है । वेद के सूक्त भिन्न-भिन्न नामों से एक ईश्वर को ही संबोधन करके गाये गये हैं । विप्र अर्थात् ऋषि एक परमात्मा को ही अग्नि, इन्द्र, यम, मातरिश्वा और वायु आदि नामों से बहुत प्रकार से कहते हैं । वैदिक ऋषि अपने धर्म के विषय में मैक्समूलर वा राथ की अपेक्षा अधिक जानते थे । अतः वेद स्पष्ट कहता है कि एक ईश्वर के ही अनेक नाम हैं ।

हम जानते हैं, आधुनिक विद्वान् किस प्रकार इस बात को खींचतान करके उलटते हैं । वे कहते हैं—'यह सूक्त नये काल का है, ऐसा ऊंचा विचार बहुत प्राचीन आर्य लोगों के मन में नहीं आ सकता था ।' इसके विपरीत हम देखते हैं कि वेद में सूक्तों पर सूक्त इसी भाव को बताते हैं कि—'अग्नि में ही सब दूसरी देवी शक्तियां हैं' इत्यादि । देवताओं के ऐसे विशेषण हैं, जो सिवाय ईश्वर के और किसी के हो ही नहीं सकते । पाश्चात्य इस बात से घबड़ाते हैं । अहो ! वेद का ऐसा अर्थ नहीं होना चाहिए । क्या सत्य अपने को छिपा ले, बुद्धि मैदान को छोड़कर भाग जाय,

**अस्तु, अस्यैकस्य प्रज्ञानेन, दयानन्दस्य मौलिकसिद्धान्तस्य स्वीकारेण, नहि नहि, वेदकर्षीणां प्रकृतविश्वासस्य** 'सर्वा देवता एकस्यैव महत आत्मनो नामानि' **इति विज्ञानेन वयं वेदस्य वास्तविकं भावं विज्ञातुं समर्था भवामः। सत्येवम्, वेदस्य तदेव तात्पर्यमधिगम्यते यद्दयानन्द-सरस्वत्या प्रकटीकृतम्। एतेन केवलो याज्ञिकार्थः सायणस्य बहुदेवतावादो वा भस्मसाज्जायते, पाश्चात्यानां केवलमन्तरिक्षाविलोकस्थदेवतानां सम्बन्धेन कृतोऽर्थोऽपि मृदितो भवति। तथा सति वेदः सत्यधर्मस्य ग्रन्थः, संसारस्यैकं पवित्रं पुस्तकं, श्रेष्ठस्यैकस्योच्चतमस्य च धर्मस्य दैवी वाक् सम्पद्यते।' इति**

**नमः परमर्षये नमः परमर्षये !!**

---

ताकि एक क्रमिक विकास का सिद्धान्त फल फूल सके ? मैं पूछता हूं, कि इस बात में दयानन्द सरस्वती वेद का सीधा अर्थ करता है, वा पाश्चात्य विद्वान् ?

बस एक के समझने से दयानन्द के इस मौलिक सिद्धान्त को मानने से, नहीं नहीं, वैदिक ऋषियों के इस विश्वास के जानने से कि **'सब देवता एक महान् आत्मा के नाम हैं'**, हम वेद का वास्तविक भाव जान लेते हैं। फिर बस वेद का वही तात्पर्य निकलता है जो दयानन्द सरस्वती ने इससे निकाला। **केवल याज्ञिक अर्थ या सायण का बहुदेवतावाद का अर्थ भस्मीभूत हो जाता है। पाश्चात्यों का केवल अन्तरिक्ष आदि लोकों के देवताओं के सम्बन्ध में किया हुआ अर्थ मिटिया मेट हो जाता है।** इनके स्थान में वेद एक वास्तविक धर्म ग्रन्थ, संसार का एक पवित्र पुस्तक और एक श्रेष्ठ और उच्च धर्म का दैवी शब्द हो जाता है।"

**वेदविद्या के पुनरुद्धारक परमर्षि दयानन्द के लिये नमो नमः !!**

एतत्संस्करणस्य सम्पादनकर्मण्याधारभूतानां

# हस्तलेखानां मुद्रित-संस्करणानां च परिचयः

भगवत्पाददयानन्दसरस्वतीस्वामिनो विरचितस्यास्यर्ग्वेदभाष्यस्य प्रस्तुतसंस्करणसम्पादन-कर्मणि येषां हस्तलेखानां मुद्रितानां च संस्करणानां साहाय्यं गृहीतम्, तेषां परिचयः प्रस्तूयते—

## ऋग्वेदादिभाष्यभूमिकाया आधारग्रन्थाः—

ऋग्वेदादिभाष्यभूमिकायाः षड् हस्तलेखाः सन्ति। अद्य यावदस्या नव संस्करणानि मुद्रितानि। पञ्चमषष्ठयोर्मध्ये शताब्दीसंस्करणनाम्नि संग्रहेऽप्यस्याः प्रकाशनमभूत्। एकमन्यतमं संस्करणं संस्कृतभागमात्रस्यापि स्वतन्त्ररूपेण प्रकाशितम्। एवं वैदिकयन्त्रालयमुद्रितान्याहत्यै-कादश संस्करणानि सन्ति।

**हस्तलेखाः**—अस्या भूमिकायाः सम्पूर्णा असम्पूर्णा उत्तरोत्तरं परिष्कृताः परिवृद्धाश्च षड् हस्तलेखा अजमेरनगरस्थ-परोपकारिणीसभायाः संग्रहे सुरक्षिताः सन्ति। तेषां संक्षिप्तपरिचयो-ऽधस्तात् प्रदीयते—

**प्रथमः**—अयं हस्तलेखः पूर्णो विद्यते। अत्र केवलं संस्कृतभाग एव दृश्यते, न भाषाभागः। इह भूमिकाया विषयाणां न्यूनाधिकता क्रमविपर्यासश्चोपलभ्यते।

पृष्ठसंख्या—अत्रादितः पञ्चत्रिंशदुत्तरशतसंख्या क्रमशो दृश्यते। अन्ते व्याकरणविषय-कान्यष्टौ पृष्ठानि प्रवर्धितान्युपलभ्यन्ते। एवमाहत्यास्य हस्तलेखस्य १३५+८+१४७ सप्तचत्वा-रिंशदधिकशतं पृष्ठानि सन्ति।

पङ्क्तयः—प्रतिपृष्ठम् उपद्वात्रिंशाः पङ्क्तयः।

अक्षराणि—प्रतिपङ्क्ति उपचतुर्विंशत्यक्षराणि।

कागदम्—प्रारम्भे कतिपयेषु पृष्ठेषु सूक्ष्मं नीलं सरेखं फुलस्कैपाकारं कागदं व्यवहृतम्, शेषभागे स्थूलं नीलम्, अन्तेऽष्टौ पृष्ठानि हस्तनिर्मितकागदस्य सन्ति।

लिपिकरः—आरम्भतः ६० षष्टिपृष्ठं यावदेकस्य लिपिकरस्य लेखो दृश्यते, ६३ त्रिषष्टि-पृष्ठतोऽन्तपर्यन्तं द्वितीयस्य, मध्ये ६१, ६२ पृष्ठयोरनयोर्भिन्नो लेखकः प्रतिभाति।

संशोधनम्—अस्मिन् कोशे कृष्णया रक्तया च मस्या ग्रन्थकारस्य स्वयंकृतं संशोधनमुप-लभ्यते। क्वचित् क्वचिद् अपपाठपरिमार्जनाय हरतालस्य प्रयोगोऽपि दृश्यते।

विशेषः—अस्मिन् कोशे केवलं संस्कृतभाग एव वर्तते, विषयाणां न्यूनाधिक्यं क्रमविपर्या-सश्च दृश्यते।

**द्वितीयः**—अयमपि कोशः पूर्णो वर्तते। अत्रापि केवलं संस्कृतभाग एवोपलभ्यते।

पृष्ठानि—अत्र १४० चत्वारिंशदधिकशतं पृष्ठानि।

पङ्क्तयः—प्रतिपृष्ठम् उपैकत्रिंशाः पङ्क्तयः।

अक्षराणि—प्रतिपङ्क्ति उपचतुर्विंशान्यक्षराणि।

कागदम्—३१ एकत्रिंशत्पृष्ठपर्यन्तं नीलं स्थूलं चिक्कणं सरेखं फुलस्केपाकारं कागदं वर्त्तते, अग्रे स्थूलं श्वेतं हस्तनिर्मितम्।

लिपिकरः—अस्य हस्तलेखस्य अक्षरविन्यासैर्द्वित्रा लिपिकाराः प्रतीयन्ते।

संशोधनम्—अस्मिन् कोशे रक्तमस्या कृष्णतूलिकया च ग्रन्थकारस्य स्वहस्तकृतं शोधनं दृश्यते। क्वचित् कृष्णमस्या लिपिकरकृतं संशोधनमप्युपलभ्यते। कृष्णतूलिकया कृतं शोधनमधिकतरं वर्तते।

विशेषः—प्रथमकोशवदेव।

**तृतीयः**—अयं हस्तलेखोऽपूर्णो वेदनित्यत्वप्रकरणान्त एव वर्तते।

पृष्ठानि—अत्र ५१ एकपञ्चाशत् पृष्ठानि।

पङ्क्तयः—प्रतिपृष्ठमुपषोडशः पङ्क्तयः।

अक्षराणि—प्रतिपङ्क्ति उपषट्त्रिंशान्यक्षराणि।

कागदम्—हस्तनिर्मितं स्थूलं श्वेतं कागदम्।

संशोधनम्—अत्र लिपिकरकृतमेव शोधनं दृश्यते; क्वचिद् हरितालस्यापि प्रयोगः।

विशेषः—अत्र संस्कृतप्राकृतयोर्[१] उभयोर्भाषयोर्लेखो दृश्यते।

**चतुर्थः**—अयं कोशो द्वयोर्भागयोर्विभक्त उपलभ्यते। उभौ भागौ मिलित्वाऽयं कोशः पूर्णतामेति।

'पूर्वभागः'—अयमारम्भतो गणितविद्यासमाप्तिपर्यन्तः। अत्र संस्कृतप्राकृतोभयभाषयोर्लेखः।

पृष्ठानि—अत्रारम्भतः १८० संख्या क्रमशो दृश्यते, परन्तु १४७ पृष्ठसंख्यातोऽग्रे दश पृष्ठानि पृथग् रूपेण परिवर्धितानि। तस्मादाहत्य १८०+१०=१९० नवत्युत्तरैकशतं पृष्ठानि सन्ति।

पङ्क्तयः—प्रतिपृष्ठमुपषोडशाः पङ्क्तयः।

अक्षराणि—प्रतिपङ्क्ति उपषट्त्रिंशान्यक्षराणि।

कागदम्—हस्तनिर्मितम्।

---

१. ग्रन्थकारो हिन्दीभाषार्थं प्राकृतभाषाऽऽर्यभाषापदे प्रयुनक्ति। तदनुसारमेवत्रापि हिन्दीभाषार्थे प्राकृतभाषापदस्य प्रयोगोऽस्माभिः कृतः।

संशोधनम्—कृष्णमस्या ग्रन्थकारस्य स्वयंकृतं शोधनं दृश्यते, अन्ते रक्तमस्याऽपि शोधनमुपलभ्यते ।

'अपरो भागः'—अयं भागो गणितविषयतोऽग्रे समाप्तिपर्यन्तः । अत्र केवलं प्राकृतभाषात्मक एव लेखः ।

पृष्ठानि—आरम्भतः १३८ पृष्ठसंख्या दृश्यते । चतुर्थी पृष्ठसंख्या द्विर्निर्दिश्यते । अतोऽत्र १३९ पृष्ठानि ज्ञेयानि ।

पङ्क्तयः—प्रतिपृष्ठमुपषड्विंशाः पङ्क्तयः ।

अक्षराणि—प्रतिपङ्क्ति उपषड्विंशान्यक्षराणि ।

कागदम्—नीलं फुलसकेपाकारं कागदम् ।

लिपिकरः—अस्मिन् भागे द्वित्राणां लेखकानां लेख उपलभ्यते ।

संशोधनम्—ग्रन्थकारेण कृष्णमस्या स्वहस्तकृतं शोधनमन्तपर्यन्तं विद्यते ।

**पञ्चमः**—अयमपि हस्तलेखो द्वयोः खण्डयोः पूर्णतां गतः ।

'पूर्वभागे'—पृष्ठानि—आरम्भतः १०९ पृष्ठपर्यन्तानि ।

पङ्क्तयः—प्रतिपृष्ठमुपदशाः पङ्क्तयः ।

अक्षराणि—प्रतिपङ्क्ति उपद्वाचत्वारिंशान्यक्षराणि ।

कागदम्—स्थूलं श्वेतं हस्तनिर्मितम् ।

लिपिकरः—अनेकलेखकानां लेखोऽत्र दृश्यते ।

संशोधनम्—ग्रन्थकारेण स्वयं कृतं शोधनं सर्वत्र वर्तते ।

'अपरभागे'— पृष्ठानि— अत्र ११२ संख्यात् आरभ्य ३२२ संख्यान्तानि ।

पङ्क्तयः—प्रतिपृष्ठमुपषड्विंशाः पङ्क्तयः ।

अक्षराणि—प्रतिपङ्क्ति द्वाचत्वारिंशान्यक्षराणि ।

कागदम्—नीलं सरेखं फुलसकेपाकारकम् ।

लिपिकः—बहूनां लेखकानां लेखोऽत्रोपलभ्यते ।

संशोधनम्—आदित आरभ्यान्तपर्यन्तं ग्रन्थकारेण स्वयंकृतं शोधनमत्र बाहुल्येनोपलभ्यते ।

**षष्ठः**—कोशोऽयमादित आरभ्यान्तपर्यन्तं पूर्णो वर्तते ।

पृष्ठानि—आदित आरभ्य ४१० संख्यापर्यन्तानि ।

पङ्क्तयः—प्रतिपृष्ठमुपसप्तविंशाः पङ्क्तयः ।

अक्षराणि—प्रतिपङ्क्ति उपचतुर्विंशान्यक्षराणि ।

कागदम्—नीलं स्थूलं फुलसकेपाकारम् ।

लिपिकरः—अत्रानेकलेखकानां लेखो दृश्यते ।

संशोधनम्—अस्मिन् कोशे ग्रन्थकारेण स्वहस्तेन कृतं शोधनं पर्याप्तमुपलभ्यते, लिपिकर कृतमप्यल्पीयः शोधनं दृश्यते ।

**विशेषः**—उपरिनिर्दिष्टाः कोशा उत्तरोत्तरं क्रमशः परिवर्धिताः परिष्कृताश्च सन्ति। भूमिकाया यदाधारेण मुद्रणमभूत् स कोशोऽत्र संग्रहे न दृश्यते। सम्भाव्यते यत्रास्या मुद्रणमभूत् ततः स हस्तलेखो न प्राप्तः ।

**मुद्रितानि संस्करणानि**—अस्या भूमिकायास्त्रिभिः प्रकाशकैः प्रकाशितानि संस्करणान्युपलभ्यन्ते । तत्र वैदिकयन्त्रालयात् प्रकाशितान्येकादशसंस्कराणि, गोविन्दरामहासानन्द (कलकत्ता) द्वारा वेदतत्त्वप्रकाशनामकं संस्करणम्, आर्यसाहित्यमण्डल ( अजमेर ) द्वारा प्रकाशितानि त्रीणि संस्करणानि । एव्वस्माभिः सम्पादनकार्ये वैदिकयन्त्रालयमुद्रितानि गोविन्दरामहासानन्दप्रकाशितं चाहृत्य द्वादश संस्करणान्युपयुक्तानि । तेषामयं संक्षिप्तः परिचयः—

**प्रथम संस्करणम्**—अस्य संस्करणस्यादितः ३३३ पृष्ठानि काशीस्थे 'लाजरसकम्पनी नाम्नि' यन्त्रालये मुद्रितानि, शिष्टानि ३७६ संख्यापर्यन्तानि शुद्धिपत्रविषयसूचीविषयकान्यष्टौ पृष्ठानि च मुम्बईनगरस्थे निर्णयसागरयन्त्रालये मुद्रितानि। संस्करणमिदं मासिकपुस्तिकारूपेण चतुर्विंशतिपृष्ठात्मकेषु षोडशाङ्केषु १९३४ वैक्रमाब्दस्य चैत्रमासादारभ्य १९३५ वैक्रमाब्दस्य ( १५-१६ अङ्कावेकीकृत्य ) ज्येष्ठमासं यावत् पञ्चदशमासेषु प्राकाश्यं गतम् ।

**द्वितीय-तृतीय-चतुर्थ-पञ्चम-संस्कराणि**—इमानि संस्करणानि क्रमशः १९४९, १९६१, १९७०, १९७६ वैक्रमाब्देषु अजमेरनगरस्थे वैदिकयन्त्रालये मुद्रितानि ।

प्रथमसंस्करणे भाषाविषयिकायाः सामान्या अशुद्धय आसन्, तासां मध्ये कासांचित् शोधनं प्रथमसंस्करणे शुद्धिपत्रे कृतमभूत्। तच्छोधनसरणिमनुसृत्य द्वितीये संस्करणे भाषायाः शोधनं संशोधकेन विहितम् । संस्कृतपाठे पञ्चषाणि नूत्नान्यपि शोधनान्युपलभ्यन्ते। पञ्चमसंस्करणं यावत् द्वितीयसंस्करणवदेव उपलभ्यते ।

**शताब्दी-संस्करणम्**—१९८२ वैक्रमाब्दे परोपकारिणीसभया ग्रन्थकारकृतानां केषांचिद् ग्रन्थानां द्वयोर्भागयोः प्रकाशनं विहितम् । तत्र द्वितीये भागे भूमिकाया अस्या मुद्रणमपि कृतम्। अस्य संस्करणस्य सम्पादनं गुरुकुल-कांगड़ीस्थेन श्रीपण्डितविश्वनाथवेदोपाध्यायेन विहितम् (अत्र सम्पादकस्य नामनिर्देशो नोपलभ्यते)। संस्करणमिदं प्रथमसंस्करणानुरूपमेव मुद्रितम्। सम्पादकेन प्रथमसंस्करणान्ते शुद्धिपत्रे निर्दशितानि संशोधनान्यपि न दृष्टानि। तेन संस्कृतभागे तेऽपपाठा ये प्रथमसंस्करणस्थे शोधनपत्रे शोधिता अभूवन्, अत्र ते पुनः प्रविष्टिमलभन्त। अत्र सम्पादकप्रत्ताः कतिपया नूतनाष्टिप्पण्योऽपि दृश्यन्ते ।

**षष्ठ-सप्तम-संस्करणे**—इमे संस्करणे शताब्दीसंस्करणप्रतिलिपिरूपे स्तः ।

**अष्टमं संस्करणम्**—अस्य सम्पादन श्रीपण्डित महेन्द्रशास्त्रिणा विहितम् । संस्करणमिदं पूर्वापेक्षया सुन्दरं परिष्कृतं च वर्तते । अत्राऽनेके नूतनाः सन्दर्भविभागाः कृताः, बहूनामुद्धरणानां मूलस्थाननिर्देशश्चोट्टङ्कितः ।

**नवमं संस्करणम्**—अस्य सम्पादनं श्रीपण्डितधर्मचन्देन कोठारीत्युपनामकेन विहितः। अत्र बह्व्यष्टिप्पण्यो हस्तलेखपाठविषयिकाः पाठशोधननिर्देशिकाश्च संवेशिताः। बहुत्र चतुरस्रे [ ] कोष्ठके त्रुटितपदानि निर्दशितानि। द्वित्रेषु स्थानेषु पूर्वसंस्करणेष्वस्थाने मुद्रिताः पाठा यथास्थानं स्थापिता। पूर्वसंस्करणेषूद्धरणस्थानिर्देशे यत्र यत्रापूर्णताऽऽसीत् तत्र-तत्र चतुरस्रे कोष्ठके पूर्णता विहिता। प्रथमसंस्करणस्थशुद्धिपत्रानवलोकनमूला येऽपपाठाः पूर्वसंस्करणेषु प्रविष्टिं प्रापुस्तेषां पुनः शोधनं विहितम्। एवमिदं संस्करणं यद्यपि पूर्वसंस्करणेभ्यो वैशिष्ट्यमलभत तथाऽप्यत्र बह्व्यष्टिप्पण्योऽनावश्यकाः प्रदत्ताः। तासु काश्चिदस्य महानुभावस्य व्याकरणाज्ञानसूचिका अपि दृश्यन्ते ( यथा २५७ तमे पृष्ठे द्वितीया टिप्पणी )। एतासां यथास्थानं टिप्पण्यामस्माभिर्निर्देशः कृतः।

**संस्कृतमात्रं संस्करणम्**—इदं संस्करणम् १८×२०=अष्टपृष्ठाकारे १९९१ वैक्रमाब्दे प्रकाशिततम्। अस्मिन् संस्करणे केचन पाठाः परिवर्तिता दृश्यन्ते। तेषां निर्देशोऽस्माभिर्यथास्थानं कृतः ( यथा १६८ तमे पृष्ठे द्वितीय टिप्पण्याम्)।

**गोविन्दरामहासानन्द-संस्करणम्**—अस्य सम्पादनं श्रीपण्डितसुखदेवविद्यावाचस्पतिना कृतम्। अत्र बहुत्र सन्दर्भविभागः, प्रश्नोत्तराणां पार्थक्येन निर्देशः, टिप्पण्यामस्पष्टपाठानां स्पष्टीकरणम्, भाषार्थपरिमार्जनरूपं च चतुःप्रकारकं वैशिष्ट्यं दृश्यते। अस्य प्रकाशनम् १९९१ वैक्रमाब्देऽभवत्।

**अस्मदीयं संस्करणम्**—पूर्वोक्तानि सर्वाण्यपि संस्करणानि यथावत् पर्यालोच्य, यथामति संशोध्य, पूर्वमुद्रितान् अपपाठान् दूरीकृत्य, अस्थाने मुद्रितान् पाठान् यथास्थानं प्रापय्य, भाषार्थं चाल्पतमपरिष्कारेण संस्कृतपाठानुसारिणं विधायोपसार्धसहस्रटिप्पणीभिश्चालंकृत्य अस्माभिः २०२४ वैक्रमाब्दे बृहदाकारयुतं स्थूलाक्षरमुद्रितं संस्करणं प्रकाशितम्। अत्र यत्सम्पादकीयं कार्यं तद्विस्तरोऽन्यत्र सम्पादकीये लेखे द्रष्टव्यः।

## ऋग्वेदभाष्यस्याधारभूता ग्रन्थाः—

अस्मिन संस्करणे ऋग्वेदभाष्यस्य आधारभूता ये हस्तलेखा मुद्रितग्रन्थाश्च तेषां परिचयः—

हस्तलेखाः—ऋग्वेदभाष्यस्य त्रयोहस्तलेखाः परोपकारिणीसभायाः सग्रहे विद्यन्ते। अस्य मुद्रणं नवसु भागेष्वभूत्। तत्र केषाचिद् भागानां त्रीणि संस्कराणि केषांचित् चत्वारि संस्करणन्यद्य यावन्मुद्रितानि।

प्रथमो हस्तलेखः—अयं पाण्डुलिपि ( रफ कापी ) स्वरूप आदित आरभ्य सप्तम-मण्डलस्यैकषष्टितमसूक्तस्य द्वितीयमन्त्रपर्यन्तं वर्तते। अस्य विवरणम्—

**प्रथमं मण्डलम्**—आदित आरभ्य ४२४ पृष्ठ पर्यन्ते भागे १—३२ सूक्तानि। ४२५ पृष्ठत आरभ्य ६२१ पृष्ठान्ते ३३-३९ सूक्तभाष्यात्मको भागो ग्रन्थस्य नाशान्नोपलभ्यते। ६२२ पृष्ठत आरभ्य २५२२ पृष्ठात्मकेभागे ४०—१९१ सूक्तानि सन्ति। अत्र २५२२ पृष्ठेषु ९७ पृष्ठानि नष्टानि, शिष्टानि २४१९ पृष्ठान्युपलभ्यन्ते।

**द्वितीयं मण्डलम्**—अयं भागः २५२३ पृष्ठत आरभ्य २९५६ पृष्ठपर्यन्त सम्पूर्णो लभ्यते। अत्र ४३० पृष्ठानि सन्ति।

**तृतीयं मण्डलम्**—अयं भागः २६५७ पृष्ठत आरभ्य ३०३८ पृष्ठान्तः, तथा प्रथमसंख्यातः पुनरारभ्य ५५७ पृष्ठान्तः पूर्णो विद्यते। अत एवात्र ८२+५५७ सम्मेल्य ६३९ पृष्ठानि सन्ति।

**चतुर्थं मण्डलम्**—अयं भागः ५५८ पृष्ठत आरभ्य ९४८ पृष्ठान्तः (शुद्धा संख्या ११३८ ज्ञेया) पूर्णो वर्तते।

विशेषः—अत्र लेखकेन ६७० पृष्ठसंख्यास्थाने प्रमादात् ७८० पृष्ठसंख्या निर्दिष्टा। इयं १९० पृष्ठसंख्याया अशुद्धिरुत्तरत्र षष्ठमडण्लं यावद् वर्तते। केनचित् शोधकेन रक्तमस्या शुद्धा पृष्ठसंख्या-निवेशरूपो यत्नो व्यधायि, परन्तु स प्रयत्नः ८९२ पृष्ठं प्राप्य विरमते। अतोऽस्मिन् भागे ३९१+१९०=५८१ पृष्ठानि सन्ति।

**पञ्चमं मण्डलम्**—अयं भागः ९४९ पृष्ठत आरभ्य १६९३ पृष्ठपर्यन्तः सम्पूर्णो वर्तते। अत्र ७४५ पृष्ठानि सन्ति।

**षष्ठं मण्डलम्**—अयं भागः १६९४ पृष्ठत आरभ्य २५४५ पृष्ठान्तः पूर्ण उपलभ्यते। अत्र ८५२ पृष्ठानि सन्ति।

**सप्तमं मण्डलम्**—अयं भाग प्रथमसंख्यात आरभ्य ५०५ संख्यान्तेषु पृष्ठेषु वर्तते।

**लिपिकराः** अस्मिन् हस्तलेखे आदित आरभ्यान्तपर्यन्तं बहूनां लिपिकराणां विनियोगो दृश्यते।

**कागदम्**—अस्मिन् कोशे बहुविधं फुलस्केपाकारं कागदं प्रयुक्तमुपलभ्यते। क्वचिद्धस्तिमुद्राङ्कितं सूक्ष्मं, क्वचित् स्थूलं, क्वचित्सरेखं, क्वचिदरेखं कागदं वर्तते। हस्तिमुद्राङ्कितेषु कागदेषु १८७७—१८८२ खीस्ताब्द-निर्देश उपलभ्यते।

**संशोधनम्**—अस्मिन् हस्तलेखे ग्रन्थकारेण स्वहस्तेन कृतं शोधनं आरम्भतः प्रथममण्डलस्य १००तमसूक्तपर्यन्तं संस्कृतप्राकृतयोरुभयोर्भाषयोर्दृश्यते। अग्रे द्वितीयमण्डलान्तपर्यन्तं केवलं संस्कृतभाग एवोपलभ्यते। तदप्युत्तरत्र क्रमशो ह्रसति। द्वितीये मण्डले मन्त्रार्थशीर्षकं '......... **विषयमाह**' ग्रन्थकारस्य स्वहस्तलिखितो दृश्यते। तृतीये मण्डले पञ्चदशसूक्तस्य द्वितीयमन्त्रपर्यन्तं ग्रन्थकारस्य स्वयं कृतं शोधनं क्वचित् क्वचिदुपलभ्यते। इतोऽग्रे ३, १५, ३ - ७, ६१, २ पर्यन्ते समस्ते हस्तलेखे ग्रन्थकारकृतं शोधनं नोपलभ्यते।

**विशेषः**—ऋ० ३, १५, ३ मन्त्रत आरभ्य पञ्चममण्डलस्य पूर्वार्ध-(१३३७ पृष्ठ)पर्यन्तं मन्त्रार्थशीर्षकरूपः '... विषयमाह' पाठो न दृश्यते। अतः प्रतीयते मुद्रिते ग्रन्थे एतावति भागे यन्मन्त्रार्थशीर्षकमुपलभ्यते, तत् शुद्धप्रति (प्रेसकापी) विधातृभिः पण्डितैर्विन्यस्तम्। अत एवास्मिन् भागे मन्त्रार्थशीर्षकं क्वचिन्मन्त्रार्थतो विसङ्गतमपि दृश्यते। शिष्टे पञ्चमे सम्पूर्णे च षष्ठे मण्डले मन्त्रार्थशीर्षकमुपलभ्यते, परन्तु तदपि न तल्लिपिकर-हस्तविन्यस्तं येन भाष्यं लिखितम्। सम्भाव्यतेऽस्मिन् भागेऽपि मन्त्रार्थशीर्षकं पश्चात् पण्डितैः प्रवर्धितम्। यद्वा—ग्रन्थकारेणैवान्यलिपिकरहस्तेन लेखायितम्।

द्वितीयो हस्तलेखः—अयं पूर्वस्य पाण्डुलिप्यात्मकस्य कोशस्य संशोधितप्रतिरूपः। अयं कोश आदित आरभ्य प्रथममण्डलस्य ७७ सूक्तपर्यन्तमेवास्ति।

पृष्ठानि—अत्र प्रथमत आरभ्य १०६८ संख्यामितानि पृष्ठानि ।

कागदम्—हस्तिमुद्राङ्कितं १८७७ खीताब्दनिर्दिष्टं वर्तते ।

संशोधनम्—अत्र ग्रन्थकारेण स्वयंकृतानि भूयांसि शोधनानि दृश्यन्ते ।

तृतीयो हस्तलेखः—अयं ग्रन्थप्रकाशनार्थं मुद्रणालये प्रेषितः संशोधितः कोशः ।

पृष्ठानि—अत्र प्रथमत आरभ्य २००६ पर्यन्ता पृष्ठसंख्या क्रमशो दृश्यते । तदनु पृष्ठसंख्या ६८० संख्यातः प्रारब्धा सती ८६४ संख्यासु पर्यवसिता (अत्र ६८० संख्यातः पृष्ठसंख्याया आरम्भस्य कारणं न ज्ञायते) । तदनन्तरं पुनः प्रथमसंख्यात आरभ्यापञ्चममण्डलान्तं १३२८ संख्योपलभ्यते । षष्ठमण्डले नवीना पृष्ठसंख्या प्रारभ्यते । सा च मण्डलेन सह १७३५ संख्यासु समाप्यते । सप्तमण्डले पुनर्नवीना पृष्ठसंख्या दृश्यते । सा एकषष्टितमस्य द्वितीयमन्त्रभाष्यपर्यन्तं (यावद् भाष्यं ग्रन्थकृता विहितम् ) वर्तते ।

कागदम्—अस्मिन् हस्तलेखे बहुप्रकारक कागदं व्यवह्रियते ।

संशोधनम्—अस्मिन् कोशे प्रथममण्डलस्य १०० शतसूक्तानि यावत् ग्रन्थकारेण स्वहस्तेन कृतानि भूयांसि शोधनानि दृश्यन्ते । तदनु ११४ सूक्तपर्यन्तं क्वचित् क्वचिदल्पीयांस्येव शोधनानि ग्रन्थकारस्य प्रतीयन्ते ।

प्रथममण्डलस्य ११४ सूक्तानन्तरमाग्रन्थान्तं रक्तमस्या कृतानि संशोधनानि पण्डितभीमसेन-ज्वालादत्तयोः कृतानि सन्ति ।

## ग्रन्थकारस्य निर्वाणकाले तदीयवेदभाष्य-हस्तलेखानां स्थितिः

भगवद्दयानन्दसरस्वतीपादस्य निर्वाणकाले ऋग्यजुर्वेदभाष्ययोः का स्थितिरिति परिज्ञाय तद्विवरणप्रस्तुतीकरणाय परोपकारिणीसभायास्तात्कालिकेन मन्त्रिणा पण्डितमोहनलालविष्णुलाल-पण्ड्याभिधेयेन भगवत्पादान्तेवासी ब्रह्मचारी रामानन्दो नियुक्तः । तेन वेदभाष्यहस्तलेखानां विवरणात्मकं यत्पत्रं परोपकारिणीसभामन्त्रिणः पुरस्तादुपस्थापितं, तदित्थं वर्तते—

## रामानन्दब्रह्मचारिणः पत्रम्

**श्रीयुतमाननीयानेकशुभगुणगणालंकृतब्रह्मकर्मसमर्थश्रीमत्पंडितवर्यमोहनलालविष्णुलालपण्ड्या-भिधेयेभ्यितो रामानन्दब्रह्मचारिणोऽनेकधाप्रणतयः समुल्लसन्तुतरामिति ।**

**भगवन्, आपने जो मुझे श्रीयुत परमहंस परिव्राजकाचार्यवर्य्य श्री १०८ श्रीमद्दयानन्द-सरस्वती स्वामीजी कृत ऋग्वेदादिभाष्य के विषयों की परीक्षा करके श्रीमती परोपकारिणी सभा में निवेदन करने के लिये (एक सारांश) बनाने की प्रेरणा की थी, सो आपकी आज्ञानुसार उसको बनाकर आपकी सेवा में समर्पित कर्ता हूं, अवलोकन कीजियेगा ।**

**इत्यलं प्रशंसनीयबुद्धिमद्वर्य्येषु**

**मिति पौष कृष्ण ३,**
**रवि सम्वत् १६४०**

**शुभचिन्तक**
**रामानन्द ब्रह्मचारी**

### ऋग्वेद भाष्य

श्रीयुत परमहंस परिव्राजकाचार्य्यवर्य्य श्री१०८श्रीमद्दयानन्द सरस्वतीजी कृत ऋग्वेदादिभाष्य की व्यवस्था निम्नलिखित प्रमाणे जानना चाहिये। अर्थात्—

ऋग्वेद का भाष्य १ मण्डल के आरम्भ से ७ मंडल के ६२वें[1] सूक्त के २ मन्त्र तक रचा गया।

१ मंडल के आरम्भ से ८६ सूक्त के ५ मन्त्र तक मुद्रित हो चुका, अर्थात् ५०+५१ अङ्क तक।

१ मंडल ८६ सूक्त के ६ मन्त्र से ६१ सूक्त के ३ मन्त्र तक की शुद्ध प्रति छपने में, शेष मुन्शी समर्थवानजी के पास वैदिक यन्त्रालय प्रयाग में हैं।

१ प्रथ[म] मंडल के ६१ सूक्त के ४ मन्त्र से १ प्रथम मंडल के ११४वें सूक्त के ५वें मन्त्र तक की शुद्ध प्रति लिखी हुई छपाने योग्य है।

१ प्रथम मंडल के ११४वें सूक्त के ६ मन्त्र से १ मंडल के १२४वें सूक्त के १२वें मन्त्र तक की भाषा बनी हुई है।

१ मंडल के ·····मन्त्र से १ मंडल के ·· सूक्त की समाप्ति पर्यन्त का भाष्य पं० ज्वालादत्ताजी [के पास] भाषा बनाने के लिये वैदिक यन्त्रालय प्रयाग में है।

१ मंडल के १४४वें सूक्त से ७ मंडल के ६२वें[1] सूक्त के २ मन्त्र तक का भाष्य अशुद्ध संस्कृत[2] में बना हुआ है।

१ मंडल के ६१वें सूक्त के ५वें मन्त्र से १ मंडल के ११४वें सूक्त के ५वें मन्त्र के ऋग्वेद-भाष्य के [3]रद्दी पत्रे हैं, अर्थात् शुद्ध प्रति हो गई।

### यजुर्वेद भाष्य

यजुर्वेद का भाष्य सम्पूर्ण हो गया, अर्थात् ४०वें अध्याय की समाप्ति पर्यन्त रचा।

१५वें अध्याय के ११ मन्त्र तक का भाष्य मुद्रित हो गया, अर्थात् ५० और ५१ अङ्क तक।

१५वें अध्याय के १२वें मन्त्र से लेकर २१वें मन्त्र तक की शुद्ध प्रति छपने में, शेष मुन्शी समर्थवानजी के पास वैदिक यन्त्रालय प्रयाग में हैं।

१५वें अध्याय के २२वें मन्त्र से २३वें अध्याय के ४६ मन्त्र तक छपने योग्य शुद्ध प्रति लिखी हुई है।

२३वें अध्याय के ५०वें मन्त्र की भाषा बनी हुई शुद्ध प्रति में लिखने योग्य है।

२३वें अध्याय के ५१वें मन्त्र से ६५ मन्त्र तक, अर्थात् अध्याय की समाप्ति पर्यन्त की भाषा नहीं बनी।

२४वें अध्याय·········—अध्याय तक का भाष्य भाषा बनाने के लिये पं० ज्वालादत्त जी के पास वैदिक यन्त्रालय प्रयाग में है।

२७वें अध्याय के आरम्भ से ४०वें अध्याय की समाप्ति-पर्यन्त का अशुद्ध संस्कृत[2] भाष्य बना हुआ है, अर्थात् बिना शुधी संस्कृत है।

१३वें अध्याय के २१वें मन्त्र से २३वें अध्याय के ४६वें मन्त्र तक के [3]रद्दी पत्रे हैं, अर्थात् शुद्ध [प्रति] हो गई।

मिती पौष कृष्ण ३ रवि सं० १९४०

---

१. अत्र शुद्ध. पाठः '६१ वें सूक्त' इत्येवं ज्ञेयः २. अत्र प्रयुक्तयोः 'अशुद्ध संस्कृत' पदयोस्तात्पर्यं पाण्डुलिपि (रफ कापी) रूपेण लिखितः तादृशः संस्कृत-पाठो ज्ञेयो, यस्य ग्रन्थकारेण पुनः शोधनं न कृतम्।

३. अत्र 'रद्दी पत्रे हैं, अर्थात् शुद्ध प्रति हो गई' इत्यत्र 'रद्दी पत्रे'=पाण्डुलिपिरूपाणि, शुद्ध प्रति= मुद्रणार्थं प्रेषयितुं योग्या प्रतिरित्यर्थो द्रष्टव्यः।

रामानन्दब्रह्मचारिण इदं पत्रं १८८३ ख्रैस्ताब्दस्य २८ दिसम्बरे परोपकारिणी सभाया: प्रथमेऽधिवेशने सभाया मन्त्रिणोपस्थापितम् । एतद्विषये सभाया अधिवेशनानां मुद्रिते विवरणे तृतीयपृष्ठे पञ्चमप्रस्तावे एवमुपलभ्यते—

'एक पत्र इस विषय पर पढ़ा गया कि स्वर्गवासी स्वामीजी ऋक् और यजुर्वेदभाष्य का कौन-कौनसा भाग समाप्त और असमाप्त छोड़ गये हैं। प्रतीत होता है कि समग्र यजुर्वेद का भाष्य स्वामीजी पूर्ण कर गये, परन्तु बहुत थोड़ा भाग उसका अब तक मुद्रित हुआ है, और ऋग्वेद का सप्तम मण्डल तक।

सबकी सम्मति से यह स्वीकृत हुआ कि पण्डित भीमसेन तथा ज्वालादत्त प्रूफ शोधने और संस्कृतभाष्य का हिन्दी अनुवाद करने के कार्य पर नियत किये जायें, और प्रति व्यक्ति २५) पच्चीस मुद्रा मासिक वेतन मिले....।'

पूर्वनिर्दिष्टेन रामानन्दब्रह्मचारिण: पत्रेण ग्रन्थकारस्य निर्वाणकालेऽस्य ऋग्वेदभाष्यस्य का स्थितिरासीदिति याथातथ्यतो विज्ञायते। एतत्पत्रस्य प्रामाण्यमपि परोपकारिणीसभाया: प्रथमाधिवेशनस्य पूर्वनिर्दिष्टात् प्रस्तावात् विस्पष्टम्। उक्तप्रस्तावेनेदमपि व्यक्तं यद् भगवतो दयानन्दस्य निर्वाणकाले ऋग्वेदभाष्यस्य प्रथममण्डलस्य १४४ सूक्तादारभ्याग्रन्थान्तं पाण्डुलिपिरेवासीत्, यस्य भगवता पुन: शोधनमपि नाकारि। एतावतो भागस्य पाण्डुलिप्यात्मक: संस्कृतपाठोऽपि भीमसेनज्वालादत्ताभ्यां संशोधित:, तस्य भाषानुवादश्च कृत:।

## ऋग्वेदभाष्यस्य मुद्रितानि संस्करणानि

**प्रथमं संस्करणम्**—ऋग्वेदभाष्यस्य प्रथमं संस्करणं मासिकरूपेष्वङ्केषु १९३५ वैक्रमाब्दस्य श्रावणमासत आरभ्य १९५६ वैक्रमाब्दस्य आषाढमासपर्यन्तं द्वाविंशतिवर्षेषु पूर्तिमगात्। अस्य १३ त्रयोदशाङ्का मुम्बइस्थे निर्णयसागरयन्त्रालये मुद्रिता:। तदनन्तरं समग्र: शिष्टो भागो ग्रन्थकारेण स्थापिते वैदिकयन्त्रालये मुद्रित:।

**द्वितीयं संस्करणम्**—अस्य भाष्यस्य द्वितीयसंस्करणस्य प्रथमो भाग: (ऋ० १।१-६१) १९७१ वैक्रमाब्दे प्रकाशित:। इदं प्रथमसंस्करणस्य प्रतिलिपिरूपमेव।

**तृतीयं संस्करणम्**—अस्य संस्करणस्य प्रथमो भाग: (ऋ० १।१-६१) २०११ वैक्रमाब्दे मुद्रित:। अत्र उद्धृतानां प्रमाणानां पाठोऽन्यमुद्राक्षरेषु धृत:, बहवो नूतना: सन्दर्भविभागा: कृता:।

**चतुर्थं संस्करणम्**—अस्य प्रथमो भाग: (ऋ० १।१-६१) २०२० वैक्रमाब्दे प्रकाश्यं गत:। अस्मिन् संस्करणे केचनापपाठा: शोधिता:, क्वचित् भाष्ये त्रुटितांशो चतुरस्रे [ ] कोष्ठके परिवर्धित:।

एषु संस्करणेषु मन्त्रपाठे पदपाठे भाष्ये च बहवो हस्तलेखे दृश्यमाना लिपिकरादिदोषदुष्टा अपपाठा मुद्रणदोषाश्च समानरूपेणैव प्रायेणोपलभ्यन्ते।

❦

# सम्पादकीयम्

येषां हस्तलेखानां मुद्रित संस्करणानां च साहाय्येन ऋग्वेदादिभाष्यभूमिकया सनाथीकृतस्य भगवद्दयानन्दसरस्वतीस्वामिकृतस्यर्ग्वेदभाष्यस्यास्माभिः सम्पादनं कृतं, तेषां विवरणं पुरस्तात् प्रस्तुतम् । इदानीं स्वसम्पादन-कार्यविषये किञ्चिद् उच्यते—

भगवत्पाददयानन्दसरस्वतीकृतं बह्वर्थविभूषितं सर्वलोकोपकारक्षमं दिव्यमपीदं वेदभाष्यं लिपिकराणां मुद्रणकर्तॄणां च प्रमादात् यत्र तत्र त्रुटिपूर्णं पूर्वापरप्रसङ्गविरहितं बहुधाऽशुद्धमुद्रितमुपलभ्यते । भाषानुवादोऽपि लिपिकराणामनुवादकानां च प्रमादाद् बह्वन्यथाभूतमुपलभ्यते । एतेषां बहुविधदोषाणां निदर्शनायात्रैकैकमुदाहरणमुपन्यस्यते । तत्र तावत् संस्कृतभाष्ये—

१. लिपिकर-प्रमादात् पाठत्यागः । यथा—

ऋ० १।३।११ मन्त्रभाष्ये '(सरस्वती) वाणी' पदार्थो नोपलभ्यते । अयं पाठः ककोश आसीत्, परन्तु शुद्धप्रतिलिपिकर्त्रा प्रमादात् त्यक्तः । अत एव मुद्रिते ग्रन्थे न दृश्यते । द्र०—पृष्ठ ७५ ।[1] अस्मिन् संस्करणे पृष्ठ ४६० ।

२. लिपिकर-प्रमादात् पाठानां विपर्यासः । यथा—

ऋ० १।३।१ मन्त्रपदार्थे निरुक्तस्य (१२।१; १३।५) द्वावुद्धरणौ निर्दिष्टौ । तत्र प्रथमो-

---

जिन हस्तलेखों और मुद्रित ग्रन्थों के साहाय्य से 'ऋग्वेदादिभाष्यभूमिका'सहित भगवत्पाद दयानन्द सरस्वती के ऋग्वेदभाष्य का सम्पादन किया है, उनका विवरण हम पूर्व दे चुके हैं। अब अपने सम्पादन-कार्य के विषय में कुछ संक्षेप से निर्देश करते हैं—

भगवान् दयानन्द सरस्वती के वेदभाष्य में लिपिकर (=लेखक) मुद्रक तथा प्रूफ संशोधकों के प्रमाद से बहुत स्थानों पर पाठ त्रुटित, पूर्वापरप्रसङ्गरहित, बहुधा अशुद्ध मुद्रित उपलब्ध होता है। भाषानुवाद में भी ऐसे ही दोष मिलते हैं। बहुत स्थानों पर भाषानुवाद संस्कृत के साथ मेल भी नहीं खाता। जैसे—

**१. लिपिकरों के प्रमाद से पाठ का त्याग**—जैसे ऋ० १।३।११ के संस्कृत-पदार्थ में **'(सरस्वती) वाणी'** पदार्थ उपलब्ध नहीं होता। यह पाठ क.संज्ञक रफ कापी में विद्यमान है। शुद्ध कापी लिखते समय लिपिकर के प्रमाद से छूट गया। इसी कारण मुद्रित संस्करण में भी नहीं मिलता। द्र०—पृष्ठ ७५; इस संस्करण में पृष्ठ ४६०।

**२. लिपिकरों के प्रमाद से पाठों का आगे-पीछे होना**—जैसे ऋ० १।३।१ के संस्कृत-

---

१. अत्र सर्वत्र निर्दिष्टा प्रथमपृष्ठसंख्या वै० य० मुद्रितस्य द्वितीयसंस्करणस्य ज्ञेया ।

द्धरणस्य 'सूर्याचन्द्रमसावित्ये' इत्यस्यानन्तरं पठ्यमानः 'तयोः कालः ······ भागो' अंश उत्तरस्योद्धरणस्य तत्स्थाननिदर्शकपाठस्य मध्ये 'हन्तारौ' पदादनन्तरमुपलभ्यते। द्र०—पृष्ठ ५५। अस्मिन् संस्करणे पृष्ठ ४७५।

३. लिपिकर-प्रमादाद् अन्यथालेखः। यथा—

ऋ० १।१७।७,८ मन्त्रयोर्भावार्थयोः, नवममन्त्रस्य चान्वये 'मित्रावरुणौ' पदमुपलभ्यते। मन्त्रेषु सर्वत्र 'इन्द्रावरुण' पदं श्रूयते, भाष्ये च व्याख्यायते। तस्मादत्र 'इन्द्रावरुणौ' पदस्थाने 'मित्रावरुणौ' पदविन्यासः स्पष्टमेव लिपिकरप्रमादजनितः।

४. क्वचिद् ग्रन्थकारवचोविरुद्धः पाठोऽपि दृश्यते। यथा—

ऋ० १।६।१ मन्त्रभाष्ये 'ब्रध्न'पदार्थे 'अश्वनामसु च १।१४।' इत्युपलभ्यते। अस्मिन् मन्त्रे 'ब्रध्न'शब्दस्याश्वार्थो ग्रहीतुमयोग्यः इति भावार्थान्ते मैक्समूलरव्याख्यानखण्डने स्पष्टमुच्यते—'भट्टमोक्षमूलराख्येनास्य मन्त्रस्यार्थो रथेऽश्वस्य योजनरूपो गृहीतः। सो अन्यथाऽस्तीति भूमिकायां लिखितम्।' द्र०—पृ० ११६, ११७। अस्मिन् संस्करणे पृष्ठ ५१६,५१७।

अत्र संकेतितोऽभिप्राय ऋग्वेदादिभाष्यभूमिकायामित्थं प्रतिपाद्यते—

'क्वचित्त्रिघण्टावश्वस्यापि ब्रध्नारुषौ नाम्नी पठिते। परन्त्वस्मिन् मन्त्रे तद्घटना नैव सम्भवति, शतपथादिव्याख्यानविरोधात्, मूलार्थविरोधात्······।······परन्तु न जाने भट्टमोक्षमूलरेणायम[श्वा]र्थ आकाशाद् वा पातालाद्[वा] गृहीतः।' अस्मिन्नेव संस्करणे पृष्ठ १६०।

एतस्मिन् विषये ग्रन्थकृता स्वकीये 'सत्यार्थप्रकाश'ग्रन्थेऽप्युक्तम्—

'······मोक्षमूलर साहब ने इधर-उधर आर्यावर्तीय लोगों की की हुई टीका देखकर कुछ-कुछ यथा-तथा लिखा है। जैसा कि—'युञ्जति······'इस मन्त्र [में ब्रध्न] का अर्थ घोड़ा किया

---

पदार्थ में निरुक्त १२।१ तथा १३।५ के दो उद्धरण दिये हैं। उनमें प्रथम उद्धरण का 'तयोः कालः··· भागो' भाग १३।५ के उद्धरण के अन्त में छपा है। द्र०—पृष्ठ ५५; इस संस्करण में पृष्ठ ४७५।

३. लिपिकरों के प्रमाद से कुछ का कुछ लिखा जाना—जैसे ऋ० १।१७।७, ८ के संस्कृत-भावार्थ में तथा ९ के अन्वय में 'इन्द्रावरुणौ' के स्थान में 'मित्रावरुणौ' छपा मिलता है। मन्त्र में 'इन्द्रावरुण' का पाठ होने से 'मित्रावरुण' का कोई प्रसंग ही नहीं है। मित्रावरुण का प्रसंग पूर्व सूक्त में है।

४. कहीं-कहीं ग्रन्थकार के अपने वचन के विरुद्ध भी पाठ मिलता है—जैसे ऋ० १।६।१ के संस्कृत-पदार्थ में 'ब्रध्न' शब्द के अर्थ में 'अश्वनामसु च। १।१४।' प्रमाण छपा मिलता है। इस मन्त्र में 'ब्रध्न' शब्द का अश्व अर्थ संगत नहीं है, यह भाष्यकार ने भावार्थ के अन्त में मोक्षमूलर के अश्वार्थ का खण्डन करते हुए लिखा है। द्र०—पृ० ११६,११७; इस संस्करण में पृष्ठ ५१६,५१७।

प्रकृत मन्त्र के भावार्थ के अन्त में मोक्षमूलर के 'अश्वार्थ' की जो आलोचना की है, वैसी ही 'ऋग्वेदादिभाष्यभूमिका'(पृ० १६० यही संस्करण) तथा 'सत्यार्थ-प्रकाश' समु० ११ के आरम्भ में (पृष्ठ ४१२, ४१३ रा.ला.क.ट्र. संस्क०) भी की है।

है। इससे तो जो सायणाचार्य ने सूर्य अर्थ किया है, सो अच्छा है। ······इतने से जान लीजिए कि जर्मनी देश और मोक्षमूलर साहब में संस्कृत विद्या का कितना पाण्डित्य है।' स० प्र० समु० ११, पृष्ठ ४१२, ४१३, रा० ला० क० ट्र० संस्करण।

५. बहुत्र एकदेशे संशोधनमुपलभ्यते। तेन तद्विषयकेणासंशोधितांशेन विरोध उपलभ्यते। यथा—

ऋ० १।२२।१० मन्त्रपदार्थे '(वह) प्राप्नुहि। अत्र व्यत्ययो लडर्थे लोट् च' इत्येवं पाठ उपलभ्यते। अत्र 'प्राप्नुहि' इत्येतद् 'लडर्थे लोट्' इत्यनेन विरुध्यते। नह्यत्र 'वह' इत्यस्य लडर्थेऽर्थनिर्देशः, अपि तु लोडर्थ एव। अत्र पाठव्यत्यासस्येदं कारणम्—क.ख.कोशयोः '(वह) प्राप्नोति' इत्येवं लटोऽर्थो निर्दिष्ट आसीत्। उत्तरकाले 'प्राप्नोति' इत्यस्य स्थाने 'प्राप्नुहि' इत्येवं शोधनं विहितम्, परन्तु 'प्राप्नोति' अर्थेन सह उक्तः पाठः 'अत्र व्यत्ययो लडर्थे लोट् च' नापमृष्टः। द्र०—पृ० ४०४।

एवमस्मिन् भाष्ये यत्र क्वचित् परस्परं विरोधोऽसंबद्धो वा पाठ उपलभ्यते, तत्र सर्वत्रैवमेव एकदेशे संशोधनमपरांशे च संशोधनाभावरूपकारणं विज्ञेयम्।

६. असम्बद्ध-प्रमाणोपन्यासोऽपि बहुत्र दृश्यते। यथा—

ऋ० १।६।५ मन्त्रपदार्थे '(चित्) एवार्थे। चिदिति पूजायाम्। निरु० १।४।' इत्येवं पाठ उपलभ्यते। 'चित्' पदस्य एवार्थे उक्ते पूजार्थे प्रमाणोपन्यासो न युज्यते। प्रतीयते यदत्रापि कदाचित् पूर्वं '(चित्) पूजार्थे' इत्येवं व्याख्यातं स्यात्। द्र०—पृष्ठ १२५। अस्मिन् संस्करणे पृष्ठ ५२४।

इत्यमेव ऋ० १।२२।३ मन्त्रपदार्थे '(सूनृतावती) सूनृता प्रशस्ता बुद्धिर्विद्यते यस्यां सा। सूनृतेति वाङ्नामसु पठितम्। निघं० १।११।' इत्येवं पाठ उपलभ्यते। अत्र सूनृतापदस्य बुद्धि-

---

५. एकदेश में संशोधन—कई स्थानों पर यह भी देखने में आता है कि संशोधन-काल में आधे भाग में संशोधन करके पाठ बदल दिया, शेष आधा पुराना पाठ ही रह गया। जैसे—ऋ० १।२२।१० के मन्त्र-पदार्थ में पहले पाठ था—'(वह) प्राप्नोति। अत्र व्यत्ययो लडर्थे लोट् च'। पीछे से प्राप्नोति के स्थान में प्राप्नुहि संशोधन कर दिया, अर्थात् लोट् का लोट् के अर्थ में निर्देश कर दिया, परन्तु 'अत्र व्यत्ययः लडर्थे लोट् च' पंक्ति जो 'प्राप्नोति' अर्थ के साथ संगत थी, काटनी रह गई। द्र०—पृष्ठ ४०४।

६. असम्बद्ध प्रमाणों का निर्देश—जैसे ऋ० १।६।५ के मन्त्र-पदार्थ में 'चित्' का अर्थ 'एव' किया है, पर प्रमाण उद्धृत किया है पूजार्थ-विषयक—'चिदिति पूजायाम्। निरु० १।४।' सम्भव है यहां पहिले 'चित्' का अर्थ पूजा ही लिखा हो, उस अर्थ में प्रमाण ठीक है। पीछे से 'पूजायाम्' के स्थान में 'एवार्थे' बना दिया हो, और प्रमाण काटना रह गया हो (जैसे संख्या ५ में उदाहरण दिया है)। द्र०—पृ० १२५; इस संस्करण में पृ० ५२४।

इसी प्रकार १।२२।३ मन्त्र के पदार्थ में 'सूनृतावती' में' सूनृता का अर्थ 'बुद्धि' किया है, पर प्रमाण दिया है 'वाक्' अर्थ का—'सूनृतेति वाङ्नामसु पठितम्। निघं० १।११।' द्र०—पृष्ठ ३६३।

रूगार्थनिर्देशात् 'सूनृतेति वाङ्नामसु पठितम्' इति प्रमाणनिर्देशो न संगच्छते। अत्र '(सूनृतावती) सूनृता प्रशस्ता वाग् विद्यते यस्या बुद्धेः सा' इति भूतपूर्वः पाठ आसीत्। तस्मिन् पाठे 'सूनृतेति वाङ्नामसु पठितम्' इत्यादि प्रमाणोपन्यास युक्त आसीत्।

७. संस्कृतान्वये बहुत्र मन्त्रपदानां परित्याग उपलभ्यते। यथा—

ऋ० १।७।४ मन्त्रान्वये 'इन्द्र' पदम्, १।७।८ मन्त्रान्वये 'ओजसा यूथेव' पदे, १।८।४ मन्त्रान्वये 'वयम्' पदम्।

अन्वये त्रुटितानि मन्त्रपदानि यथास्थानमस्माभिः [ ] चतुरस्रकोष्ठकेषु परिवर्ध्य पूरितानि।

८. मुद्रणकाले प्रमादाद् भ्रष्टाः पाठा अप्यत्र प्रायेण दृश्यन्ते। यथा—

ऋ० १।३।३ मन्त्रभावार्थे '…युष्माभिः सर्वसुखशिल्पविद्यासिद्धये दुःखविनाशायाग्निजलयोर्यथावदुपयोगः कर्तव्य इति' इत्थं विपर्यस्तः पाठ उपलभ्यते। क.ख.ग. (=प्रेसकापी) कोशेषु ' युष्माभिः सर्वसुखसिद्धये दुःखविनाशाय च शिल्पविद्यायामग्निजलयोर्यथावदुपयोगः कर्तव्य इति' एवं शुद्धः पाठो वर्तते। यदा ग. कोशे (प्रेसकापी) यदाधारेण ग्रन्थस्य मुद्रणमभूत् तस्मिन्नपि शुद्धः पाठो दृश्यते, तदा मुद्रित-ग्रन्थ उपलभ्यमानः पाठविपर्यासः मुद्राक्षरसंयोजकस्य मुद्रणपत्र (प्रूफ) संशोधकस्य वा प्रमाददभूदित्येवानुमातुं शक्यते। भाषाभावार्थे पाठो यथावदुपलभ्यते। द्र०—पृष्ठ ६१। अस्मिन् संस्करणे पृष्ठ ४८०।[1]

९. मुद्रणकाले प्रमादात् पाठत्यागोऽपि बहुत्रोपलभ्यते। यथा—

ऋ० १।२६।३ मन्त्रस्य 'आ हि स्म' पदानामर्थाः पदार्थे नोपलभ्यन्ते। एषां पदानां ख.ग. कोशयोः '(आ) अभितः (हि) निश्चये (स्म) स्पष्टार्थे। अत्र निपातस्य चेति दीर्घः' इत्येवं पाठः पदार्थे दृश्यते। अत्र पाठपरित्यागो मुद्रकसंशोधकप्रमादाभ्यामजनीति स्पष्टमेव। भाषार्थे एषां पदार्थामर्था यथावदुपलभ्यन्ते। द्र० – पृष्ठ ५२८।

---

७. अन्वय में मन्त्रपदों का परित्याग—जैसे ऋ० १।७।४ के अन्वय में 'इन्द्र' पद का; १।७।८ में 'ओजसा यूथेव' पदों का; १।८।४ में 'वयम्' पद का निर्देश नहीं मिलता। हमने ऐसे पदों को यथास्थान [ ] कोष्ठक में दे दिया है।

८. मुद्रणकाल में शुद्ध पाठ का अशुद्ध छपना—जैसे ऋ० १।३।३ के भावार्थ में 'युष्माभिः सर्वसुखशिल्पविद्यासिद्धये दुःखविनाशायाग्निजलयोर्यथावदुपयोगः कर्तव्यः' ऐसा अशुद्ध पाठ छपा हुआ मिलता है। परन्तु क.ख.ग. (प्रेस कापी) सभी हस्तलेखों में—'युष्माभिः सर्वसुखसिद्धये दुःखविनाशाय च शिल्पविद्यायामग्निजलयोर्यथावदुपयोगः कर्तव्यः' इस प्रकार शुद्ध पाठ विद्यमान है। हिन्दी-भावार्थ भी हस्तलेखों के पाठ के अनुसार है। द्र० – पृष्ठ ६१; इस संस्करण में पृष्ठ ४८०।'[2]

९. मुद्रणकाल में प्रमाद से पाठ छूटे—जैसे ऋ० १।२६।३ के संस्कृत-पदार्थ में मन्त्रगत 'आ

---

१. अस्मत्संस्करणेऽपि 'सर्वसुखशिल्पविद्यासिद्धये' इति प्रमादजन्यपाठो मुद्रितः। तस्य संशोधनपत्रे शोधनं विहितम्।

२. हमारे संस्करण में भी हमारी अनवधानता से यह पाठ कुछ अशुद्ध छप गया है, उसका संशोधन शुद्धाशुद्धि पत्र में कर दिया है।

१०. पदपाठेऽपि बहुत्र पदानां त्यागोऽवग्रहप्रदर्शनाभावोऽन्यथा मुद्रणं चेत्येवं प्रकाराः प्रमादा बहुश उपलभ्यन्ते। ते चात्र न प्रदर्श्यन्ते। अत्र लिपिकरमुद्रकप्रमाद एव कारणम्।

यावन्तो दोषा वै० य० मुद्रितेषु संस्करणेषु संस्कृतभागे प्रदर्शितास्तावन्त एव दोषाः प्रायेण भाषार्थेऽप्युपलभ्यन्ते। तत्र केचन प्रस्तूयन्ते—

११. बहुत्र भाषार्थे परिवर्धनं दृश्यते, परन्तु संस्कृतपाठे नोपलभ्यते। **यथा—**

**ऋ० १।२२।७ मन्त्रस्य भाषाभावार्थानन्तरं 'इसके आगे······दूषित करनेहारी है' इत्येवं पञ्चपङ्क्तिमितः पाठो भाषायां प्रवर्धितः, परन्तु संस्कृतपाठे प्रवर्धनं नाभूत्। संस्कृतपाठेऽप्यावश्यकोऽयं पाठः। द्र०—वै० य० मु० पृष्ठ ४२३,४२४।**

१२. पाठ-परित्यागः। **यथा—**

**ऋ० १।२।७ मन्त्रस्य भाषार्थे 'घृताचीं धियं साधन्ता' इत्येतेषां त्रयाणां पदानां निर्देशस्तदर्थश्च नोपलभ्यन्ते। द्र०—पृ० ५०।**

१३. भूतपूर्वसंस्कृतपाठस्य भाषार्थस्योपस्थितिः। **यथा—**

**ऋ० १।१।२ मन्त्रस्य पदार्थान्वयभाषा भूतपूर्वस्य संस्कृतान्वयस्य विद्यते। संस्कृतान्वयस्य शोधने कृतेऽपि भाषाकारैः शुद्धसंस्कृतान्वयपाठानुसारं भाषार्थो नैव शोधितः।**

यत्र यत्र संस्कृतपाठानुसारी भाषार्थो वै० य० मुद्रिते नोपलभ्यते, **तत्र सर्वत्रैवमेव कारणं**

---

हि स्म' पदों का अर्थ नहीं मिलता। परन्तु ख.ग. हस्तलेखों में इनक अर्थ **'(आ) अभितः (हि) निश्चये (स्म) स्पष्टार्थे। अत्र निपातस्य चेति दीर्घः'** इस प्रकार विद्यमान है। द्र०—पृष्ठ ५२८।

**१०. पदपाठ में मन्त्रपदों का त्याग, अवग्रह का निर्देश न करना, तथा अन्य प्रकार से अशुद्ध छपना** आदि दोष मुद्रित संस्करण में दिखाई देते हैं। उनके उदाहरण यहां नहीं दर्शाये।

जिस प्रकार के लेखक वा मुद्रण-सम्बन्धी दोष संस्कृत-भाग में दर्शाये हैं, वैसे ही भाषाभाग में भी मिलते हैं। जैसा कि—

**११. भाषा-पाठ में पाठ बढ़ाया गया, परन्तु संस्कृत में बढ़ाना रह गया**—जैसे ऋ० १।२२।७ में हिन्दी-भावार्थ के अन्त में **'इसके आगे······दूषित करनेहारी है'** पांच पङ्क्तियां मिलती हैं, परन्तु संस्कृत-पाठ में नहीं हैं। द्र०—वै० य० मु० पृष्ठ ४२३, ४२४।

**१२. पाठ का परित्याग**—जैसे ऋ० १।२।७ के भाषापदार्थ में **'घृताचीं धियं साधन्ता'** तीन मन्त्रगत पद और उनका भाषापदार्थ नहीं मिलता। द्र०—पृष्ठ ५०।

**१३. भूतपूर्व (=कटे हुए) संस्कृतपाठ की भाषा का उपलब्ध होना**—जैसे ऋ० १।१।२ के मन्त्र का जो भाषापदार्थ उपलब्ध होता है, वह उस अन्वय के अनुसार है जिसे ग्रन्थकार ने काट दिया था। काटकर जो नया अन्वय लिखा उसके अनुसार भाषा करनेहारे पण्डितों ने भाषापदार्थ में शोधन नहीं किया। इससे संस्कृत अन्वय और भाषागत अन्वय में भेद हो गया।

भाष्यकार भगवान् दयानन्द के वेदभाष्य की भाषा में जहां-जहां भी संस्कृतपाठ और भाषा

ज्ञेयम् । ग्रन्थकारस्तु प्राधान्येन संस्कृतपाठ एव शोधनं विहितवान् । परिशोधितसंस्कृतपाठानुसार भावार्थस्य शोधनं भाषार्थकाराणां कार्यमासीत् । परन्तु तत्र तैः बहुधा प्रमादः कृतः । ऋग्वेदादिभाष्यभूमिकाया अत्रैको भाषाकारस्य विशिष्टः प्रमाद उपन्यस्यते—

देवताप्रकरणे वै० य० मुद्रितायां भूमिकायां (पृष्ठ ८२, अस्मिन् संस्करणे) भाषार्थ एवमुपलभ्यते—'और ग्यारह रुद्र, बारह आदित्य, मन, अन्तरिक्ष, वायु, द्यौ और मन्त्र ये मूर्तिरहित देव हैं। तथा पांच ज्ञानेन्द्रियां, बिजुली और विधियज्ञ ये सब देव मूर्तिमान् और अमूर्तिमान् भी हैं।'

अस्मिन् पाठे 'हैं' पदानन्तरं चिह्नं दत्वा टिप्पणी दीयते—

'इन्द्रियों की शक्तिरूप द्रव्य अमूर्तिमान्, और गोलक मूर्तिमान् । तथा विद्युत् और विधियज्ञ में जो-जो शब्द तथा ज्ञान अमूर्तिमान्, और दर्शन तथा सामग्री मूर्तिमान् जानना चाहिये। पृ० ८२, इदमेव संस्करणम् ।

अत्र वै० य० मुद्रितायां भूमिकायामेव संस्कृतपाठ एवं दृश्यते—

'एवं एकादश रुद्रा द्वादशादित्या मनःषष्ठानि ज्ञानेन्द्रियाणि वायुरन्तरिक्षं द्यौर्मन्त्राश्चेति शरीररहिताः । तथा स्तनयित्नुविधियज्ञौ सशरीराशरीरे देवते स्त इति' । पृष्ठं ८१ ।

अत्र संस्कृतपाठे पञ्चानां ज्ञानेन्द्रियाणां शरीररहितत्वमुक्तम् । भाषार्थे तु तेषां विद्युद्विधियज्ञाभ्यां सह सशरीराशरीरत्वं प्रतिपादितम् । मन्ये, उक्तदोषमेव लक्ष्यीकृत्य तमपाकर्तुमधस्ताट्टिप्पणी प्रदत्ता । साऽपि मूलसंस्कृतपाठविरोधाच्चिन्त्यैव ।

अत्र यो भाषार्थो भूमिकायां प्रकाश्यते स भूमिकायाश्चतुर्थे हस्तलेखे विद्यमानस्य संस्कृतपाठस्यानुरूपः । संस्कृतपाठश्चतुर्थ एव हस्तलेखे ग्रन्थकारेण परिशोधितः, परन्तु भाषार्थो भाषाविधात्रा पण्डितेन पञ्चमषष्ठयोर्हस्तलेखयोरपि संशोधितसंस्कृतपाठानुसारं न परिष्कृतः ।

१४. बहुत्र संस्कृतपाठे ग्रन्थकारेण पाठः परिवर्धितः, परन्तु भाषाकारैः प्रमादाद् भाषायां तावानंशो न परिवर्धितः । यथा—

ऋ० १।३।५ मन्त्रस्य संस्कृतभावार्थस्यान्ते 'नैवं विनाऽयं केनचिन्मनुष्येण प्राप्तुं शक्य

---

पाठ में भेद मिलता है, उसका प्रधान कारण यही है कि भाष्यकार ने संस्कृतपाठ का तो शोधन कर दिया, किन्तु भाषा बनानेहारे पण्डितों ने शोधे हुए संस्कृतपाठ के अनुसार भाषा का शोधन नहीं किया, भाषा पुराने संस्कृतपाठ की ही रह गई। इसके विषय में ऋग्वेदादिभाष्यभूमिका के देवता प्रकरण (यही संस्क० पृष्ठ ८२) के संस्कृतपाठ और भाषापाठ की तुलना से स्पष्ट हो जाता है। यहां जो भाषा वै० य० मुद्रित संस्करणों में मिलती है, वह चतुर्थ हस्तलेख के संस्कृतपाठ की है। इसके पश्चात् पञ्चम और षष्ठ हस्तलेख संशोधित होकर लिखे गए, परन्तु भाषा चतुर्थ हस्तलेख के संस्कृतपाठ की ही बनी रह गई। इस पर इस संस्करण के पृष्ठ ८२ की टि० १ देखें।

**१४. संस्कृत में बढ़ाये पाठ की भाषा का उपलब्ध न होना**—जैसे ऋ० १।३।५ मन्त्र के संस्कृत-भावार्थ के अन्त में 'नैवं विनाऽयं केनचिन्मनुष्येण प्राप्तुं शक्य इति' पाठ ग्रन्थकार ने बढ़ाया है,

इति' एतावानंशः ख.कोशे ग्रन्थकृता परिवर्धितः। भाषाकारेण प्रमादवस्य भाषार्थो भाषाभावार्थे नैव परिवर्धितः। द्र०—पृ० ६५। एवमेवोत्तरमन्त्रभावार्थान्ते 'अस्तीति बोध्यम्' पाठो परिवर्धितः, परन्तु भाषायां परिवर्धनं पण्डितैर्नाकारि।

१५. बहुत्र संस्कृतपाठस्य भाषानुवादो यथावन्न दृश्यते। यथा—

वै० य० मुद्रिते ऋ० १।३।१२ मन्त्रव्याख्यानन्तरं पूर्वपरसूक्तयोः संगतिनिदर्शकयोः संस्कृत-भाषापाठयोस्तुलनया दोषोऽयं प्रत्यक्षं ज्ञातुं शक्यते। द्र०—पृ० ७८, ७६।

एवमस्यर्ग्वेदभाष्यस्य वै० य० मुद्रितेषु संस्करणेषु यावन्तो दोषा अस्मद्दृष्टिपथं गतास्तेऽस्मिन् संस्करणे क्वचित्पाठशोधनेन क्वचिच्चिट्टिप्पणीप्रदानेनापाकर्तुं प्रयत्नो व्यधायि। संस्कृत-पाठे यत्र स्वल्पीयः शोधनमपि कृतं तत्र वै० य० मुद्रितः पाठोऽस्माभिः सर्वत्र टिप्पण्यां प्रदर्शितः। भाषार्थस्तु यथासम्भवं संस्कृतपाठानुसारं परिष्कृतः, न तत्र टिप्पण्यां भूतपूर्वः पाठो निदर्शितः। यतो हि भाष्यकारेण भाष्यमिदं गीर्वाणवाण्यामेव निबद्धम्। अतस्तदेव प्रमाणीभूतम्, भाषार्थस्तु भाष्यकारेण सहायकैः पण्डितैः कारितः। अतो भाषार्थे यावन्तोऽपि दोषा उपलभ्यन्ते, ते सर्वे भाषानुवादविधातृणां पण्डितानामेवाज्ञानात् प्रमादाद् वा समुत्पन्नाः।

अत्र भाषार्थोऽपि नास्माभिरामूलं परिवर्तितः, अपि तु पूर्वपठित एव भाषार्थे यथासम्भवम-ल्पपरिवर्तनेन परिवर्धनेन यथास्थाननयनेन च परिष्कृतः।

---

परन्तु भाषाकार पण्डितों ने इस पाठ की भाषा नहीं बढ़ाई। इसी प्रकार अगले मन्त्र के संस्कृत-भावार्थ के अन्त में **'अस्तीति बोध्यम्'** पद ग्रन्थकार ने संस्कृतपाठ में बढ़ा दिये, पर इनकी भाषा नहीं बढ़ाई गई।

**१५. संस्कृतपाठ का यथावत् भाषानुवाद का न होना**—इस भाष्य में अनेक ऐसे स्थान हैं जहां संस्कृतपाठ का भाषानुवाद ठीक-ठीक नहीं मिलता। ऋ० १।३।१२ मन्त्रव्याख्या के अन्त में पूर्व पर सूक्तों के संगति-निदर्शक संस्कृतपाठ और भाषापाठ की तुलना से यह बात स्पष्ट हो जाती है।

इस प्रकार इस ऋग्वेदभाष्य के वै० य० मुद्रित संस्करणों में जितने भी दोष हमारी दृष्टि में आये, उनको इस संस्करण में कहीं पाठशोधन के द्वारा और कहीं टिप्पणी देकर दूर करने का प्रयत्न किया है। **संस्कृतपाठ में जहां-कहीं थोड़ा सा भी पाठ का शोधन किया है, वहां प्रायः सर्वत्र वै० य० मुद्रित अपपाठ को हमने नीचे टिप्पणी में दर्शा दिया है।** क्योंकि भाष्यकार ने अपना भाष्य संस्कृतभाषा में ही लिखा है, इसलिए वही प्रमाणीभूत है। हमारी अनवधानता वा अज्ञान से यदि पाठशोधन का यत्न करते हुए अन्यथा शोधन हो गया हो, तो विद्वानों को पूर्व मुद्रित पाठ का भी ज्ञान होना आवश्यक हो जाता है। इसलिए अपपाठ का शोधन करते समय पूर्वपाठों का निर्देश अवश्य होना चाहिये। साधारणजनों के ज्ञान के लिये भाष्यकार ने भाषार्थ स्वाश्रित पण्डितों के द्वारा कराया था, इस कारण भाषार्थ का शोधन करते समय हमने उसके वै०य० मुद्रित अपपाठ टिप्पणी में नहीं दर्शाये।

यहां यह भी ध्यान रखने योग्य है कि हमने भाषार्थ का शोधन करते हुए उसे आमूल

## विविधाष्टिप्पण्यः

अस्मिन् संस्करणेऽस्माभिर्विविधाष्टिप्पण्यः प्रदत्ताः। ताश्चैवं द्रष्टव्याः—

१. उद्धरणानां मूलस्थाननिर्देशः—भाष्यकारेण स्वस्मिन् भाष्ये येषामुद्धरणानां मूलस्थान-निर्देशो नाकारि, तेषां यथासम्भवं मूलस्थानमन्विष्य टिप्पण्यां प्रदर्शितः।

२. उद्धरणानां मूलस्थाननिर्देशस्य पूर्तिः—बहुत्र भाष्यकृतोद्धरणानां ग्रन्थनिर्देशमात्रं मूलस्थानस्यैकदेशमात्रं वा निर्दिष्टम्। तत्र तथाविधानामुद्धरणानां यथायथं मूलस्थाननिर्देशस्य पूर्तिष्टिप्पण्यां विहिता।

३. उद्धरणानां पाठभेदनिर्देशः—ग्रन्थकारेणोद्धृतेषु बहूषूद्धरणेषु सम्प्रत्युपलभ्यमानग्रन्थेषु पाठभेदा उपलभ्यन्ते। तत्र ग्रन्थकारोद्धृतपाठं यथावत् रक्षयित्वा साम्प्रतिकः पाठभेदष्टिप्पण्यां प्रदर्शितः।

४. अर्थतः साम्यं भजतामुद्धरणानां निर्देशः—यत्र यथावत् पठितानामुद्धरणानां मूलस्थानं नोपलब्धं, तत्रार्थतः साम्यं भजतामुद्धरणानां निर्देशष्टिप्पण्यां कृतः।

५. मूलपाठशोधनम्—पूर्वं भाष्यस्य संस्कृतभागे दशविधा अपपाठाः सोदाहरणं निरूपिताः। तादृशानामपपाठानां यथासम्भवं संशोधनं विधाय वै०य० मुद्रितोऽपपाठोऽधस्तात् टिप्पण्यां प्रदर्शितः, क्वचिच्चापपाठानपि वै० य० मुद्रितपाठवत् पठित्वा तेषां पाठशोधनं टिप्पण्यां निदर्शितम्।

६. भाष्यकारमन्तव्यानामुपबृंहणम्—बहुत्र भाष्यकारस्य मन्तव्यानां टिप्पण्याम् उपबृंहणं कृतम्। तेन तादृशां मन्तव्यानां साधुत्वं याथार्थ्यतः प्रमाणीभवति।

७. प्रसङ्गाद् विविधविषयाणां परीक्षणम्—साक्षाद्भाष्यकारेणासंस्पृष्टानां वैदिकविषयाणां

---

मूल बदलने का प्रयत्न नहीं किया, अपितु पुरानी भाषा की रक्षा करते हुए यथासम्भव स्वल्प परिवर्तन वा परिवर्धन करके उसे संस्कृतपाठ के अनुसार बनाने का प्रयत्न किया है।

## विविध प्रकार की टिप्पणियां

इस संस्करण में हमने यथास्थान अनेक प्रकार की टिप्पणियां दी हैं। जैसे—

१. उद्धरणों के मूल स्थानों का निर्देश करना।

२. उद्धरणों के अधूरे दिये गये पतों की पूर्ति करना।

३. उद्धृत पाठों में जहां वर्तमान में पाठभेद मिलता है, उसका निर्देश करना।

४. मूल उद्धरण का पता ज्ञात न होने पर उसी अर्थवाले अन्य पाठ का निर्देश करना।

५. जहां पाठ शोधन किया है, उसके वै० य० मुद्रितपाठ का उल्लेख करना। कहीं-कहीं व० य० मुद्रितपाठ को छापते हुए उसका टिप्पणी में संशोधन दर्शाना।

६. भाष्यकार के मन्तव्य का पोषण करना।

७. प्रसङ्ग से अन्य विषयों पर भी टिप्पणी में प्रकाश डालना।

प्रसङ्गाद् आलोचनं टिप्पण्यामुपटङ्कितम् । येन तादृग्गहनविषयाणां विचारे साहाय्यं सम्पद्येत ।

अत्र सप्तविधासु टिप्पणीषु प्रथमाः पञ्चविधाः सम्पादनकर्मणोऽङ्गभूताः सन्ति । सम्पादनकार्यं कुर्वता प्रत्येकेन सम्पादकेन तादृशाष्टिप्पण्योऽवश्यं प्रदेया भवन्ति । षष्ठविधाष्टिप्पण्यः प्रायेण तत्रोपनिबद्धा यत्र भाष्यकर्तृमते विरोधोऽप्रामाण्यं वा निदर्शयितुं शक्यते । अतो भाष्यकारमतावलम्बिनः सम्पादकस्यैतत् कर्तव्यं भवति यत्स तादृक्स्थानेषु ग्रन्थकारमतं सप्रमाणं सत्यापयेत् । एतादृश्यष्टिप्पण्यो भूमिकाभागे विशेषतो निर्दिष्टाः, यतस्तत्रैव भगवता भाष्यकारेण स्वकीया वेदविषयिका धारणा वेदभाष्यशैली च प्राधान्येन प्रतिपादिता । सप्तमविधाष्टिप्पण्यस्तु द्वित्रा एव सन्ति ।

## विविधानि परिशिष्टानि

अस्य संस्करणस्योपयोगितायाः परिवृद्ध्यर्थं ग्रन्थान्तेऽष्टौ परिशिष्टान्युपनिबद्धानि । यथा—

प्रथमे परिशिष्टे भाष्यादावुपन्यस्तामृग्गणनां लक्ष्यीकृत्यर्ग्वेदस्य ऋक्संख्या विषये यावन्तो वादाः समुपलभ्यन्ते, तान् विविच्यर्ग्वेदस्य शुद्धा ऋक्संख्या प्रदर्शिता । तत्र कस्को विद्वान् ऋग्गणनायां कुत्र कथं च भ्रान्तः, ऋग्गणनायाः के के प्रकाराः प्राचीनैराचार्यैराश्रिताः, कस्यां चर्गणनायां का ऋक्संख्या सम्पद्यत इत्येवमादयो बहवो विषया विवेचिताः । परिशिष्टस्यास्य महत्त्वमभिलक्ष्य संस्कृतहिन्दीभाषयोरिदमुपन्यस्तम् ।

---

इन सात प्रकार की टिप्पणियों में पहली पांच टिप्पणियां तो सम्पादन-कार्य की अङ्गभूत है । इस प्रकार की टिप्पणियों का देना प्रत्येक सम्पादन का कर्त्तव्य है । छठे प्रकार की टिप्पणियों में भाष्यकार के मत में जहां विरोध वा अप्रामाण्य की आशंका की जाती हो वा आशङ्का हो सकती हो, उनका निराकरण अथवा प्रामाण्य दर्शाया है । इस प्रकार की टिप्पणी का निर्देश करना उन सम्पादकों के लिये अत्यन्त आवश्यक होता है, जो भाष्यकार के मत के अनुयायी हों । इस प्रकार की टिप्पणियां अधिकतर भूमिका-भाग में दी गई हैं । क्योंकि भाष्यकार ने भूमिका में ही अपनी वेदविषयक धारणाओं एवं वेदभाष्य की शैली का प्रतिपादन किया है । सातवें प्रकार की टिप्पणियां दो चार ही हैं ।

## विविध परिशिष्ट

इस संस्करण को विशेष रूप से उपयोगी बनाने के लिए इस भाग के अन्त में आठ प्रकार के परिशिष्ट जोड़े हैं—

**प्रथम परिशिष्ट** में ऋग्वेद की ऋक्संख्या के विषय में जो मतभेद है, उस पर विचार किया है । उसमें विद्वानों के जितने मत हैं, उनकी परीक्षा करके वास्तविक ऋक्संख्या का निर्देश किया है । ऋग्वेद की ऋक्संख्या की गणना के जितने प्रकार प्राचीन आचार्यों ने स्वीकार किये हैं, उनका विवरण दिया है । तदनुसार किस प्रकार गणना करने पर क्या ऋक्संख्या उपपन्न होती है इत्यादि बहुत से विषयों का प्रतिपादन किया है ।

द्वितीये परिशिष्टे भगवता भाष्यकारेण के के ग्रन्थाः प्रमाणार्हा अप्रमाणार्हा वा स्वीकृतास्तेषां निदर्शनमकारि ।

तृतीये परिशिष्टे—भाष्यकारेणास्मिन् भागे उपन्यस्तानामुद्धरणानां वर्णक्रमानुसारं सूची निबद्धा ।

चतुर्थे परिशिष्टे टिप्पण्यामुपटङ्कितानामुद्धरणानां वर्णक्रमानुसारिणी सूची प्रदत्ता ।

पञ्चमे परिशिष्टे भाष्यकारेण प्रकृतग्रन्थे प्रमाणत्वेनोपन्यस्तानां ग्रन्थानां सूची संग्रथिता ।

षष्ठे परिशिष्टे टिप्पण्यामुद्धृतानां ग्रन्थानां सूची निबद्धा ।

सप्तमे परिशिष्टे भाष्यकारेण स्मृतानां व्यक्तिविशेषाणां स्थानविशेषाणां वा नाम्नां सूची प्रदत्ता ।

अष्टमे परिशिष्टे टिप्पण्यामुद्धृतानां व्यक्तिविशेषाणां स्थानविशेषाणां वा नाम्नां सूची उपन्यस्ता ।

## ऋग्वेदादिभाष्यभूमिकायाः सह मुद्रणे कारणम्

यद्यपि भगवत्पादविरचिता ऋग्वेदादिभाष्यभूमिका पृथग्रूपेण मुद्रिता उपलभ्यत एव, पुनस्तस्या भाष्येण सह मुद्रणस्य द्रव्यव्ययीकरणस्य च को लाभ इति वक्ष्यन्ति लोकाः । अतस्तस्य सह मुद्रणे ये कारणविशेषास्तेऽधस्तात् प्रस्तूयन्ते—

---

**द्वितीय परिशिष्ट** में भाष्यकार द्वारा निर्दिष्ट प्रमाणाप्रमाण के योग्य ग्रन्थों का विषयानुसार निर्देश किया है । साथ में सत्यार्थ-प्रकाश और संस्कारविधि में निर्दिष्ट ग्रन्थों का भी निर्देश कर दिया है ।

**तृतीय परिशिष्ट** में भाष्य में उद्धृत उद्धरणों की वर्णानुक्रम से सूची दी है ।

**चतुर्थ परिशिष्ट** में टिप्पणी भाग में निर्दिष्ट उद्धरणों की सूची दी है ।

**पञ्चम परिशिष्ट** में भाष्यकार ने जिन ग्रन्थों को प्रमाणरूप में उद्धृत किया है, उनकी सूची है ।

**षष्ठ परिशिष्ट** में टिप्पणी भाग में उद्धृत ग्रन्थों की सूची है ।

**सप्तम परिशिष्ट** में भाष्यकार द्वारा स्मृत व्यक्तिविशेषों वा स्थान विशेषों के नामों की सूची दी है ।

**अष्टम परिशिष्ट** में टिप्पणी में उद्धृत व्यक्तिविशेषों वा स्थानविशेषों की सूची दी है ।

## ऋग्वेदादिभाष्यभूमिका को साथ में छापने का कारण

अनेक व्यक्ति यह आशंका करेंगे कि ऋ० भा० भूमिका जब अलग छपी हुई मिलती है, तो इसको साथ में छापकर ग्रन्थ को व्यर्थ में क्यों बढ़ाया गया ? इसका उत्तर यह है—

**१. भूमिकान्ते प्रथमे श्लोके भाष्यकारेणोक्तम्—**

सम्पूर्णाकार्यथेदं भवति सुरुचि यन्मन्त्रभाष्यं मयातः,
पश्चादीशानभक्त्या सुमतिसहितया तन्यते सुप्रमाणम् ।

**द्वितीयेन च श्लोकेन प्रथमश्लोके प्रतिज्ञातस्य भाष्यस्य प्रकार एवमुच्यते—**

मन्त्रार्थभूमिका ह्यत्र मन्त्रस्तत्पदानि च ।
मन्त्रार्थान्वयभावार्थाः क्रमाद् बोध्या विचक्षणैः ।।

**एताभ्यां वचनाभ्यां विस्पष्टतरं भवति यदियमृग्वेदादिभाष्यभूमिका वेदभाष्यस्यैकदेशभूता । अतस्तस्या ऋग्वेदभाष्येण सह प्रकाशनमावश्यकम् ।**

**२. कस्यचिदपि ग्रन्थस्य भूमिकाभागो कारणविशेषात् पृथक् प्रकाशितुं शक्यते, तथापि स ग्रन्थो यस्य सा भूमिका वर्तते, तद्विरहितो न केनापि प्रकाश्यते । भूमिका चेयं भाष्यकारेण संकल्पितस्य वेदचतुष्टयभाष्यस्यैकैव, अतस्तस्याः प्रथमेन ऋग्वेदभाष्येण सहैव प्रकाशनमुचितम् ।**

**३. यद्यपि भाष्यकारेण भूमिकान्तो भागः पृथगुपनिबद्धस्तथापि तस्याः पृथङ् निबन्धने तस्या अतिशयेन प्रचारो भवेदित्येव कारणमासीत्, न तां विनाऽपि वेदभाष्यविक्रये तात्पर्यमभूत् । अतएव ऋग्वेदस्य यजुर्वेदस्य च भाष्ययोर्विक्रयो भूमिकया विना न भवेदित्यस्मिन् विषये भाष्यकारेणेत्थं विज्ञापितम्—**

जो कोई भूमिका के विना केवल वेद ही लेना चाहे सो नहीं मिल सकते, किन्तु भूमिका ५) रु० देने पर पृथक् मिल सकती है । द्र०—ऋ०द० के पत्र और विज्ञापन, पृष्ठ १३८, द्वि सं० ।

**४. भाष्यकारीयोक्तघोषणायां सत्यामप्यद्ययावत् ग्रन्थकारस्योत्तराधिकारिणी परोपकारिणी सभा तदीयं वेदभाष्यं भूमिकया विनैव विक्रीणीते इत्यहो प्रमादः सभायाः । भगवतो भाष्यकारस्य वेदभाष्यं न तावत् कश्चिद् बोद्धुं समर्थो यावत्स तस्य भूमिकां न पठेत् । यतस्तत्रैव भाष्यकारेण**

---

१. भूमिका के अन्त में ग्रन्थकार ने जो दो श्लोक दिए हैं उनके अनुसार यह भूमिका उनके वेदभाष्य की अङ्गभूत है, यह स्पष्ट है । अतः भूमिका और भाष्य दोनों को साथ-साथ छापना चाहिये ।

२. कोई भी ग्रन्थ विना भूमिका के नहीं छपता । यह भूमिका भाष्यकार द्वारा संकल्पित वेदभाष्य-चतुष्टय की है । अतः प्रथम ऋग्वेदभाष्य के साथ इसका छापना आवश्यक है ।

३. भगवान् दयानन्द सरस्वती ने भी एक विज्ञापन में इस सम्बन्ध में निम्न महत्त्वपूर्ण घोषणा की थी—

**जो कोई भूमिका के विना केवल वेद ही लेना चाहे तो नहीं मिल सकते, किन्तु भूमिका ५) रु० देने पर पृथक् मिल सकती है । द्र०—ऋ० पत्र और विज्ञापन पृष्ठ १३८ (द्वि० सं०) ।**

४. सबसे महत्त्वपूर्ण कारण यह है कि भाष्यकार द्वारा घोषणा होने पर भी उनकी उत्तराधिकारिणी परोपकारिणी सभा जब भी कोई वेदभाष्य मंगवाता है, तो वह उसे विना भूमिका के ही भेज देती है । विचारने का विषय है कि जब तक भाष्य मंगवानेवाला भाष्यकार की शैली से, जिसका

स्वीयवेदभाष्यस्य विस्तरेण विवेचनमपूर्वत्वं च प्रकटीकृतम्। अतोऽद्ययावत् प्रचलितं प्रमादमपाकर्तुमेवास्माभिर्ऋग्वेदभाष्येण सहैव भूमिका निबद्धा।

एवं महता प्रयत्नेन मया यथाशक्ति यथाप्रज्ञं च भगवतो दयानन्दस्यर्ग्वेदभाष्यस्य सम्पादनं विधाय तस्य प्रथमं भागं वेदविद्याजुषां विपश्चिद्वर्याणां करकमलेषूपस्थाप्यते। अत्र यत्सारभूतं तत् संगृह्यासारं च परित्यज्य मम मतिमान्द्यात् प्रमादाद् दृष्टिदोषतो वात्र या अशुद्धयोऽन्यथा लेखो वा संजातः स्यात्, तं परिमाष्टुं मां सूचयित्वोपकरिष्यन्ति। इत्यलमतिविस्तरेण विपश्चिद्वर्येषु।

## धन्यवादार्हाः

अस्मिन् महति कर्मणि यैर्महानुभावैरहमुपकृतस्त इमे—

१. चौधरी प्रतापसिंहः—एतैर्महानुभावैर्बहुव्ययसाध्यस्य भगवत्पाददयानन्दसरस्वतीस्वामिन ऋग्वेदभाष्यस्य सुसम्पादितसंस्करणस्य प्रकाशनं स्वीकृत्य मदीयां चिरन्तनामिच्छां पूरयितुं मह्यं तादृशोऽवसरः प्रस्तुती कृतो, येनाहमृषिऋणतोऽल्पांश आनृण्यं लब्धुं समर्थः स्याम्। अत एते महाभागाः प्रथमं धन्यवादार्हाः। एतेषां महत्या वेदर्षिभक्त्यैव च विद्वत्समाजो भगवत्पादस्यर्ग्वेदभाष्यस्य शुद्धं सुसम्पादितं संस्करणं लब्धुं द्रष्टुं वा समर्थोऽभूदित्यतोऽखिलविदुषामप्येते धन्यवादार्हाः सन्ति।

२. श्रीपण्डितमहेन्द्रशास्त्री—एतैर्विद्वद्वर्यैरस्य भाष्यस्य मुद्रितपत्रशोधनकर्मात्मीयभावेन महता परिश्रमेण च कुर्वद्भिर्बहुत्र मम प्रमादान् दृष्टिदोषान् वा प्रस्तुत्य बहुत्रोचितशोधनं कर्तुं साहाय्यं प्रदाय महदुपकृतम्। एतेषां साहाय्यं विना नायं ग्रन्थ एतादृशं स्वरूपमुपलब्धुं समर्थोऽभविष्यदिति नातिशयितं वचनम्। अत एते विपश्चिद्वर्या अपि धन्यवादार्हाः सन्ति।

३. रामलालकपूरन्यास ( ट्रस्ट ) संस्थाया अधिकारिणोऽप्यतितरां धन्यवादार्हाः सन्ति, यैरिदं कार्यं स्वकीयं मन्यमानैर्मह्यमेतत्कर्म कर्तुं स्वीकृतिः प्रदत्ता।

अपि च यैः कैश्चिद् अस्मिन् कर्मण्यल्पमपि साहाय्यं कृतं ते सर्वे, रामलालकपूरट्रस्ट-प्रेसकर्मिणश्च धन्यवादार्हाः सन्ति।

मकर-संक्रान्तिः, सं० २०२९ — विदुषां वशंवदः—

बहालगढ़ (सोनीपत-हरयाणा) — युधिष्ठिरो मीमांसकः

---

निर्देश इस भूमिका में किया है, परिचित न होगा, तब तक वह उनके वेदभाष्य को कैसे समझ सकता है? लगभग ८८ साल से परोपकारिणी सभा द्वारा बिना भूमिका के वेदभाष्य को बेचने का जो अनर्थकारी क्रम प्रचलित है, उसे समाप्त करने और वेदभाष्य को यथावत् रूप से समझने में सहायता के लिए हमने इस मंहगाई के युग में भी भूमिका को साथ में छापने का प्रयास किया है।

इस प्रकार महान् प्रयास से किये गये कार्य में भी जहां मेरी अज्ञानता वा प्रमाद से भूल चूक हुई हो उसके लिये मैं विद्वानों से प्रार्थना करता हूं कि वे मेरी भूल को दर्शाकर मुझे उपकृत करें।

जिन-जिन महानुभावों ने इस कार्य के सम्पादन में विशेष सहयोग दिया है उनका धन्यवाद संस्कृत में कर दिया है।

# ऋग्वेदभाष्यस्य प्रथमभागस्य विषय-सूची



## ऋग्वेदादिभाष्यभूमिकाया विषयाः

## ऋग्वेदस्य तद्भाष्यगताश्च विषयाः

अथ परिशिष्टानि

# अस्य वेदभाष्यस्य वैशिष्ट्यम्

अत्र वेदमन्त्राणां संस्कृतप्राकृतभाषाभ्यां सप्रमाणः पदशोऽर्थो लेखिष्यते। यत्र यत्र व्याकरणादिप्रमाणावश्यकत्वमस्ति तत्तदपि तत्र तत्र लेखिष्यते। येनेदानीन्तनानां वेदार्थविरुद्धानां सनातनव्याख्यानग्रन्थप्रतिकूलानामनर्थकानां वेदव्याख्यानानां निवृत्त्या सर्वेषां मनुष्याणां वेदानां सत्यार्थदर्शनेन तेष्वत्यन्ता प्रीतिर्भविष्यतीति बोध्यम्। संहितामन्त्राणां यथाशास्त्रं यथाबुद्धि च सत्यार्थप्रकाशेन यत्सायणाचार्य्यादिभिः स्वेच्छानुचारतो लोकप्रवृत्त्यनुकूलतश्च लोके प्रतिष्ठार्थं भाष्यं लिखित्वा प्रसिद्धीकृतम्, अनेनात्रानर्थो महान् जातः। तद्द्वारा यूरोपखण्डवासिनामपि वेदेषु भ्रमो जात इति। यदास्मिन्नीश्वरानुग्रहेणर्षिमुनिमहर्षिमहामुनिभिरार्य्यैर्वेदार्थगर्भितेष्वैतरेयब्राह्मणादिषूक्तप्रमाणान्विते मया कृते भाष्ये प्रसिद्धे जाते सति सर्वमनुष्याणां महान् सुखलाभो भविष्यतीति विज्ञायते।



—स्वामी-दयानन्द-सरस्वती

* ओ३म् *

# अथ ऋग्वेदादिभाष्यभूमिका

ओ३म्[1] सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ।[2]
तेजस्वि नावधीतमस्तु[3] मा विद्विषावहै ॥ ओ३म् शान्तिः शान्तिः शान्तिः ॥१॥

तैत्तिरीयारण्यके, नवमप्रपाठके[4], प्रथमानुवाके ॥

ब्रह्मानन्तमनादि विश्वकृदजं सत्यं परं शाश्वतं,
विद्या यस्य सनातनी निगमभृद् वैधर्म्यविध्वंसिनी ।
वेदाख्या विमला हिता हि जगते नृभ्यः सुभाग्यप्रदा‡,
तन्नत्वा निगमार्थभाष्यमतिना भाष्यं तु तन्तन्यते ॥१॥
कालरामाङ्कचन्द्रेऽब्दे (१९३३) भाद्रमासे सिते दले ।
प्रतिपद्यादित्यवारे भाष्यारम्भः कृतो मया ॥२॥
दयाया आनन्दो विलसति परः स्वात्मविदितः,
सरस्वत्यस्याग्रे निवसति हिता हीशशरणा ।
इयं ख्यातिर्यस्य प्रततसुगुणा वेदमननाऽ-
स्त्यनेनेदं भाष्यं रचितमिति बोद्धव्यमनघाः ॥३॥

---

१. यह 'ओ३म्' मन्त्र का अवयव नहीं है। आरम्भ में प्लुत ओंकार के उच्चारण का शास्त्रों में विधान होने से यह प्लुत ओंकार मन्त्र के आरम्भ में पढ़ा है।

२. सं० ५ तक इसी प्रकार पाठ है। सं० ६-८ तक 'भुनक्तु' के पश्चात् विराम-चिह्न मिलता है। सं० ९ में 'अवतु' के पश्चात् भी विराम-चिह्न बना दिया है। मुद्रित तै० आ० में दोनों स्थानों पर चिह्न है।

३. प्रथम सं० में आगे विराम है। मुद्रित स्वर के अनुस्वार अशुद्ध होने से उसे हमने हटा दिया है।

४. सं० वि० के आरम्भ और उसके गृहस्थ-प्रकरण के अन्त में 'अष्टम प्रपाठक' का निर्देश है। और 'आर्याभिविनय' में 'दशम प्रपाठक' का। तै० आ० में इस का पाठ तीनों प्रपाठकों के आरम्भ में मिलता है। परन्तु ग्रन्थ के अवयवरूप में इसका मुख्य पाठ 'अष्टम प्रपाठक' में ही है। नवम और दशम प्रपाठक में यह पाठ ग्रन्थ का अवयव न होकर प्रथम अनुवाक से पूर्व शान्तिपाठ के रूप में मिलता है।

‡ अयमपपाठ इति केचन संगिरन्ते। एवमग्रेऽपि बहव एतादृशाः प्रयोगा विद्यन्ते, यान् सांप्रतिका वैयाकरणा असाधून् मन्यन्ते। यत्र यत्रैतादृशाः प्रयोगा आगमिष्यन्ति, तेषामग्रे ‡ एतादृक् चिह्नं विधास्यते। एतादृशानां प्रयोगाणां साधुत्वपरिज्ञानाय '**ऋग्वेदादिभाष्यभूमिका-परिशिष्ट**'नामा ग्रन्थो द्रष्टव्यः। अस्मिन् ग्रन्थे विपक्षिभिर्विद्वद्भिः कृतानामाक्षेपाणां यान्युत्तराणि ग्रन्थकृता स्वयं प्रदत्तानि, तेषामपि संग्रहो विद्यते।

मनुष्येभ्यो हितायैव सत्यार्थं सत्यमानतः ।
ईश्वरानुग्रहेणेदं वेदभाष्यं विधीयते ॥४॥
संस्कृतप्राकृताभ्यां यद् भाषाभ्यामन्वितं शुभम् ।
मन्त्रार्थवर्णनं चात्र क्रियते कामधुङ् मया ॥५॥
आर्याणां मुन्यृषीणां या व्याख्यारीतिः सनातनी ।
तां समाश्रित्य मन्त्रार्था विधास्यन्ते तु नान्यथा ॥६॥
येनाधुनिकभाष्यैर्ये टीकाभिर्वेददूषकाः ।
दोषाः सर्वे विनश्येयुरन्यथार्थविवर्णनाः ॥७॥
सत्यार्थश्च प्रकाश्येत वेदानां यः सनातनः ।
ईश्वरस्य सहायेन प्रयत्नोऽयं सुसिध्यताम् ॥८॥

**भाषार्थ**[1]—( सह नाव० ) हे सर्वशक्तिमन् ईश्वर ! आपकी कृपा रक्षा और सहाय से हम लोग परस्पर एक-दूसरे की रक्षा करें[2] । (सह नौ भु०) और हम सब लोग परमप्रीति से मिलके सब से उत्तम ऐश्वर्य अर्थात् चक्रवर्तिराज्य आदि सामग्री से आनन्द को आपके अनुग्रह से सदा भोगें । ( सह वी० ) हे कृपानिधे ! आपके सहाय से हम लोग एक-दूसरे के सामर्थ्य को पुरुषार्थ से सदा बढ़ाते रहें । ( तेजस्वि० ) और हे प्रकाशमय सब विद्या के देनेवाले परमेश्वर ! आपके सामर्थ्य से ही हम लोगों का पढ़ा और पढ़ाया सब संसार में प्रकाश को प्राप्त हो, और हमारी विद्या सदा बढ़ती रहे । ( मा विद्विषा० ) हे प्रीति के उत्पादक ! आप ऐसी कृपा कीजिये कि जिससे हम लोग परस्पर विरोध कभी न करें, किन्तु एक दूसरे के मित्र होके सदा वर्तें ।

(ओं शान्तिः०) हे भगवन् ! आपकी करुणा से हम लोगों के तीन ताप—एक **'आध्यात्मिक'** जो कि ज्वरादि रोगों से शरीर में पीड़ा होती है, दूसरा **'आधिभौतिक'** जो दूसरे प्राणियों से [दुःख] होता है, और तीसरा **'आधिदैविक'** जो कि मन और इन्द्रियों के विकार अशुद्धि और चञ्चलता से

१. ऋषि दयानन्द के जितने भी ग्रन्थ संस्कृत और हिन्दी दो भाषाओं में मिलते हैं, उनमें संस्कृत-भाग ऋषि दयानन्द का है । और भाषानुवाद पण्डितों द्वारा कराया हुआ है, यह ग्रन्थकार के पत्रों से सुस्पष्ट है । इन ग्रन्थों में अनेकत्र भाषापाठ संस्कृतपाठ से नहीं मिलता । अनेक स्थानों पर वह मूलभूत संस्कृत-पाठ से विपरीत भी उपलब्ध होता है । इसका प्रधान कारण ग्रन्थकार द्वारा प्रेस कापी तक संस्कृतपाठ में संशोधन कर देना, और भाषापाठ में पूर्वपाठ का अनुवाद ही बना रहना है । हमने इस ग्रन्थ के भाषापाठ को प्रायः यथावत् ही रखा है । परन्तु जहां भाषा संस्कृत से असम्बद्ध अथवा विपरीत है, वहां हमने संस्कृत-अनुसारी पाठ बना दिया है । जहां भाषा के संस्कृत से पूर्ण सामञ्जस्य न होने पर भी उसका भावार्थ आ गया है, उसे वैसे ही रहने दिया है । जहां हमने पाठ बढ़ाया है, उसे [ ] इस कोष्ठक में दे दिया है । और जहां भाषा में परिवर्तन किया है, वहां पूर्व मुद्रित-पाठ नीचे टिप्पणी में दर्शा दिया है ।

२. प्रथम सं० में 'करैं, भोगैं, रहैं' आदि क्रियारूप मिलते हैं । ये पण्डितों द्वारा प्रयुक्त प्रादेशिक रूप हैं । इसी प्रकार प्रथम सं० में 'होय, जिस्से, उस्से, इस्से' आदि प्रयोग भी मिलते हैं । इनमें से कतिपय स्थलों का 'हो, जिससे, उससे, इससे' इस प्रकार संशोधन प्रथम सं० के संशोधनपत्र में दर्शाया है । इसलिए हमने 'करैं' आदि का तृतीय सं० में शोधित रूप 'करें, भोगें, रहें' आदि ही स्वीकार किया है ।

क्लेश होता है, इन तीनों तापों को आप शान्त अर्थात् निवारण कर दीजिये। जिससे हम लोग सुख से इस वेदभाष्य को यथावत् बनाके सब मनुष्यों का उपकार करें। यही आपसे चाहते हैं, सो कृपा करके हम लोगों को सब दिनों के लिये सहाय कीजिये ॥१॥

( ब्रह्मानन्त० ) जो ब्रह्म अनन्त आदि विशेषणों से युक्त है, जिसकी वेद-विद्या सनातन है, उसको अत्यन्त प्रेम भक्ति से मैं नमस्कार करके इस वेदभाष्य के बनाने का आरम्भ करता हूं ॥१॥

( कालरा० ) विक्रम के संवत् १९३३ भाद्रमास के शुक्लपक्ष की प्रतिपदा, रविवार के दिन इस वेदभाष्य का आरम्भ मैंने किया है ॥२॥

( दयाया० ) सब सज्जन लोगों को यह बात विदित हो कि जिनका नाम 'स्वामी दयानन्द सरस्वती' है, उन्होंने इस वेदभाष्य को रचा है ॥३॥

( मनुष्ये० ) ईश्वर की कृपा के सहाय से सब मनुष्यों के हित के लिये इस वेदभाष्य का विधान मैं करता हूं ॥४॥

( संस्कृतप्रा० ) सो यह वेदभाष्य दो भाषाओं में किया जाता है—एक संस्कृत और दूसरी प्राकृत। इन दोनों भाषाओं में वेदमन्त्रों के अर्थ का वर्णन मैं करता हूं ॥५॥

( आर्याणां० ) इस वेदभाष्य में अप्रमाण लेख कुछ भी नहीं किया जाता है। किन्तु जो ब्रह्मा से लेके व्यास-पर्यन्त मुनि और ऋषि हुए हैं, उनकी जो व्याख्या-रीति है, उससे युक्त ही यह वेदभाष्य[1] बनाया जायगा ॥६॥

( येनाधु० ) यह भाष्य ऐसा होगा कि जिससे वेदार्थ से विरुद्ध अब के बने भाष्य और टीकाओं से वेदों में भ्रम से जो मिथ्या दोषों के आरोप हुए हैं, वे सब निवृत्त हो जायंगे ॥७॥

( सत्यार्थश्च० ) और इस वेदभाष्य से वेदों का जो सत्य अर्थ है, सो संसार में प्रसिद्ध हो। कि वेदों के सनातन अर्थ को सब लोग यथावत् जान लें, इसलिये यह प्रयत्न मैं करता हूं। सो परमेश्वर के सहाय से यह काम अच्छे प्रकार सिद्ध हो। यही सर्वशक्तिमान् परमेश्वर से मेरी प्रार्थना है ॥८॥

**विश्वा॑नि देव सवितर्दुरि॒तानि॒ परा॑ सुव। यद् भ॒द्रं तन्न॒ आ सु॑व ॥१॥**

यजुर्वेदे अध्याये ३०। मन्त्रः ३ ॥

भाष्यम्—**हे सच्चिदानन्दानन्तस्वरूप ! हे परमकारुणिक ! हे अनन्तविद्य ! हे विद्याविज्ञानप्रद ! ( देव ) हे सूर्यादिसर्वजगद्विद्याप्रकाशक ! हे सर्वानन्दप्रद ! ( सवितः ) हे सकलजगदुत्पादक ! ( नः )[2] अस्माकम् ( विश्वानि ) सर्वाणि ( दुरितानि ) दुःखानि सर्वान् दुष्टगुणांश्च ( परा सुव ) दूरे गमय। ( यद्भद्रम् ) यत् कल्याणं सर्वदुःखरहितं सत्यविद्या-**

१. 'यह वेदभाष्य' पद प्रथम सं० के संशोधन-पत्र में हटा दिए हैं, पुनरपि उत्तर संस्करणों में वाक्य की विस्पष्टता के लिए यथापूर्व रहने दिए हैं। अतएव हमने भी इन्हें हटाना उचित नहीं समझा।

२. मन्त्र एकमेव 'नः' पदमन्ते श्रूयते, तस्यैवेहाऽप्यकर्ष कृत्वा भाष्यकारेण सम्बन्धः प्रदर्शित इति ज्ञेयम्।

प्राप्त्याऽभ्युदयनिःश्रेयससुखकरं भद्रमस्ति ( तन्नः ) अस्मभ्यम् ( आ सुव ) आ समन्ताद् उत्पादय कृपया प्रापय ।

अस्मिन् वेदभाष्यकरणानुष्ठाने ये दुष्टा विघ्नास्तान् प्राप्तेः पूर्वमेव परासुव दूरं गमय । यच्च शरीरबुद्धिसहायकौशलसत्यविद्याप्रकाशादि भद्रमस्ति, तत् स्वकृपाकटाक्षेण हे परब्रह्मन् ! नोऽस्मभ्यं प्रापय । भवत्कृपाकटाक्षसुसहाय‡प्राप्त्या सत्यविद्योज्ज्वलं प्रत्यक्षादिप्रमाणसिद्धं भवद्रचितानां वेदानां यथार्थं भाष्यं वयं विदधीमहि‡ । तदिदं सर्वमनुष्योपकाराय भवत्कृपया भवेत् । अस्मिन् वेदभाष्ये सर्वेषां मनुष्याणां परमश्रद्धयाऽत्यन्ता प्रीतिर्यथा स्यात्, तथैव भवता कार्यमित्योम् ।

**भाषार्थ**—हे सत्यस्वरूप ! हे विज्ञानमय ! हे सदानन्दस्वरूप ! हे अनन्तसामर्थ्ययुक्त ! हे परमकृपालो ! हे अनन्तविद्यामय ! हे विज्ञानविद्याप्रद ! ( देव ) हे परमेश्वर ! आप सूर्यादि सब जगत् का और विद्या का प्रकाश करनेवाले हैं[1], तथा सब आनन्दों के देने वाले हैं[1] । (सवितः) हे सर्वजगदुत्पादक सर्वशक्तिमन् ! आप सब जगत् को उत्पन्न करने वाले हैं[1] । ( नः )[2] हमारे ( विश्वानि ) सब जो ( दुरितानि ) दुःख हैं उनको, और हमारे सब दुष्ट गुणों को कृपा से आप ( परा सुव ) दूर कर दीजिये । अर्थात् हमसे उनको और हमको उनसे सदा दूर रखिये । ( यद्भद्रम् ) और जो सब दुःखों से रहित कल्याण है, जो कि सब सुखों से युक्त भोग है, उसको हमारे लिये सब दिनों में प्राप्त कीजिये[3] । सो सुख दो प्रकार का है—एक, जो सत्य विद्या की प्राप्ति से[4] अभ्युदय अर्थात् चक्रवर्ति राज्य इष्ट-मित्र धन पुत्र स्त्री और शरीर से अत्यन्त उत्तम सुख का होना, और दूसरा—जो निःश्रेयस सुख है कि जिसको मोक्ष कहते हैं, और जिसमें ये दोनों सुख होते हैं, उसी को भद्र कहते हैं । ( तन्न आ सुव ) उस सुख को आप हमारे लिये सब प्रकार से प्राप्त करिये[3] ।

और आपकी कृपा के सहाय से सब विघ्न हमसे दूर रहें । कि जिससे इस वेदभाष्य के करने का हमारा अनुष्ठान सुख से पूरा हो । इस अनुष्ठान में हमारे शरीर में आरोग्य, बुद्धि, सज्जनों का सहाय, चतुरता और सत्यविद्या का प्रकाश सदा बढ़ता रहे । इस भद्रस्वरूप सुख को आप अपनी सामर्थ्य से ही हमको दीजिये । जिस कृपा के सामर्थ्य से हम लोग सत्यविद्या से युक्त जो आपके बनाये वेद हैं, उनके यथार्थ अर्थ से युक्त भाष्य का सुख से विधान करें । सो यह वेदभाष्य आपकी कृपा से सम्पूर्ण होके सब मनुष्यों का सदा उपकार करनेवाला हो । और आप अन्तर्यामी की प्रेरणा से सब मनुष्यों का इस वेदभाष्य में श्रद्धासहित अत्यन्त उत्साह हो । जिससे वेदभाष्य करने में जो हम लोगों का प्रयत्न है, सो यथावत् सिद्धि को प्राप्त हो । इसी प्रकार से आप हमारे और

---

१. सं० १-६ तक सभी में 'हो' पाठ मिलता है । प्रथम सं० के अन्त में संशोधनपत्र में 'हैं' संशोधन दर्शाया है । अतः हमने 'हैं' पाठ ही स्वीकार किया है ।

२. मन्त्र में एक ही 'नः' पद अन्त में है । उसी का अपकर्ष करके भाष्यकार ने यहां भी सम्बन्ध दर्शाया है, ऐसा जानना चाहिए ।

३. अर्थात् 'कराइये' । इस ग्रन्थ की भाषा में भी संस्कृत के समान बहुत्र अन्तर्णीत ण्यर्थ देखा जाता है ।

४. वै० यं० मु० में 'में' पाठ है ।

सब जगत् के ऊपर कृपादृष्टि करते रहें। जिससे इस बड़े सत्य काम को हम लोग सहज से सिद्ध करें ॥ १ ॥

यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति ।
स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥१॥
यस्य भूमिः प्रमान्तरिक्षमुतोदरम् ।
दिवं यश्चक्रे मूर्द्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥२॥
यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः।
अग्निं यश्चक्र आस्यं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥३॥
यस्य वातः प्राणापानौ चक्षुरङ्गिरसोऽभवन् ।
दिशो यश्चक्रे प्रज्ञानीस्तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥४॥

अथर्ववेदसंहितायां काण्डे १०, प्रपाठके २३, अनुवाके ४, मं० १, ३२, ३३, ३४[1] ॥

भाष्यम् - ( यो भूतं च० ) यो भूतभविष्यद्वर्तमानान् कालान् ( सर्वं यश्चाधि० ) सर्वं जगच्चाधितिष्ठति, सर्वाधिष्ठाता सन् कालादूर्ध्वं विराजमानोऽस्ति, ( स्वर्य० ) यस्य च केवलं निर्विकारं स्वः सुखस्वरूपमस्ति, यस्मिन् दुःखं लेशमात्रमपि नास्ति, यदानन्दघनं ब्रह्मास्ति, (तस्मै ज्ये० ) तस्मै ज्येष्ठाय सर्वोत्कृष्टाय ब्रह्मणे महतेऽत्यन्तं नमोऽस्तु नः ॥ १ ॥

( यस्य भू० ) यस्य भूमिः प्रमा यथार्थज्ञानसाधनं पादाविवास्ति, ( अन्तरिक्षमु० ) अन्तरिक्षं यस्योदरतुल्यमस्ति, यश्च सर्वस्मादूर्ध्वं सूर्यरश्मिप्रकाशमयमाकाशं दिवं मूर्धानं शिरोवच्चक्रे कृतवानस्ति, तस्मै० ॥ २ ॥

( यस्य सू० ) यस्य सूर्यश्चन्द्रमाश्च पुनः पुनः सर्गादौ नवीने चक्षुषी इव भवतः, योऽग्निमास्यं मुखवच्चक्रे कृतवानस्ति, तस्मै० ॥ ३ ॥

( यस्य वातः० ) वातः समष्टिर्वायुर्यस्य प्राणापानाविवास्ति, ( अङ्गिरसः ) 'अङ्गिरा अङ्गारा अङ्कना अञ्चनाः' इति निरुक्ते (अ० ३, खं० १७) प्रकाशकाः[2] किरणाश्चक्षुषी इव भवतः, यो दिशः प्रज्ञानीः प्रज्ञापिनीर्व्यवहारसाधिकाश्चक्रे, तस्मै ह्यनन्तविद्याय ब्रह्मणे महते सततं नमोऽस्तु ॥ ४ ॥

१. अथर्ववेद में उद्धरण तीन प्रकार से दिए जाते हैं—काण्ड-सूक्त-मन्त्र, काण्ड-अनुवाक-सूक्त-मन्त्र, तथा प्रपाठक-वर्ग-मन्त्र। यहां तीनों का सम्मिश्रण है, और वह भी अधूरा। **'काण्ड-सूक्त-मन्त्र'** क्रम सुगम है। ग्रन्थकार का पाठ यथावत् रहने दिया जाएगा, परन्तु पाठकों की सरलता के लिए नीचे सरल क्रम से अथर्ववेद के पते देंगे। यहां इस प्रकार समझें—'काण्ड १०, सूक्त ८, मं० १ तथा सू० ७ मन्त्र ३२,३३,३४' ॥

२. वै० य० मुद्रिते 'प्रकाशिकाः' पाठोऽशुद्धो वर्तते, यतो ह्यस्य विशेषणं 'किरणाः' नित्यपुंलिङ्गोऽस्ति।

**भाषार्थ**—( यो भूतं० ) जो परमेश्वर एक भूतकाल—जो व्यतीत हो गया है, ( च ) चकार[1] से दूसरा जो वर्तमान है, ( भव्यं च ) और तीसरा भविष्यत् जो होनेवाला है, इन तीनों कालों के बीच में जो कुछ होता है, उन सब व्यवहारों को वह यथावत् जानता है । ( सर्वं यश्चाधितिष्ठति ) तथा जो सब जगत् को अपने विज्ञान से ही जानता, रचता, पालन, लय करता, और संसार के सब पदार्थों का अधिष्ठाता अर्थात् स्वामी है,[2] [ सबका अधिष्ठाता होकर ] सब कालों के ऊपर विराजमान है । ( स्वर्यस्य च केवलं ) जिसका सुख ही केवल स्वरूप है, जो कि मोक्ष और व्यवहारसुख का भी देनेवाला है, जिसको लेशमात्र भी दुःख नहीं होता, जो आनन्दघन परमेश्वर [ है ], (तस्मै ज्येष्ठाय ब्रह्मणे नमः ) ज्येष्ठ अर्थात् सबसे बड़ा, सब सामर्थ्य से युक्त ब्रह्म जो परमात्मा है, उसको हमारा नमस्कार प्राप्त हो ॥१॥

( यस्य भूमिः प्रमा० ) जिस परमेश्वर के होने और ज्ञान में भूमि जो पृथिवी आदि पदार्थ हैं, सो प्रमा अर्थात् यथार्थज्ञान की सिद्धि होने का दृष्टान्त है, तथा जिसने अपनी सृष्टि में पृथिवी को पादस्थानी रचा है, ( अन्तरिक्षमुतोदरम् ) अन्तरिक्ष, जो पृथिवी और सूर्य के बीच में आकाश है सो जिसने उदरस्थानी किया है, ( दिवं यश्चक्रे मूर्धानम् ) और जिसने अपनी सृष्टि में दिव अर्थात् प्रकाश करनेवाले पदार्थों को सबके ऊपर मस्तकस्थानी किया है, अर्थात् जो पृथिवी से लेके सूर्यलोकपर्यन्त सब जगत् को रचके, उसमें व्यापक होके, जगत् के सब अवयवों में पूर्ण होके सबको धारण कर रहा है, ( तस्मै० ) उस परब्रह्म को हमारा अत्यन्त नमस्कार हो ॥२॥

( यस्य सूर्यश्चक्षुश्चन्द्र० ) और जिसने नेत्रस्थानी सूर्य और चन्द्रमा को किया है, जो कल्प-कल्प के आदि में सूर्य और चन्द्रमादि पदार्थों को वारंवार नये-नये रचता है, ( अग्निं यश्चक्र आस्यम् ) और जिसने मुखस्थानी अग्नि को उत्पन्न किया है, (तस्मै०) उसी ब्रह्म को हम लोगों का नमस्कार हो ॥ ३ ॥

( यस्य वातः प्राणापानौ ) जिसने ब्रह्माण्ड के वायु को प्राण और अपान की नाईं किया है, ( चक्षुरङ्गिरसोऽभवन् ) तथा जो प्रकाश करनेवाली[3] किरण हैं, वे चक्षु की नाईं जिसने की हैं, अर्थात् उनसे ही रूप ग्रहण होता है, ( दिशो यश्चक्रे प्रज्ञानीस्त० ) और जिसने दश दिशाओं को सब व्यवहारों को सिद्ध करनेवाली बनाई हैं, ऐसा जो अनन्तविद्यायुक्त परमात्मा सब मनुष्यों का इष्टदेव है, उस ब्रह्म को निरन्तर हमारा नमस्कार हो ॥ ४ ॥

---

१. 'अनेक चकारों से' वै० य० मुद्रित पाठ है ।

२. यहां से आगे वै० य० मुद्रित भाषापाठ अव्यवस्थित तथा आगे पीछे है । हमने संस्कृत के अनुसार यथास्थान रख दिया है । वै० य० मुद्रित पाठ इसप्रकार है—अर्थात् स्वामी है । (स्वर्यस्य च केवलं) जिसका सुख ही केवल स्वरूप है, जो कि मोक्ष और व्यवहार सुख का भी देनेवाला है, (तस्मै ज्येष्ठाय ब्रह्मणे नमः) ज्येष्ठ अर्थात् सबसे बड़ा सब सामर्थ्य से युक्त ब्रह्म जो परमात्मा है । उनको अत्यन्त प्रेम से हमारा नमस्कार हो । जो कि सब कालों के ऊपर विराजमान है, जिसको लेशमात्र भी दुःख नहीं होता, उस आनन्दघन परमेश्वर को हमारा नमस्कार प्राप्त हो ॥ १ ॥'

३. 'अङ्गिरसः' का यह अर्थ संस्कृत भाग में दिए गए निरुक्त के प्रमाण से किया गया है ।

अब परमेश्वर की उपासना और भौतिक अग्नि के उपकार से क्या क्या फल प्राप्त होता है, सो अगले मन्त्र से उपदेश किया है—

**पदार्थान्वयभाषा**– मनुष्य अच्छी प्रकार (अग्निना) ईश्वर की उपासना और भौतिक अग्नि को कलाओं में संयुक्त करने से (एव) ही (दिवेदिवे) प्रतिदिन (पोषम्) आत्मा और शरीर की पुष्टि करनेवाला, (यशसम्) जो उत्तम कीर्ति का बढ़ानेवाला, और (वीरवत्तमम्) जिसको अच्छे-अच्छे विद्वान् वा शूरवीर लोग चाहा करते हैं, उस (रयिम्) विद्या और सुवर्णादि उत्तम धन को सुगमता से (अश्नवत्) प्राप्त होता है ।।३।।

इस मन्त्र में श्लेषालङ्कार से दो अर्थों का ग्रहण है।

**भावार्थ**– ईश्वर की आज्ञा में रहने तथा शिल्पविद्यासम्बन्धी कार्य्यों की सिद्धि के लिये भौतिक अग्नि को सिद्ध करनेवाले मनुष्यों को अक्षय अर्थात् जिसका कभी नाश नहीं होता, ऐसा धन प्राप्त होता है। तथा मनुष्य लोग जिस धन से [नित्य] कीर्ति की वृद्धि और जिस धन को पाके वीर पुरुषों से युक्त होकर नाना सुखों से युक्त होते हैं, सबको उचित है कि उस धन को अवश्य प्राप्त करें ।।३।।



**उक्तावर्थौ कीदृशौ स्त इत्युपदिश्यते—**

**अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒श्वतः॑ परि॒भूरसि॑ । स इद्दे॒वेषु॑ गच्छति ॥ ४ ॥**

अग्ने॑ । यम् । य॒ज्ञम् । अ॒ध्व॒रम् । वि॒श्वतः॑ । प॒रि॒ऽभूः । असि॑ ॥ सः । इत् । दे॒वेषु॑ । ग॒च्छ॒ति॒ ॥ ४ ॥

**पदार्थः**—(**अग्ने**) **परमेश्वर ! भौतिको**[1] **वा** (**यम्**) (**यज्ञम्**) **प्रथममन्त्रोक्तम्** (**अध्वरम्**) **हिंसाधर्मादिदोषरहितम्** । ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः[2] । निरु० १ । ८ । (**विश्वतः**) **सर्वतः सर्वेषां जलपृथिवीमयानां पदार्थानां विविधाश्रयात्** । षष्ठ्या व्याश्रये । अ० ५ । ४ । ४८ **इत्यनेन तसिः प्रत्ययः** (**परिभूः**) **यः परितः सर्वतः पदार्थेषु भवति** । परीति सर्वतोभावं प्राह । निरु० १ । ३ । (**असि**) **अस्ति वा** (**सः**) **यज्ञः** (**इत्**) **एव** (**देवेषु**) **विद्वत्सु दिव्येषु पदार्थेषु वा** (**गच्छति**) **प्राप्नोति** ।।४।।

**अन्वयः**—हे अग्ने **त्वं** यमध्वरं यज्ञं विश्वतः परिभूरभि[3]**व्याप्य पालकोऽसि, तथाऽयमग्निरपि संपादयितास्ति,** स इद्देवेषु गच्छति ।। ४ ।।

**अत्र श्लेषालङ्कारः** ।

**भावार्थः—यतोऽयं व्यापकः परमेश्वरः स्वसत्तया पूर्वोक्तं यज्ञं सर्वतः सततं रक्षति, अत एव स यज्ञो दिव्यगुणप्राप्तिहेतुर्भवति । एवमेव परमेश्वरेण यतो**[4] **दिव्यगुणसहितोऽग्नी रचितोऽस्ति**

---

१. यत्र यत्र मन्त्रे संबोधनं श्रूयते तत्र तत्र भौतिकार्थे विभक्तिव्यत्ययो द्रष्टव्यः । एवमेव मध्यमपुरुषस्य स्थाने प्रथमपुरुषोऽपि ज्ञेयः । एतस्मिन् विषये 'परन्तु वैदिकव्यवहारे जडेऽपि' इत्यारभ्य 'वेदार्थोऽप्ययमेव वर्णितः' इत्यन्तो भूमिकायां निर्दिष्टः (पूर्वत्र पृष्ठ ४०२ पं० १४-१८) पाठोऽनुसन्धेयः ।

२. वै० य० मुद्रितेषु संस्करणेषु 'तत्प्रतिषेधो निपातः' इत्यपपाठः ।

३. वै० य० मुद्रितेषु संस्करणेषु 'परिभूरसि व्याप्य' इत्यपपाठः ।

४. वै० य० मुद्रितेषु संस्करणेषु 'यो' अपपाठः, उत्तरत्र 'तस्मात्' पदश्रवणात् ।

**तस्मादेवायं दिव्यशिल्पविद्यासंपादकोऽस्ति। यो धार्मिक उद्योगी विद्वान् मनुष्योऽस्ति, स एवैतान् गुणान् प्राप्तुमर्हति ॥ ४ ॥**

उक्त भौतिक अग्नि और परमेश्वर किस प्रकार के हैं, यह भेद अगले मन्त्र में जनाया है—

**पदार्थान्वयभाषा**—हे (अग्ने) परमेश्वर! आप (यम्) जिस (अध्वरम्) हिंसा आदि दोषरहित (यज्ञम्) विद्या आदि पदार्थों के दानरूप यज्ञ को (विश्वतः) सर्वत्र व्याप्त होकर (परिभूः) सब प्रकार से पालन करनेवाले (असि) हैं, (स इत्) वही यज्ञ (देवेषु) विद्वानों के बीच में (गच्छति) फैलके जगत् को सुख प्राप्त करता है।

तथा जो यह (अग्ने) भौतिक अग्नि (यम्) जिस (अध्वरम्) विनाश आदि दोषों से रहित (यज्ञम्) शिल्पविद्यामय यज्ञ को (विश्वतः) जल पृथिव्यादि पदार्थों के आश्रय से (परिभूः) सब प्रकार के पदार्थों में व्याप्त होकर सिद्ध करनेवाला है, (स इत्) वही यज्ञ (देवेषु) अच्छे-अच्छे पदार्थों में (गच्छति) प्राप्त होकर सब को लाभकारी होता है ॥ ४ ॥

इस मन्त्र में श्लेषालङ्कार है।

**भावार्थ**—जिस कारण व्यापक परमेश्वर अपनी सत्ता से पूर्वोक्त यज्ञ की निरन्तर रक्षा करता है, इसी से वह अच्छे-अच्छे गुणों के देने का हेतु होता है। इसी प्रकार [जिस कारण] ईश्वर ने दिव्यगुण युक्त अग्नि रचा है, इसी कारण वह उत्तम शिल्पविद्या का उत्पन्न करनेवाला है। उन गुणों को केवल धार्मिक उद्योगी और विद्वान् मनुष्य ही प्राप्त होने के योग्य होता है ॥ ४ ॥



**पुनस्तौ कीदृशौ स्त इत्युपदिश्यते—**

**अ॒ग्निर्होता॑ क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः। दे॒वो दे॒वेभि॒रा ग॑मत् ॥ ५ ॥ १ ॥**

अ॒ग्निः। होता॑। क॒विऽक्र॑तुः। स॒त्यः। चि॒त्रश्र॑वःऽतमः ॥ दे॒वः। दे॒वेभिः॑। आ। ग॒म॒त् ॥ ५ ॥

**पदार्थः**—**(अग्निः) परमेश्वरो भौतिको वा (होता) दाता ग्रहीता द्योतको वा (कविक्रतुः) कविः सर्वज्ञः क्रान्तदर्शनो वा। करोति [कारयति][1] यो येन वा स क्रतुः, कविश्चासौ क्रतुश्च सः।** कविः क्रान्तदर्शनो भवति कवतेर्वा। निरु० १२। १३। **यः सर्वविद्यायुक्तं वेदशास्त्रं कवते उपदिशति स कविरीश्वरः। क्रान्तं दर्शनं यस्मात् स सर्वज्ञो भौतिको वा क्रान्तदर्शनः।** कृञः कतुः। उ० १। ७६ **अनेन कृञो हेतुकर्त्तरि कर्तरि [करणे] वा** कतुः प्रत्ययः। (सत्यः) सन्तीति सन्तः, **सद्भ्यो हितः तत्र साधुर्वा।** सत्यं कस्मात् सत्सु तायते सत्प्रभवं भवतीति वा। निरु० ३। १३। **(चित्रश्रवस्तमः) चित्रमद्भुतं श्रवः श्रवणं यस्य, सोऽतिशयितः (देवः) स्वप्रकाशः प्रकाशकरो वा (देवेभिः) विद्वद्भिर्दिव्यगुणैः सह वा (आ) समन्तात् (गमत्) गच्छतु प्राप्तो भवति वा। लुङ्प्रयोगोऽडभावश्च ॥५॥**

१. वै० य० मुद्रितेषु सस्करणेषु नास्ति। उत्तरत्र 'कृञो हेतुकर्तरि कर्तरि वा कतुः प्रत्ययः' पाठदर्शनाद् आवश्यकः।

**अन्वयः—यः** सत्यश्चित्रश्रवस्तमः कविक्रतुः होता देवोऽग्निः **परमेश्वरो भौतिकश्चास्ति, स** देवेभिः सहागमत् ॥५॥

**अत्र श्लेषालङ्कारः ।**

**भावार्थः— अग्निशब्देन परमेश्वरस्य सर्वाधारसर्वज्ञसर्वरचकविनाशरहितानन्तशक्तिमत्त्वादिगुणैः सर्वप्रकाशकत्वात्, तथा भौतिकस्याकर्षणगुणादिभिर्मूर्त्तद्रव्याधारकत्वाच्च ग्रहणमस्तीति । [1][स च विद्वद्भिः समागमे कृते सृष्टिपदार्थगुणविचारेण च विदितो भूत्वा [2]अनन्तसुखदाता सम्यक् शिल्पविद्याप्रापकश्च [3]भवतीति सर्वैर्मनुष्यैर्विज्ञातव्यम्[4] ।]**

**सायणाचार्य्येण** गमदिति लोडन्तं **व्याख्यातम्, तदेतदस्य भ्रान्तिमूलमेव । कुतः ? गमदित्यत्र** 'छन्दसि लुङ्लङ्लिटः'[5] **इति सामान्यकालविधायकस्य सूत्रस्य विद्यमानत्वात् ॥५॥**

**॥ इति प्रथमो वर्गः समाप्तः ॥**

फिर परमेश्वर और भौतिक अग्नि किस प्रकार के हैं, सो अगले मन्त्र में उपदेश किया है—

**पदार्थान्वयभाषा**—[6]जो ( सत्यः ) अविनाशी, ( चित्रश्रवस्तमः ) जिसका अति आश्चर्यरूपी श्रवण है, ( कविक्रतुः ) जो सर्वज्ञ, सब विद्यायुक्त वेद का उपदेश करने ( होता ) सब शुभ गुणों और चक्रवर्ती राज्यादि का देनेवाला, तथा ( देवः ) आप से आप प्रकाशमान (अग्निः) परमेश्वर है, (सः) वह ( देवेभिः )विद्वानों के साथ समागम करने से ( आ गमत् ) अच्छी प्रकार प्राप्त होता है ॥

तथा जो ( सत्यः ) श्रेष्ठ विद्वानों के लिये हितकारी, ( चित्रश्रवस्तमः ) जिसको अद्भुत् अर्थात् अति आश्चर्यरूप सुनते हैं, ( कविक्रतुः ) जो सब पृथिव्यादि पदार्थों के साथ व्यापक और उनको दिखानेवाला, ( होता ) शिल्पविद्या का मुख्य हेतु, ( देवः ) सबका प्रकाशक भौतिक अग्नि है, ( सः ) वह ( देवेभिः ) दिव्यगुणों के साथ ( आ गमत् ) प्राप्त होता है ॥

[7]**कविक्रतु में प्रमाण**—निरुक्तकार ने 'कवि' का अर्थ क्रान्तदर्शन वा उपदेश करनेवाला किया है। जो सब विद्यायुक्त वेद का उपदेश करता है। तथा क्रान्तदर्शन=सर्वज्ञ होने से ईश्वर

---

१. अयं कोष्ठान्तर्गतः पाठः खहस्तलेखे विद्यते। भाषार्थोऽस्य मुद्रित उपलभ्यते।

२. 'अनन्तसुखदाता' खहस्तलेखे नास्ति । परमेश्वरपक्षेऽयं पाठ आवश्यकः। भाषापदार्थे त्विह वर्तते ।

३. 'भवति' इति खहस्तलेखे नास्ति ।

४. खहस्तलेखे 'जिज्ञासितव्यः' पाठो वर्तते । इह भाषार्थे 'जानना चाहिए' इति वर्तते ।

५. अष्टा० ३।४।६ ॥

६. वै० य० मुद्रित संस्करणों में जो भाषार्थ छपा है, वह पुराने अन्वय के अनुसार है। इस कारण हमने वर्तमान संस्कृत-अन्वयानुसारी भाषार्थ दिया है। वै० य० मुद्रित प्रथम भाषार्थ में प्रमाणभाग का भी भाषार्थ छपा है, उसे हमने प्रथम मन्त्र के समान पृथक् कर दिया है। खहस्तलेख में पृथक् निर्देश है।

७. यह वै०य० मुद्रित संस्कृत तथा भाषार्थ से बोधित अर्थ हमने स्वशब्दों में दिया है।

का नाम 'कवि' है। तथा भौतिक अग्नि भी स्थूल सूक्ष्म पदार्थों का ज्ञान करानेवाला होने से कवि कहाता है ॥ ५ ॥

इस मन्त्र में श्लेषालङ्कार है।

**भावार्थ**—सब का आधार, सर्वज्ञ, सबका रचनेवाला, विनाशरहित, अनन्त शक्तिमान्, और सब का प्रकाशक आदि गुण हेतुओं के पाये जाने से अग्नि शब्द करके परमेश्वर, और आकर्षणादि गुणों से मूर्तिमान् पदार्थों का धारण करनेहारादि गुणों के होने से भौतिक अग्नि का भी ग्रहण होता है। सिवाय इसके मनुष्यों को यह भी जानना उचित है कि विद्वानों के समागम और संसारी पदार्थों को उनके गुणसहित विचारने से परम दयालु परमेश्वर अनन्त सुखदाता और भौतिक अग्नि शिल्पविद्या का सिद्ध करनेवाला होता है।

**सायणाचार्य्य** ने '**गमत्**' इस प्रयोग को लोट् लकार का माना है। सो यह उनका व्याख्यान अशुद्ध है। क्योंकि इस प्रयोग में (**छन्दसि लुङ्०**[1]) यह सामान्यकाल बतानेवाला सूत्र वर्तमान है ॥५॥

॥ यह पहला वर्ग समाप्त हुआ ॥



**अथैकः परमार्थ उपदिश्यते—**

**यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि। तवेत्तत्सत्यमङ्गिरः ॥ ६ ॥**

यत्। अङ्ग। दाशुषे। त्वम्। अग्ने। भद्रम्। करिष्यसि ॥ तव। इत्। तत्। सत्यम्। अङ्गिरः ॥६॥

**पदार्थः**—(**यत्**) **यस्मात्** (**अङ्ग**) **सर्वमित्र**! (**दाशुसे**) **सर्वस्वं दत्तवते** (**त्वम्**) **मङ्गलमयः** (**अग्ने**) **परमेश्वर**! (**भद्रम्**) **कल्याणं सर्वैः शिष्टैर्विद्वद्भिः सेवनीयम्**। भद्रं भगेन व्याख्यातं भजनीयं भूतानामभिद्रवणीयं भवद्रमयतीति वा भाजनवद्वा। निरु० ४। १०। (**करिष्यसि**) **करोषि**। **अत्र वा छन्दसि सर्वे विधयो भवन्तीति**[2] **लडर्थे लृट्**। (**तव**) (**इत्**) **एव** (**तत्**) **तस्मात्** (**सत्यम्**) **सत्सु पदार्थेषु सुखस्य विस्तारकं सत्प्रभवं सद्भिर्गुणैरुत्पन्नम्** (**अङ्गिरः**) **पृथिव्यादीनां ब्रह्माण्डस्याङ्गानां प्राणरूपेण शरीरावयवानां चान्तर्य्यामिरूपेण रसरूपोऽङ्गिरास्तत्संबुद्धौ**। प्राणो वाऽङ्गिराः। श० ६। ३। ७। ३॥[3] देहेऽङ्गारेष्वङ्गिरा अङ्गारा अङ्कना अञ्चनाः। निरु० ३। १७ **अत्राप्युत्तमानामङ्गानां मध्येऽन्तर्यामी प्राणाख्योऽर्थो गृह्यते** ॥ ६ ॥

**अन्वयः**—हे अङ्गिरोऽङ्गाग्ने त्वं [यत्] **यस्मात्** दाशुसे भद्रं करिष्यसि **करोषि**, [तत्] **तस्मात्** तवेत् **तवैवेदं** सत्यं **व्रतमस्ति** ॥ ६ ॥

**भावार्थः**—**यो न्यायकारी सर्वस्य दयालुः सुहृत्सन् कल्याणकर्त्ता सर्वस्य सुखमिच्छुः परमेश्वरोऽस्ति, तस्योपासनेन जीव ऐहिकपारमार्थिकं सुखं प्राप्नोति, नेतरस्य। कुतः? परमेश्वरस्यैवैतच्छीलवत्त्वेन समर्थत्वात्। योऽभिव्याप्याङ्गान्यङ्गीव सर्वं विश्वं धारयति, येनैवेदं जगद्रक्षितं यथावदवस्थापितं च सोऽङ्गिरा भवतीति**।

१. अष्टा० ३।४।६ ॥ २. महाभाष्य १।४।४।९ ॥ ३. अध्यायानुसारं ६।५।२।३ निर्देशो ज्ञेयः।

**अत्राङ्गिरःशब्दार्थो** विलसनाख्येन **भ्रान्त्यान्यथैव व्याख्यात इति बोध्यम्** ॥ ६ ॥

अब अग्नि शब्द से ईश्वर का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे ( अङ्गिरः ) ब्रह्माण्ड के अङ्ग पृथ्वी आदि पदार्थों को प्राणरूप, और शरीर के अङ्गों को अन्तर्यामीरूप से रसरूप होकर रक्षा करनेवाले ! हे ( अङ्ग ) सब के मित्र (अग्ने) परमेश्वर ! [(त्वम्)] आप (यत्) जिस हेतु से (दाशुषे) निर्लोभता से उत्तम-उत्तम पदार्थों के दान करनेवाले मनुष्य के लिये ( भद्रम् ) कल्याण, जो कि शिष्ट विद्वानों के योग्य है, उसको (करिष्यसि) करते हैं, [तत्] सो वह (तवेत्) आपही का (सत्यम्) सत्यव्रत=शील है।

[ ([1]प्राणो वा०) इससे अङ्गिरा शब्द से प्राणरूप ईश्वर लिया जाता है। (देहेऽङ्गारे०) इससे अङ्गिरा शब्द से उत्तम अङ्गों के मध्य अन्तर्यामी रूप से वर्तमान ईश्वर अर्थ ग्रहण किया जाता है ] ॥ ६ ॥

**भावार्थ**—जो [2]न्यायकारी दयालु सब का मित्र होकर कल्याण और सब के सुख की इच्छा करनेवाला परमेश्वर है, उसी की उपासना करके जीव इस लोक और मोक्ष के सुख को प्राप्त होता है, दूसरे की नहीं। क्योंकि इस प्रकार सुख देने का स्वभाव और सामर्थ्य केवल परमेश्वर का है। जैसे शरीरधारी अपने शरीर को धारण करता है, वैसे ही परमेश्वर [व्याप्त होकर] सब संसार को धारण करता है। और इसी से इस संसार की यथावत् रक्षा और स्थिति होती है, [इसी कारण वह 'अङ्गिरा' कहाता है।]

[यहां 'विलसन' ने 'अङ्गिरा' शब्द का अर्थ भ्रान्ति से अशुद्ध लिखा है, यह जानना चाहिये ] ॥६॥



**तद् ब्रह्म कथमुपास्य[3] प्राप्तव्यमित्युपदिश्यते—**

**उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम् । नमो॒ भर॑न्त॒ एम॑सि ॥ ७ ॥**

उप॑ । त्वा॒ । अ॒ग्ने॒ । दि॒वेऽदि॑वे । दोषा॑ऽवस्तः । धि॒या । व॒यम् ॥ नमः॑ । भर॑न्तः । आ । इ॒म॒सि॒ ॥७॥

**पदार्थः—(उप) सामीप्ये (त्वा) त्वाम् (अग्ने) सर्वोपास्येश्वर ! (दिवेदिवे) विज्ञानस्य प्रकाशाय प्रकाशाय (दोषावस्तः) अहर्निशम्[4]** । दोषेति रात्रिनामसु पठितम् । निघं १ । ७ । **रात्रेः प्रसंगाद्वस्त इति दिननामात्र ग्राह्यम् । (धिया) प्रज्ञया कर्मणा वा (वयम्) उपासकाः (नमः) नम्रीभावे (भरन्तः) धारयन्तः (आ) समन्तात् (इमसि) प्राप्नुमः ॥ ७ ॥**

---

१. वै० य० मुद्रित में इस प्रमाण भाग का कुछ अंश पदार्थ के अन्तर्गत ही छपा है। स्वहस्तलेख में संक्षिप्त भाव पृथक् मिलता है। हमने पूर्ववत् यहां भी दोनों प्रमाणों का अभिप्राय पृथक् छापा है।

२. वै० य० मुद्रित भावार्थ संक्षिप्त तथा अधूरा है।

३. वै० य० मुद्रितेषु संस्करणेषु 'उपास्यं' अपपाठः।

४. 'दोषावस्तः' इत्यत्राद्युदात्तत्वदर्शनादामन्त्रितस्वरो ज्ञेयः। यथाऽस्य पदपाठस्तथाप्यस्यामन्त्रितत्वं प्रतिभाति। उपलब्धेषु ऋग्भाष्येषु केवलं स्कन्दस्वामिभाष्य एवामन्त्रितत्वेन व्याख्यायते। सायणो द्वन्द्वे 'कार्त-

**अन्वयः**—हे अग्ने वयं धिया दिवेदिवे दोषावस्तस्त्वा त्वां भरन्तो नमस्कुर्वन्तश्चोपेमसि प्राप्नुमः ॥७॥

**भावार्थः**—हे सर्वद्रष्टः सर्वव्यापिन्नुपासनार्ह ! वयं सर्वकर्मानुष्ठानेषु प्रतिक्षणं त्वां यतो नैव विस्मरामः, तस्मादस्माकमधर्ममनुष्ठातुमिच्छा कदाचिन्नैव भवति । कुतः ? सर्वज्ञः सर्वसाक्षी भवान् सर्वाण्यस्मत्कार्य्याणि सर्वथा पश्यतीति ज्ञानात् ॥ ७ ॥

उक्त परमेश्वर कैसे उपासना करके प्राप्त होने के योग्य है, इसका विधान अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे ( अग्ने ) सब के उपासना करने योग्य परमेश्वर ! ( वयम् ) हम लोग ( धिया ) अपनी बुद्धि और कर्मों से ( दिवेदिवे ) अनेक प्रकार के विज्ञान होने के लिये, (दोषावस्तः) रात्रि दिन में निरन्तर (त्वा) आपकी (भरन्तः) उपासना को धारण और नमस्कार आदि करते हुए (उपेमसि) आपके शरण को प्राप्त होते हैं ॥ ७ ॥

**भावार्थ**—हे सब को देखने और सब में व्याप्त होनेवाले उपासना के योग्य परमेश्वर ! हम लोग सब कामों के करने में [ जिससे ] एक क्षण भी आपको नहीं भूलते, इसी से हम लोगों को अधर्म करने की कभी इच्छा भी नहीं होती । क्योंकि जो सर्वज्ञ सब का साक्षी परमेश्वर है, वह हमारे सब कामों को देखता है, इस निश्चय से ॥ ७ ॥



**पुनः स कीदृशोऽस्तीत्युपदिश्यते—**

**राज॑न्तमध्व॒राणां॑ गो॒पामृ॒तस्य॒ दीदि॑विम् । वर्ध॑मानं॒ स्वे दमे॑ ॥ ८ ॥**

राज॑न्तम् । अ॒ध्व॒राणा॑म् । गो॒पाम् । ऋ॒तस्य॑ । दीदि॑विम् ॥ वर्ध॑मानम् । स्वे । दमे॑ ॥ ८ ॥

**पदार्थः**—( **राजन्तम्** ) प्रकाशमानम् ( **अध्वराणाम्** ) पूर्वोक्तानां यज्ञानां धार्मिकाणां

कौजपादयश्च' (अ० ६।२।३७) इत्यनेनाद्युदात्तत्वमाह । क्लिष्टकल्पनया स्वरे सिद्धेऽपि द्वन्द्वेऽवग्रहप्रतिषेधात्, अत्र च पदपाठेऽवग्रहदर्शनात् पदपाठविरोधः स्पष्ट एव । पदपाठानुग्रहः सर्वथा कार्य इति नैव वैदिकानां राद्धान्तः । अत एवाह यास्कः—'वा इति च य इति च चकार शाकल्य उदात्तं त्वेवमाख्यातमभविष्यदसुसमाप्तश्चैवार्थः' (निरु० ६।२८) । अन्यत्रापि यास्कः पदपाठमुपेक्षते । यथा 'अरुणोमासकृत्' (ऋ० १।१०५।१८) मन्त्रव्याख्याने 'मासकृत्' इतिशाकलपदपाठमुपेक्ष्य 'मासानामर्धमासानां च कर्त्ता' ( निरु० ५।२१ ) व्याख्यन् 'मासकृत्' इत्येकं पदं स्वीचकार । महाभाष्यकारः पतञ्जलिरप्याह—'न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम्' (महा० ३।१।१०९; ६।१।२०१; ८।२।१६) ।

भगवद्दयानन्दपादास्तु एतन्मन्त्रव्याख्यानेऽन्यभाष्यकारवत् 'दोषावस्तः' पदं व्याचख्युः । परन्तु यजुर्भाष्ये (३।२२) अस्यैव मन्त्रस्य व्याख्याने 'दोषां रात्रिं वस्ते स्वतेजसाऽऽच्छाद्य निवारयति सोऽग्निः' इत्येवं व्याचख्युः । तस्मादाचार्यपादा उभयथाऽप्यस्य व्याख्यानं स्वीकुर्वन्तीति स्पष्टम् । यजुर्भाष्ये यथा व्याख्यानं तथा सतीश्वरपक्षे सम्बोधनस्वरोऽवग्रहश्चाञ्जसा सिद्ध्यतः ।

मनुष्याणां वा ( गोपाम् ) गोपायति[1] रक्षति तम् । ( ऋतस्य ) सत्यस्य सर्वविद्यायुक्तस्य वेदचतुष्टयस्य सनातनस्य जगत्कारणस्य वा । ऋतमिति सत्यनामसु पठितम् । निघं० ३ । १० । ऋत इति पदनामसु च । निघं० ५ । ४ । ( दीदिविम् ) सर्वप्रकाशकम् । दिवो द्वे दीर्घश्चाभ्यासस्य । उ० ४ । ५५ अनेन क्विन्प्रत्ययः । ( वर्धमानम् ) ह्रासरहितम् ( स्वे ) स्वकीये (दमे) दाम्यन्त्युपशाम्यन्ति दुःखानि यस्मिंस्तस्मिन् परमानन्दे पदे । दमुधातोः हलश्च । अ० ३।३।१२१ अनेनाधिकरणे 'घञ्' प्रत्ययः ॥ ८ ॥

**अन्वयः—वयं** स्वे दमे वर्धमानं राजन्तमध्वराणां गोपामृतस्य दीदिविं **परमेश्वरं नित्यमुपैमसि**[2] ॥ ८ ॥

**भावार्थः—परमात्मा स्वस्य सत्तायामानन्दे च क्षयाज्ञानरहितोऽन्तर्यामिरूपेण सर्वान् जीवान् सत्यमुपदिशन्नाप्तान् संसारं च रक्षन् सदैव वर्तते । एतस्योपासका वयमप्यानन्दिता बुद्धियुक्ता विज्ञानवन्तो भूत्वाऽभ्युदयनिःश्रेयसं प्राप्ताः सदैव वर्त्तामहे इति ॥ ८ ॥**

फिर भी वह परमेश्वर किस प्रकार का है, सो अगले मन्त्र में उपदेश किया है—

**पदार्थान्वयभाषा**—हम लोग[3] (स्वे) अपने (दमे) उस परम आनन्द पद में कि जिसमें बड़े-बड़े दुःखों से छूट कर मोक्षसुख को प्राप्त हुए पुरुष रमण करते हैं, (वर्धमानम्) सबसे बड़े ( राजन्तम् ) प्रकाशस्वरूप ( अध्वराणाम् ) पूर्वोक्त यज्ञादि अच्छे-अच्छे कर्म और धार्मिक[4] मनुष्यों के ( गोपाम् ) रक्षक ( ऋतस्य ) सत्यविद्यायुक्त चारों वेदों और कार्य जगत् के अनादि कारण के (दीदिविम्) प्रकाश करनेवाले परमेश्वर को उपासना योग से प्राप्त होते हैं ॥८॥

**भावार्थ**—[5]विनाश और अज्ञान आदि दोष रहित परमात्मा अपने अन्तर्यामिरूप से सब जीवों को सत्य का उपदेश तथा श्रेष्ठ विद्वानों और सब जगत् की रक्षा करता हुआ अपनी सत्ता और परम आनन्द में प्रवृत्त हो रहा है । उस परमेश्वर के उपासक हम भी आनन्दित बुद्धियुक्त विज्ञानवान् होकर विज्ञान में विहार करते हुए परम आनन्दरूप विशेष फलों को प्राप्त होते हैं ॥८॥



१. क. ख ग. संज्ञकेषु त्रिष्वपि हस्तलेखेषु यथामुद्रित एव पाठ उपलभ्यते । वै० य० मुद्रितेषु सस्करणेषु 'गाः पृथिव्यादीन् पाति रक्षति तम्' इति पाठः । अस्मिन् पाठे गोपापदस्य 'अध्वराणाम्' पदेनान्वयो नोपपद्यते । यजुर्भाष्ये (३।२३) एतन्मन्त्रव्याख्याने कखहस्तलेखयोः '(गोपाम्) रक्षकम्' इत्येव पाठ आसीत्, तत्रापि 'इन्द्रियपश्वादीनां' पदं गहस्तलेखे प्रवर्धितः ।

२. 'उपैमसि' पदं पूर्वस्मान्मन्त्रादनुवर्तते । यजुर्भाष्ये (३।२३) तु 'नमः, भरन्तः, धिया, उप, आ, इमसि' पदानामनुवृत्तिः प्रदर्शिता ।

३. 'हम लोग' ये पद अन्त में थे, संस्कृत-अन्वयानुसार यहां लाये ।

४. वै० य० मुद्रित संस्करणों में 'मनुष्य तथा (गोपाम्) पृथिव्यादिकों की रक्षा (ऋतस्य)' पाठ है। वह भी ग. हस्तलेख में परिवर्धित है । विशेष संस्कृत-टिप्पणी में देखें ।

५. वै० य० मुद्रित संस्करणों में 'जैसे विनाश·········वैसे ही परमेश्वर के' पाठ में जैसे, वैसे' पद संस्कृत के अनुसार नहीं हैं, और अनावश्यक भी हैं ।

स कान् क इव रक्षतीत्युपदिश्यते—

स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥ ९ ॥

सः । नः । पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव ॥ सचस्व । नः । स्वस्तये ॥ ९ ॥

**पदार्थः**—(सः) जगदीश्वरः (नः) अस्मभ्यम् (पितेव) जनकवत् (सूनवे) स्वसन्तानाय (अग्ने) ज्ञानस्वरूप ! (सूपायनः) सुष्ठु उपगतमयनं ज्ञानं सुखसाधनं पदार्थप्रापणं यस्मात्सः । (भव सचस्व) समवेतान् कुरु । अन्येषामपि दृश्यते । अ० ६ । ३ । १३७ इति दीर्घः । (नः) अस्मान् (स्वस्तये) सुखाय कल्याणाय च ॥ ६ ॥

**अन्वयः**—हे अग्ने ! स त्वं सूनवे पितेव नोऽस्मभ्यं सूपायनो भव । एव नोऽस्मान् स्वस्तये सचस्व ॥ ६ ॥

**अत्रोपमालङ्कारः ।**

**भावार्थः**—सर्वैरेवं प्रयत्नः कर्त्तव्य ईश्वरः प्रार्थनीयश्च—हे भगवन् ! भवानस्मान् रक्षयित्वा शुभेषु गुणकर्मसु सदैव नियोजयतु । यथा पिता स्वसन्तानान् सम्यक् पालयित्वा सुशिक्ष्य शुभगुणकर्म्मयुक्तान् श्रेष्ठकर्मकर्तृंश्च संपादयति, तथैव भवानपि स्वकृपयाऽस्मान्निष्पादयत्विति ॥ ६ ॥

**प्रथमसूक्ते पञ्चभिर्मन्त्रैः श्लेषालङ्कारेण व्यवहारपरमार्थविद्याद्वयसाधनं प्रकाशितम् । एवं चतुर्भिर्मन्त्रैरीश्वरस्योपासना स्वभावश्च [वर्णितोऽ]स्तीति ।**

**इदं सूक्तं** सायणाचार्य्यादिभिर्यूरोपाख्यदेशनिवासिभिश्चान्यथैव व्याख्यातम् ॥

**इति प्रथमं सूक्तं समाप्तं वर्गश्च द्वितीयः ॥**

वह परमेश्वर किसके समान किनकी रक्षा करता है, सो अगले मन्त्र में उपदेश किया है—

**पदार्थान्वयभाषा**—हे (अग्ने) ज्ञानस्वरूप परमेश्वर ! (सः) उक्त गुणयुक्त आप, (पितेव) जैसे पिता (सूनवे) अपने पुत्र के लिये उत्तम ज्ञान का देनेवाला होता है, वैसे ही (नः) हम लोगों के लिये (सूपायनः) शोभन ज्ञान, जो कि सब सुखों का साधक, और उत्तम-उत्तम पदार्थों का प्राप्त करनेवाला है, उसके देनेवाले [(भव) हूजिये । तथा] ( नः ) हम लोगों को (स्वस्तये) सब सुख के लिये ( सचस्व ) संयुक्त कीजिये ॥ ६ ॥

इस मन्त्र में उपमालङ्कार है ।

**भावार्थ**—सब मनुष्यों को उत्तम प्रयत्न और ईश्वर की प्रार्थना इस प्रकार से करनी चाहिये कि—हे भगवन् ! [ आप हमारी रक्षा करके हमें शुभगुण और कर्मों में सदा लगावें । तथा] जैसे पिता अपने पुत्रों का अच्छी प्रकार पालन करके और उत्तम उत्तम शिक्षा देकर उनको शुभ गुण[युक्त] और श्रेष्ठ कर्म करने योग्य बना देता है, वैसे ही आप हम लोगों को शुभ गुण और शुभ कर्मों में युक्त सदैव कीजिये ॥ ६ ॥

इस प्रथम सूक्त में पहले पांच मन्त्रों करके **श्लेषालङ्कार** से व्यवहार और परमार्थ की विद्याओं का प्रकाश किया, और चार मन्त्रों से ईश्वर की उपासना और [ उसके ] स्वभाव का वर्णन किया है।

**सायणाचार्य्य** आदि और यूरोपदेशवासी डाक्टर **विलसन** आदि ने इस सूक्तभर की व्याख्या उलटी की है। सो मेरे इस भाष्य और उनकी व्याख्या को मिलाकर देखने से सबको विदित हो जायेगा ।।

यह पहला सूक्त और दूसरा वर्ग समाप्त हुआ ।।



अथ नवर्चस्य द्वितीयसूक्तस्य मधुच्छन्दा ऋषिः। १-३ वायुः; ४-६ इन्द्रवायू; ७-९ मित्रावरुणौ च देवताः। १, २ पिपीलिकामध्या निचृद्गायत्री; ३-५, ७-९ गायत्री; ६ निचृद्गायत्री च छन्दः। षड्जः स्वरः ।।

**तत्र येन सर्वे पदार्थाः शोभिताः कृताः[1] सन्ति, सोऽर्थ उपदिश्यते—**

**वायवा याहि दर्शतेमे सोमा अरंकृताः। तेषां पाहि श्रुधी हवम् ।। १ ।।**

**वायो इति। आ। याहि। दर्शत। इमे। सोमाः। अरम्ऽकृताः।। तेषाम्। पाहि। श्रुधि। हवम् ।।१।।**

**पदार्थः—(वायो) अनन्तबल सर्वप्राणान्तर्यामिन्नीश्वर! तथा सर्वमूर्त्तद्रव्याधारो जीवनहेतुर्भौतिको वा।** प्र वांवृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते। विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ।। य० ३३। ४४। **अस्योपरि निरुक्तव्याख्यानरीत्येश्वरभौतिकौ पुष्टिकर्त्तारौ नियन्तारौ द्वावर्थौ वायुशब्देन गृह्येते।**

तथा[2] अथातो मध्यस्थाना देवताः, तासां वायुः प्रथमागामी भवति। वायुर्वातेर्वेत्तेर्वा[3] स्याद् गतिकर्मण एतेरिति स्थौलाष्ठीविरनर्थको वकारस्तस्यैषा भवति—वायवा याहि०। वायवायाहि दर्शनीयेमे सोमा अरंकृता अलंकृतास्तेषां पिब शृणु नो ह्वानमिति। निरु० १०। १-२ ।।

---

१. क. कोशे विद्यते, भाषार्थोऽप्युपलभ्यते।

२. वै०य० मुद्रितेषु संस्करणेषु 'तद्यथा' पदमुपलभ्यते। तच्चात्र न समवैति। क. ख. कोशयोर्नास्ति।

३. निरुक्तपाठे 'वेतेर्वा' पाठः। भाष्यकार उत्तरत्र 'वेत्तेर्वा' पाठमेव व्याख्यायति। तस्मात् 'वेत्तेर्वा' इत्येव भाष्यकार-सम्मतः पाठोऽनुमीयते। 'वेत्तेः' पाठे 'गतिकर्मणः' इत्यस्य 'गतेस्त्रयोऽर्थाः—ज्ञानं गमनं प्राप्तिश्चेति' वृद्धव्यवहारानुसारमत्र जानात्यर्थो द्रष्टव्यः। 'वेतेर्वा' इति पाठेऽपि गतेर्ज्ञानार्थत्वे न किञ्चिद् दुष्यति। तथा सति व्याख्याने यत्र यत्र 'वेत्ति' पदं श्रूयते तत्र तत्र 'वेति' इत्येवं शोधनीयः। अत्र ग्रन्थकृत उणादिवृत्तेः 'वाति गच्छति जानाति वेति वायुः पवनः परमेश्वरो वा' ( १। १ ) पाठोऽप्यनुसन्धेयः।

**अन्तरिक्षमध्ये ये पदार्थाः सन्ति तेषां मध्ये वायुः प्रथमागाम्यस्ति। वाति सोऽयं वायुः सर्वगत्वादीश्वरो गतिमत्त्वाद् भौतिकोऽपि गृह्यते। वेत्ति सर्वं जगत्स वायुः परमेश्वरोऽस्ति, तस्य सर्वज्ञत्वात्। मनुष्यो येन वायुना तन्नियमेन प्राणायामेन वा परमेश्वरं शिल्पविद्यामयं यज्ञं वा वेत्ति जानातीत्यर्थेन भौतिको वायु गृह्यते। एवमेवैति प्राप्नोति चराचरं जगदित्यर्थेन परमेश्वरस्यैव ग्रहणम्। तथा एति प्राप्नोति सर्वेषां लोकानां परिधीनित्यनेनार्थेन[1] भौतिकस्यापि। कुतः? अन्तर्यामिरूपेणेश्वरस्य मध्यस्थत्वात्प्राणवायुरूपेण भौतिकस्यापि। मध्यस्थत्वादेतद् द्वयार्थस्य वाचिका वायवायाहीत्यृक् प्रवृत्तास्तीति विज्ञेयम्।**

वायुः सोमस्य रक्षिता वायुमस्य रक्षितारमाह साहचर्य्याद् रसहरणाद्वा०। निरु० ११। ५॥ **वायुः सोमस्य सुतस्योत्पन्नस्यास्य जगतो रक्षकत्वादीश्वरोऽत्र गृह्यते। कस्मात् सर्वेण जगता सह साहचर्य्येण व्याप्तत्वात्। सोमस्य[2] सोमवल्ल्यादेरोषधिगणस्य रसहरणात् तथा समुद्रादेर्जल-ग्रहणाच्च भौतिको वायुरप्यत्र गृह्यते।**

वायुर्वा अग्निः सुषमिद्वायुर्हि स्वयमात्मानं समिन्धे स्वयमिदं सर्वं यदिदं किञ्च वायुमेव तदन्तरिक्षलोक आयातयति वायुर्वै प्रणीर्यज्ञानाम्॥ वायुर्वै तूर्णिर्हव्यवाड् वायुर्हीदं सर्वं सद्यस्तरति यदिदं किंच वायुर्देवेभ्यो हव्यं वहति। ऐ० २। ३४॥

**वायुर्भौतिकोऽग्निदीपनस्य सुषमिदिति ग्राह्यः। वायुसंज्ञोऽहमीश्वरः स्वयमात्मानं यदिदं किञ्चिज्जगद् वर्त्तते तदिदं सर्वं स्वयं समिन्धे प्रकाशयामि। तथा स एवान्तरिक्षलोके भौतिकमिमं वायुमायातयति विस्तारयति स एव वायुर्भौतिको वा यज्ञानां प्रापकोऽस्तीत्यत्र वायुशब्देनेश्वरश्च। तथा वायुर्वै तूर्णिरित्यादिना भौतिको गृह्यत इति।**

**(आयाहि) आगच्छ आगच्छति वा। अत्र पक्षे [3]पुरुषव्यत्ययः। (दर्शत) ज्ञानदृष्ट्या द्रष्टुं योग्य! योग्यो वा। (इमे) प्रत्यक्षाः (सोमाः) सूयन्त उत्पद्यन्ते ये ते पदार्थाः (अरंकृताः) अलंकृता भूषिताः।** संज्ञाछन्दसोर्वा कपिलकादीनामिति वक्तव्यम्। अ० ८। २। १८ **इति लत्व-विकल्पः। (तेषाम्) तान् पदार्थान्।** षष्ठी शेषे। अ० २। ३। ५० **इति शेषत्वविवक्षायां षष्ठी। (पाहि) [रक्ष][4] रक्षयति वा। (श्रुधि) [शृणुहि][4] श्रावयति वा। अत्र** बहुलं छन्दसि [अ० २। ४। ७३] **इति शपो लुकि] विकरणाभावः[5]।** श्रुशृणुपृकृवृभ्यश्छन्दसि। ६।४।१०२ **अनेन हेर्धिः। [([6]हवम्) स्तुतिं शब्दव्यवहारं वा]॥१॥**

---

१. ग. कोशे पाठो दृश्यते। २. क. कोशे पदं विद्यते। उत्तरत्र लिपिकरप्रमादान्नष्टम्।

३. 'पुरुष' शब्दः ख. ग. कोशयोर्विद्यते। मुद्रणे प्रमादान्नष्टं स्यात्।

४. ईश्वरपक्षेऽर्थस्य स्पष्टतायै 'याहि' पदार्थवद एतस्य पाठ आवश्यकः।

५ तदुक्तं ग्रन्थकृता स्वीयेऽष्टाध्यायीभाष्ये—'शबादेशाः श्यन्नादयः करिष्यन्ते (महाभाष्य ३।१।६७) इति वचनाच्छपो लुकि तत्स्थानभाविनामादेशानामप्यभावः। तेन श्यन्नादीनामपि लुक्युदाहरणानि सिद्धचन्ति'। २।४।७३॥ अत्र ४८८ पृष्ठे भूमिकायां 'बहुलं छन्दसि' २।४।७३ सूत्रव्याख्यानमपि द्रष्टव्यम्।

६ वै० य० मुद्रितयोः १,२ संस्करणयोः '( हवं )' पदं नास्ति। तच्च तृतीये संस्करणे पूरितम्। वस्तुतोऽत्र लेखकप्रमादान्मुद्रणप्रमादाद्वा मन्त्रपदं तद्व्याख्यानं च नष्टम्।

**अन्वयः**—हे दर्शत वायो **जगदीश्वर** ! त्वमायाहि । **येन** त्वयेमे सोमा अरंकृता **अलंकृताः सन्ति** । तेषां **तान् पदार्थान्** पाहि, **अस्माकं** हवं श्रुधि ॥

**योऽयं** दर्शत द्रष्टुं **योग्यो** वायो [1]**वायुः**, **येनेमे** सोमा अरंकृता **अलंकृताः सन्ति, स** तेषां **तान् सर्वानिमान् पदार्थान्** पाहि **पाति**, श्रुधि हवं **स एव सर्वं शब्दव्यवहारं श्रावयति** । आयाहि **सर्वान् पदार्थान् स्वगत्या प्राप्नोति** ॥ १ ॥

**अत्र श्लेषालङ्कारेणेश्वरभौतिकावर्थौ गृह्येते ।**

भावार्थः—**ब्रह्मणा स्वसामर्थ्येन सर्वे पदार्थाः सृष्ट्वा नित्यं भूष्यन्ते, तथा तदुत्पादितेन वायुना च । नैव तद्धारणेन विना कस्यापि रक्षणं संभवति । प्रेम्णा जीवेन प्रयुक्तां स्तुतिं वाणीं चेश्वरः सर्वगतः प्रतिक्षणं शृणोति । तथा जीवो वायुनिमित्तेनैव शब्दानामुच्चारणं श्रवणं च कर्त्तुं शक्नोतीति** ॥ १ ॥

अब द्वितीय सूक्त का प्रारम्भ है । उसके प्रथम मन्त्र में उन पदार्थों का वर्णन किया है कि जिन्होंने सब पदार्थ शोभित कर रक्खे हैं—

**पदार्थान्वयभाषा** हे ( दर्शत ) ज्ञान से देखने योग्य ( वायो ) अनन्त बलयुक्त सब के प्राणरूप अन्तर्यामी परमेश्वर ! आप हमारे हृदय में ( आयाहि ) प्रकाशित हूजिये । कैसे आप हैं कि जिन्होंने ( इमे ) इन प्रत्यक्ष ( सोमाः ) संसारी पदार्थों को ( अरंकृताः ) अलंकृत अर्थात् सुशोभित कर रक्खा है । आप ही ( तेषाम् ) उन पदार्थों की ( पाहि ) रक्षा कीजिये, और हमारी ( हवम् ) स्तुति को ( श्रुधि ) सुनिये ॥

तथा ( दर्शत ) स्पर्शादि गुणों से जानने योग्य, ( वायो ) सब मूर्तिमान् पदार्थों का आधार, और प्राणियों के जीवन का हेतु भौतिक वायु ( आयाहि ) सब को प्राप्त होता है । फिर जिस भौतिक वायु ने ( इमे ) प्रत्यक्ष ( सोमाः ) संसार के पदार्थों को ( अरंकृताः ) शोभायमान किया है, वही ( तेषाम् ) उन पदार्थों की (पाहि) रक्षा का हेतु है । और जिससे सब प्राणी लोग ( हवम् ) कहने और सुनने रूप व्यवहार को ( श्रुधि ) कहते सुनते हैं ॥

आगे ईश्वर और भौतिक वायु के पक्ष में प्रमाण दिखलाते हैं – ( प्रवावृजे० ) इस प्रमाण में वायु शब्द से परमेश्वर और भौतिक वायु पुष्टिकारी और जीवों को यथायोग्य नियमों में चलानेवाले गुणों से ग्रहण किये गये हैं । ( अथातो० ) जो-जो पदार्थ अन्तरिक्ष में हैं, उनमें प्रथमागामी वायु अर्थात् उन पदार्थों में रमण करनेवाला कहाता है । [2][सब को प्राप्त होने से परमेश्वर और गमनशील होने से भौतिक वायु का ग्रहण होता है । ] तथा सब जगत् को जानने से वायु शब्द करके परमेश्वर का ग्रहण होता है । तथा मनुष्य लोग वायु से प्राणायाम करके और उनके गुणों के ज्ञान द्वारा परमेश्वर और शिल्पविद्यामय यज्ञ को जान सकता है । इस अर्थ से

१. 'वायो वायुः' पाठः वै०य० मुद्रितेषु संस्करणेषु 'स एव' इत्यस्मादुपरिष्टाद् दृश्यते । संस्कृतान्वयानुसारं भाषार्थानुसारं चात्र पाठो युक्तः ।

२. यहां भाषा संस्कृत से कुछ भिन्न है ।

वायु शब्द करके ईश्वर और भौतिक का ग्रहण होता है। इसी प्रकार जो चराचर जगत् में व्याप्त हो रहा है, इस अर्थ से वायु शब्द करके परमेश्वर का, तथा जो सब लोकों को परिधिरूप से घेर रहा है, इस अर्थ से भौतिक का ग्रहण होता है। क्योंकि परमेश्वर अन्तर्यामिरूप और भौतिक प्राणरूप से संसार में रहनेवाले हैं। इन्हीं दो अर्थों की कहनेवाली वेद की ( वायवा याहि० ) यह ऋचा जाननी चाहिये।

इसी प्रकार से इस ऋचा का ( वायवा याहि दर्शनीये० ) इत्यादि व्याख्यान निरुक्तकार ने भी किया है, सो संस्कृत में देख लेना। वहां भी वायु शब्द से परमेश्वर और भौतिक इन दोनों का ग्रहण है। तथा ( वायुः सोमस्य० ) वायु अर्थात् परमेश्वर उत्पन्न हुए जगत् की रक्षा करनेवाला, और उसमें व्याप्त होकर उसके अंश-अंश के साथ भर रहा है। इस अर्थ से ईश्वर का। तथा सोमवल्ली आदि ओषधियों के रस हरने, और समुद्रादिकों के जल को ग्रहण करने से भौतिक वायु का ग्रहण जानना चाहिये। ( वायुर्वा अ० ) इत्यादि वाक्यों में वायु को अग्नि के अर्थ में भी लिया है। परमेश्वर का उपदेश है कि मैं वायुरूप होकर इस जगत् को आप ही प्रकाश करता हूं। तथा मैं ही अन्तरिक्ष लोक में भौतिक वायु को अग्नि के तुल्य परिपूर्ण और यज्ञादिकों को वायुमण्डल में पहुंचानेवाला हूं ॥ १ ॥

इस मन्त्र में श्लेषालङ्कार [से वायु शब्द से परमेश्वर और भौतिक वायु का ग्रहण होता] है।

**भावार्थ**[1]—जैसे परमेश्वर के सामर्थ्य से रचे हुए पदार्थ नित्य ही सुशोभित होते हैं, वैसे ही जो ईश्वर का रचा हुआ भौतिक वायु है। उसकी धारणा से भी सब पदार्थों की रक्षा और शोभा। तथा जैसे जीव की प्रेमभक्ति से की हुई स्तुति का सर्वगत ईश्वर प्रतिक्षण सुनता है, वैसे ही भौतिक वायु के निमित्त से भी जीव शब्दों में उच्चारण और श्रवण करने को समथ होता है ॥ १ ॥



**कथममेतौ स्तोतव्यावित्युपदिश्यते—**

**वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः । सुतसोमा अहर्विदः ॥ २ ॥**

**वायो इति । उक्थेभिः । जरन्ते । त्वाम् । अच्छ । जरितारः ॥ सुतऽसोमाः । अहःऽविदः ॥ २ ॥**

**पदार्थः—(वायो) अनन्तबलेश्वर! (उक्थेभिः) स्तोत्रैः । अत्र** बहुलं छन्दसि [अ० ७।१।१०] **इति भिसः स्थान ऐस्भावः ।** (जरन्ते) **स्तुवन्ति ।** जरा स्तुतिर्जरतेः स्तुतिकर्मणः । निरु० १०।८। **जरत** इत्यर्चतिकर्मा । निघं० ३ । १४ । (त्वाम्) **भवन्तम् (अच्छ) साक्षात् ।** निपातस्य च । अ० ६ । ३ । १३५ इति दीर्घः । (जरितारः) **स्तोतारोऽर्चकाश्च (सुतसोमाः) सुता उत्पादिताः सोमा ओषध्यादिरसा विद्यार्थं यैस्ते (अहर्विदः) य अहर्विज्ञानप्रकाशं विन्दन्ति प्राप्नुवन्ति ते ।**

भौतिकवायुग्रहणे **खल्वयं विशेषः—(वायो) गमनशीलो विमानादिशिल्पविद्यानिमित्तः पवनः । (जरितारः) स्तोतारोऽर्थाद् वायुगुणस्तावका भवन्ति । यतस्तद्विद्या प्रकाशितगुणफला सती सर्वोपकाराय स्यात् ॥ २ ॥**

---

१. यहां भाषा संस्कृत से कुछ भिन्न है।

**अन्वयः**—हे वायो ! अर्हविदः सुतसोमा जरितारो विद्वांस उक्थेभिस्त्वामच्छा जरन्ते ॥२॥

**अत्र श्लेषालङ्कारः ।**

**भावार्थः—अनेन मन्त्रेण वेदादिस्थैः स्तुतिसाधनैः स्तोत्रैः परमार्थव्यवहारविद्यासिद्धये वायुशब्देन परमेश्वरभौतिकयोर्गुणप्रकाशेनोभे विद्ये साक्षात् कर्त्तव्ये इति ।**

**अत्रोभयार्थग्रहणे [1]प्रथममन्त्रोक्तानि प्रमाणानि ग्राह्याणि ॥ २ ॥**

उक्त परमेश्वर और भौतिक वायु किस प्रकार स्तुति करने योग्य हैं, सो अगले मन्त्र में उपदेश किया है—

**पदार्थान्वयभाषा**—हे (वायो) अनन्त बलवान् ईश्वर ! जो जो (अर्हविदः) विज्ञानरूप प्रकाश को प्राप्त होने ( सुतसोमाः ) ओषधि आदि पदार्थों के रस को उत्पन्न करने ( जरितारः ) स्तुति और सत्कार के करनेवाले विद्वान् लोग हैं, वे ( उक्थेभिः ) वेदोक्त स्तोत्रों से ( त्वाम् ) आपको ( अच्छ ) साक्षात् करने के लिये ( जरन्ते ) स्तुति करते हैं ॥

[भौतिक पक्ष में यह विशेष है—(वायो) गमनशील विमानादि शिल्पविद्या का निमित्त वायु = पवन । (जरितारः) स्तोता अर्थात् वायु के गुणों के प्रकाश करनेवाले होते हैं । जिससे इस वायुविद्या के गुण और फल प्रकाशित होकर सब के उपकार के लिये होवें ॥ २ ॥]

यहां श्लेषालङ्कार है ।

**भावार्थ**—इस मन्त्र से [तथा] जो वेदादि शास्त्रों में कहे हुए स्तुतियों के निमित्त स्तोत्र हैं, उनसे व्यवहार और परमार्थ विद्या की सिद्धि के लिये [वायु शब्द से] परमेश्वर और भौतिक वायु के गुणों का प्रकाश किया गया है । [इससे दोनों विद्याओं का साक्षात्कार करना चाहिये ।]

इस मन्त्र में वायु शब्द से परमेश्वर और भौतिक वायु के ग्रहण करने के लिये पहिले[2] मन्त्र में कहे हुए प्रमाण ग्रहण करने चाहियें ॥ २ ॥



**अथ तेषामुक्थानां श्रवणोच्चारणनिमित्तमुपदिश्यते—**

**वायो तव प्रपृञ्चती धेना जिगाति दाशुषे । उरूची सोमपीतये ॥ ३ ॥**

**वायो इति । तव । प्रऽपृञ्चती । धेना । जिगाति । दाशुषे ॥ उरूची । सोमऽपीतये ॥ ३ ॥**

**पदार्थः—(वायो) वेदवाणीप्रकाशकेश्वर ! (तव) जगदीश्वरस्य (प्रपृञ्चती) प्रकृष्टा चासौ पृञ्चती चार्थसंबन्धेन सकलविद्यासंपर्ककारयित्री (धेना) वेदचतुष्टयी वाक् ।** धेनेति वाङ्नामसु पठितम् । निघं० १ । ११ । **(जिगाति) प्राप्नोति** । जिगातीति गतिकर्मसु पठितम् । निघं० २ । १४ । **तस्मात् प्राप्त्यर्थो[3] गृह्यते । (दाशुषे) निष्कपटेन विद्यां दात्रे पुरुषार्थिने मनुष्याय**

१. द्वितीयसूक्तस्य प्रथममन्त्र इत्यर्थः । २. अर्थात् द्वितीय सूक्त के पहले मन्त्र में ।

३. गतेस्त्रयोऽर्थाः— ज्ञानं गमनं प्राप्तिश्चेत्युक्तं प्राक् ।

**(उरूची) बह्वीनां पदार्थविद्यानां ज्ञापिका**[1] । उर्विति बहुनामसु पठितम् । निघं० ३ । १ । **(सोमपीतये) सूयन्ते ये पदार्थास्तेषां पीतिः पानं यस्य, तस्मै विदुषे मनुष्याय । अत्र** सह सुपा [अ० २ । १ । ४] **इति**[2] **समासः ।**

भौतिकपक्षे त्वयं **विशेषः—( वायो ) पवनस्य योगेनैव ( तव ) अस्य ( प्रपृञ्चती ) शब्दोच्चारणसाधिका ( धेना ) वाणी ( दाशुषे ) शब्दोच्चारणकर्त्रे ( उरूची ) बह्वर्थज्ञापिका ।** अन्यत् **पूर्ववत्** ॥ ३ ॥

**अन्वयः**—हे वायो **परमेश्वर ! भवत्कृपया** या तव प्रपृञ्चत्युरूची धेना **सा** सोमपीतये दाशुषे विदुषे जिगाति ॥

**तथा** तवास्य वायो **प्राणस्य** प्रपृञ्चत्युरूची धेना सोमपीतये दाशुषे **जीवाय** जिगाति ॥ ३ ॥

**अत्रापि श्लेषालङ्कारः ।**

**भावार्थः—द्वितीयमन्त्रे यया वेदवाण्या परमेश्वरभौतिकयोर्गुणाः प्रकाशितास्तस्याः फल-प्राप्ती**[3] **अस्मिन् मन्त्रे प्रकाशिते स्तः । अर्थात् प्रथमार्थे वेदविद्या द्वितीये वक्तॄणां जीवानां वाङ्-निमित्तं च प्रकाश्यत इति ॥ ३ ॥**

पूर्वोक्त स्तोत्रों का जो श्रवण और उच्चारण का निमित्त है, उसका प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे (वायो) वेदविद्या के प्रकाश करनेवाले परमेश्वर! (तव) आपकी [कृपा से जो] (प्रपृञ्चती) सब विद्याओं के संबन्ध से विज्ञान का प्रकाश कराने, और ( उरूची ) अनेक विद्याओं के प्रयोजनों को प्राप्त करानेहारी (धेना) चार वेदों की वाणी है, सो (सोमपीतये) उत्पन्न किये जाने योग्य संसारी पदार्थों के निरन्तर विचार करने, तथा (दाशुषे) निष्कपट से प्रीति के साथ विद्या देनेवाले पुरुषार्थी विद्वान् को (जिगाति) प्राप्त होती है ॥

दूसरा **अर्थ—( वायो तव )** इस **भौतिक** वायु के योग से जो ( प्रपृञ्चती ) शब्दोच्चारण श्रवण कराने **और (उरूची)** अनेक पदार्थों की जनानेवाली ( धेना ) वाणी है, सो (सोमपीतये) [ उत्पन्न किये जाने योग्य ] संसारी पदार्थों के पान अर्थात् निरन्तर विचार करनेवाले (दाशुषे) शब्दोच्चारण-श्रवण करनेवाले पुरुषार्थी विद्वान् को (जिगाति) प्राप्त होती है ॥ ३ ॥

यहां भी श्लेषालङ्कार है ।

---

१. अञ्चतेर्गत्यर्थत्वादिह प्राप्तिरूपोऽर्थो गृह्यते ।

२. यस्य समासस्य लक्षणं न दृश्यते तस्यानेन समासो भवति । तदुक्तं भाष्यकारेण—'सुपा सह सुप् समस्यते । अधिकारश्च लक्षणं च । यस्य सामान्यलक्षणं नास्ति, इदं तस्य लक्षणं भविष्यति' । २ । १ । ४ ॥

३. फलं प्राप्तिश्च । अत्र 'लघ्वक्षरं पूर्वं निपतति' इति वार्तिकेन (२।२।३४) फलस्य पूर्वनिपातः । यद्वा 'नाडीमुष्ट्योश्च' (अ० ३।२।३०) इत्यत्र मुष्टेः परनिपातेन घ्यन्तस्य पूर्वनिपातस्यानित्यत्वज्ञापनात् न प्राप्तिशब्दस्य पूर्वनिपातः ।

भावार्थ — दूसरे मन्त्र में जिस वेदवाणी से परमेश्वर और भौतिक वायु के गुण प्रकाश किये हैं, उसका फल और प्राप्ति इस मन्त्र में प्रकाशित की है। अर्थात् प्रथम अर्थ से वेदविद्या और दूसरे से जीवों की वाणी के निमित्त [का] प्रकाश किया है ॥ ३ ॥



अथोक्थप्रकाशितपदार्थानां वृद्धिरक्षणनिमित्तमुपदिश्यते—

इन्द्र॑वायू इ॒मे सु॒ता उप॒ प्रयो॑भि॒रा ग॑तम् । इन्द॑वो वामु॒शन्ति॒ हि ॥ ४ ॥

इन्द्र॑वायू॒ इति॑ । इ॒मे । सु॒ताः । उप॑ । प्रयः॑ऽभिः । आ । ग॒त॒म् ॥ इन्द॑वः । वा॒म् । उ॒शन्ति॑ । हि ॥४॥

**पदार्थः—(इन्द्रवायू) इमौ प्रत्यक्षौ सूर्य्यपवनौ।** इन्द्रे॑ण रोच॒ना दि॒वो दृ॒ळ्हानि॑ दृंहि॒तानि॑ च । स्थि॒राणि॒ न प॑रा॒णुदे॑ ॥ ऋ० ८ । १४ । ९ । **यथेन्द्रेण सूर्य्यलोकेन प्रकाशमानाः किरणा धृताः, एवं च स्वाकर्षणशक्त्या पृथिव्यादीनि भूतानि दृढानि पुष्टानि स्थिराणि कृत्वा दृंहितानि धारितानि सन्ति ( न पराणुदे ) अतो नैव स्वस्वकक्षां विहायेतस्ततो भ्रमणाय समर्थानि भवन्ति।**

'इ॒मे चि॑दिन्द्र॒ रोध॑सी अ॒पा॒रे यत्सं॑गृ॒भ्णा म॑घवन् का॒शिरि॒त्ते' । इमे चिदिन्द्र रोदसी रोधसी द्यावापृथिव्यौ विरोधनाद् रोधः [कूलं निरुणद्धि स्रोतः] कूलं रुजतेर्विपरीताल्लोष्ठो विपर्य्ययेणापारे दूरपारे यत्संगृभ्णासि मघवन् काशिस्ते महान्। 'अ॒हु॒स्तमि॑न्द्र॒ सं पि॑ण॒क्कुणा॑रुम्' । अहस्तमिन्द्र कृत्वा संपिण्ढि परिक्वणनं मेघम् । निरु० ६ । १ ॥

**यतोऽयं सूर्य्यलोको भूमिप्रकाशौ धारितवानस्ति, अत एव पृथिव्यादीनां निरोधं कुर्वन् पृथिव्याः[1] मेघस्य च कूलं स्रोतश्चाकर्षणेन निरुणद्धि। यथा बाहुवेगेनाकाशे प्रतिक्षिप्तो लोष्ठो मृत्तिकाखण्डः पुनःवपर्य्ययेण[2] आकर्षणाद् भूमिमेवागच्छति, एवं दूरे स्थितानपि पृथिव्यादिलोकान् सूर्य्य एव धारयति। सोऽयं सूर्य्यस्य महानाकर्षः प्रकाशश्चास्ति। तथा वृष्टिनिमित्तोऽप्ययमेवास्ति।** इन्द्रो वै त्वष्टा। ऐ० ब्रा० ६ । १० । **सूर्य्यो भूम्यादिस्थस्य रसस्य मेघस्य च छेत्तास्ति। एतानि [भौतिकेन्द्रविषयाणि प्रमाणानि।] भौतिकवायुविषयाणि** 'वायवा याहि०'[3] **इति मन्त्रप्रोक्तानि प्रमाणान्यत्रापि ग्राह्याणि।**

**(इमे) प्रत्यक्षभूताः (सुताः) पदार्थाः (उप) समीपम् (प्रयोभिः) तृप्तिकरैरन्नादिभिः पदार्थैः सह।** प्रीञ् तर्पणे कान्तौ **चेत्यस्मादौणादिकोऽसुन्प्रत्ययः। (आगतम्) आगच्छतः। लोट्मध्यमद्विवचनम्।** बहुलं छन्दसि (अ० २ । ४ । ७३) **इति शपो लुक्।** अनुदात्तोपदेश० (अ० ६ । ४ । ३७) **इत्यनुनासिकलोपः। (इन्दवः) जलानि क्रियामया यज्ञाः प्राप्तव्या भोगाश्च।** इन्दुरित्युदकनामसु पठितम्। निघं १ । १२ । यज्ञनामसु । निघं ३ । १७ । पदनामसु च । ५ । ४ । **(वाम्) तौ (उशन्ति) प्रकाशन्ते (हि) यतः ॥ ४ ॥**

१. वै० य० मुद्रितेषु संस्करणेषु 'पृथिव्यां' अपपाठोऽनन्वयात्। भाषार्थो 'पृथिव्याः' पदस्यैव दृश्यते।

२. निरुक्तस्य संहितापाठे 'विपर्ययेण' 'अविपर्ययेण' इत्युभयथाऽपि छेदः सम्भवति। एतद ग्रन्थकृता 'विपर्ययेण' छेद आश्रितः। निरुक्तव्याख्यातारस्तु 'अविपर्ययेण' इत्येवं छिदन्ति।

३. ऋ० १।२।१ ॥ द्र०—पृष्ठ ४५६, ४६० ।

**अन्वयः**—इमे सुता इन्दवो हि **यतो** वां **तौ सहचारिणा**विन्द्रवायू **प्रकाशन्ते**, **तौ** पागच्छतस्ततः प्रयोभिरन्नादिभिः पदार्थैः सह सर्वे प्राणिनः सुखान्युशन्ति **कामयन्ते**[1] ।।४।।

**भावार्थः—अस्मिन् मन्त्रे प्राप्यप्रापकपदार्थानां प्रकाशः कृत इति** ।। ४।।

अब जो स्तोत्रों से प्रकाशित पदार्थ हैं, उनकी वृद्धि और रक्षा के निमित्त का अग में उपदेश किया है—

**पदार्थान्वयभाषा**—[2] (इमे) ये प्रत्यक्ष (सुताः) उत्पन्न हुए पदार्थ (इन्दवः) जो जल, यज्ञ **और** प्राप्त होने योग्य भोग पदार्थ हैं, वे (हि) जिस कारण [ (वाम्) उन दोनों (इन्द्र सूर्य **और** पवन को ( उशन्ति ) प्रकाशित करते हैं, [ और वे सूर्य तथा पवन (उपागतम्) प्राप्त होते हैं,] इसी कारण ( प्रयोभिः ) [तृप्ति करानेवाले] अन्नादि पदार्थों के साथ सुख की कामना करते हैं ।।

यहां इन्द्र शब्द के भौतिक अर्थ के लिये ऋग्वेद के मन्त्र का प्रमाण दिखलाते हैं— सूर्यलोक ने अपनी प्रकाशमान किरणों, तथा अपने आकर्षण अर्थात् पदार्थ खैंचने के सा पृथिवी आदि लोकों को स्थिर करके धारण किया है। इससे वे 'न पराणुदे' अपने-अपने चक्र अर्थात् घूमने के मार्ग को छोड़कर इधर-उधर हटके नहीं जा सकते हैं। ( इमे चिदि [ जिस कारण ] सूर्य लोक [ ने ] भूमि आदि लोकों तथा प्रकाश को धारण किया है, कारण] वह पृथिवी आदि को अपनी खैंचने की शक्ति से पृथिवी के किनारे और **मेघ** के स्रोत को रोक रहा है। जैसे आकाश में [हाथ के वेग से] फैंका हुआ मिट्टी का ढेला की आकर्षणशक्ति से पृथिवी पर ही लौटकर आ पड़ता है, इसी प्रकार दूर ठहरे हुए भी आदि लोकों को सूर्य ने ही आकर्षण शक्ति से खैंचके धारण कर रखा है। यही सूर्य का बड़ा आकर्षण और प्रकाश वर्षा का निमित्त भी है। (इन्द्रः०[5]) सूर्य भूमि आदि लोकों में रस और मेघ का भेदन करनेवाला है। भौतिक वायु के विषय में (वायवा याहि०[6]) की व्याख्या में जो प्रमाण कहे हैं, वे यहां भी जानने चाहियें ।। ४ ।।

**भावार्थ—इस मन्त्र में** परमेश्वर ने प्राप्त होने योग्य और प्राप्त करानेवाले **इन** दो **का प्रकाश किया है** ।।४।।



---

१. अत्रान्वय इत्थं ज्ञेयः—हि यत **इमे सुता इन्दवः** प्रकाशन्ते, **वां** तौ च सहचारिणौ **इन्द्रवायू** उपागच्छतः। ततः **प्रयोभिर**न्नादिपदार्थैः सह सर्वे प्राणिनः सुखान्**युशन्ति** कामयन्ते ।

२. पूर्व-मुद्रित भाषापदार्थ बहुत दूषित था। मन्त्रगत कई पद छूट गये थे, और कुछ भाग पुनरुक्त **प्रमाणों का भावार्थ भी मध्य में था**। हमने अल्प परिवर्तन द्वारा संस्कृत अन्वय के अनुसार भाषा-पदा **दिया है। फिर भी संस्कृत अन्वय** के अस्पष्ट होने से भावार्थ भी अस्पष्ट है।

३. **ऋ० ८।१४।९ ।।** ४. ऋ० ३।३०।५ ।। तथा निरुक्त ६।१ ।।

५. **ऐ० ब्रा० ६।१० ।।** ६. ऋ० १।२।१ ।। द्र०—पृष्ठ ४६१, ४६२ ।

[1]एतन्मन्त्रोक्तौ सूर्य्यपवनावीश्वरेण धारितावेतत्कर्मनिमित्ते भवत इत्युपदिश्यते—

**वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू । तावा यातमुप द्रवत् ॥ ५ ॥**

वायो इति । इन्द्रः । च । चेतथः । सुतानाम् । वाजिनीवसू इति वाजिनीऽवसू ॥ तौ । आ । यातम् । उप । द्रवत् ॥ ५ ॥

**पदार्थः**—(वायो) हे[2] ज्ञानस्वरूपेश्वर ! (इन्द्रः) पूर्वोक्तः (च) अनुक्तसमुच्चयार्थे, तेन वायुश्च (चेतथः) चेतयतः प्रकाशयित्वा धारयित्वा च संज्ञापयतः[3] । अत्र व्यत्ययो[4]ऽन्तर्गतो ण्यर्थश्च । ( सुतानाम् ) त्वयोत्पादितान् पदार्थान् । अत्र शेषे षष्ठी । ( वाजिनीवसू ) उषोवत् प्रकाशवेगयोर्वसतः । वाजिनीत्युषसो नामसु पठितम् । निघं १ । ८ । (तौ) इन्द्रवायू (आयातम्) आगच्छतः । अत्रापि व्यत्ययः[4] । (उप)सामीप्ये (द्रवत्) शीघ्रम् । द्रवदिति क्षिप्रनामसु पठितम् । निघं० २ । १५ ॥ ५ ॥

**अन्वयः**—हे वायो ईश्वर ! यतो भवद्रचितौ वाजिनीवसू [इन्द्रश्] च पूर्वोक्ताविन्द्रवायू सुतानां सुतान् भवदुत्पादितान् पदार्थान् चेतथः संज्ञापयतस्ततस् [तौ] तान् पदार्थान् द्रवच्छीघ्रमुपायातमुपागच्छतः ॥ ५ ॥

**भावार्थः**—यदि परमेश्वर एतौ न रचयेत्तर्हि कथमिमौ स्वकार्य्यकरणे समर्थौ भवत इति ॥ ५ ॥

**इति तृतीयो वर्गः ॥**

अब पूर्वोक्त सूर्य्य और पवन जो कि ईश्वर ने धारण किये हुए हैं, वे इस धारण और आकर्षण कर्म के निमित्त होते हैं, इस विषय का अगले मन्त्र में उपदेश किया है—

**पदार्थान्वयभाषा**—हे (वायो) ज्ञानस्वरूप ईश्वर ! आपके रचे हुए (वाजिनीवसू) उषा काल के तुल्य प्रकाश [और वेग से युक्त] (इन्द्रः) पूर्वोक्त सूर्य्यलोक (च) और वायु (सुतानाम्) आपके उत्पन्न किये हुए पदार्थों का (चेतथः) धारण और प्रकाश करके उनको जीवों के दृष्टिगोचर कराते हैं, इसी कारण [(तौ)] वे दोनों उन पदार्थों को ( द्रवत् ) शीघ्रता से ( उपायातम् ) प्राप्त होते हैं ॥ ५ ॥

**भावार्थ**—[5]यदि परमेश्वर इन सूर्य्यलोक और वायु को न बनावे, तो ये दोनों अपने कार्य को करने में कैसे समर्थ होवें ॥ ५ ॥

यह तीसरा वर्ग समाप्त हुआ ॥



१. अत्रैतच्छब्देन पूर्वो मन्त्रः प्रतिनिर्दिश्यते । २. 'हे' क. ख. ग. कोशेषूपलभ्यते ।

३. अत्र दर्शनार्थे ज्ञपिर्ण्यन्तः । 'मारणतोषणनिशामनेषु ज्ञा' (धातु० १।५५१) इति वचनान्न मित्संज्ञकः ।

४. 'पुरुषव्यत्ययः' इति भावः ।

५. यह भावार्थ हमने संस्कृत-भावार्थ के अनुसार दिया है । वै०य०मुद्रित संस्करणों में 'इस मन्त्र में परमेश्वर

अथ तयोर्बहिरन्तःकार्य्यमुपदिश्यते—

वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् । मक्ष्वि१त्था धिया नरा ॥ ६ ॥

वायो इति । इन्द्रः । च । सुन्वतः । आ । यातम् । उप । निःऽकृतम् ॥ मक्षु । इत्था । धिया । नरा ॥६॥

**पदार्थः**—( **वायो** ) हे[1] **सर्वान्तर्यामिन्नीश्वर !** ( **इन्द्रश्च** ) **अन्तरिक्षस्थः सूर्य्यप्रकाशो वायुश्च**[2] । इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा । अ० ५।२।९३ **इति सूत्राशयादिन्द्रशब्देन जीवस्यापि ग्रहणम्** । प्राणो वै वायुः । श० ८ । १ । ७ । २ । **अत्र वायुशब्देन प्राणस्य ग्रहणम्** । **(सुन्वतः) अभिनिष्पादयतः (आ) समन्तात् (यातम्) प्राप्नुतः । अत्र व्यत्ययः । (उप) समीप्यम्**[3] **(निष्कृतम्) कर्मणां सिद्धिः**[4] **फलं च** (**मक्षु**) **त्वरितगत्या** । मक्ष्विति क्षिप्रनामसु पठितम् । निघं २ । १५ । (**इत्था**) **धारणपालनवृद्धिक्षयहेतुना** । था हेतौ च च्छन्दसि । अ० ५ । ३ । २६ **इति थाप्रत्ययः** । (**धिया**) **धारणावत्या बुद्धया कर्मणा वा** । धीरिति प्रज्ञानामसु पठितम् । निघं० ३ । ९ ॥ कर्मनामसु च । निघं० २ । १ । (**नरा**) [5]**नयनकर्त्तारौ** । सुपां सुलुग्० [अ० ७ । १ । ३९] **इत्याकारादेशः** ॥६॥

**अन्वयः**—**हे** वायो ! नरा **नराविन्द्रश्चेन्द्रवायू** मक्ष्वित्था **यथा** सुन्वतस्तथा **तौ** धिया निष्कृतमु**पायातमुपायतः** ॥ ६ ॥

[6][**अत्र श्लेषालङ्कारः** ।]

**भावार्थः**—**यथाऽत्र ब्रह्माण्डस्थाविन्द्रवायू सर्वप्रकाशकपोषकौ स्तः, एवं शरीरे जीवप्राणावपि । परन्तु सर्वत्रेश्वराधारापेक्षाऽस्तीति** ॥६॥

पूर्वोक्त इन्द्र और वायु के शरीर के भीतर और बाहरले कार्य्यों का अगले मन्त्र में उपदेश किया है—

**पदार्थान्वयभाषा**—[7]हे (वायो) सबके अन्तर्यामी ईश्वर ! आपके धारण किये हुए (नरा)

की सत्ता के अवलम्ब से उक्त इन्द्र और वायु अपने-अपने कार्य करने में समर्थ होते हैं, यह वर्णन किया है ।' इस प्रकार छपा है । यह भावार्थ क. कोश में पठित संस्कृत-भावार्थानुसारी है । क. कोश का संस्कृत-भावार्थ इस प्रकार है—'अत्र मन्त्रे परमेश्वरस्यैव सत्तामाश्रित्यैतौ स्वकार्यकरणे समर्थौ स्त इति ।'

१. 'हे' पदं क. ख. ग. कोशेषूपलभ्यते ।

२. वै० य० मुद्रितेषु संस्करणेषु 'वायुर्वा' इत्यपपाठः । मन्त्रे समुच्चयार्थकस्य चकारस्य पाठात् ।

३. 'सामीप्ये' इति साधुतरं स्यात् ।

४. 'सिद्धिः' पदं क. ख. ग. कोशेषूलभ्यते ।

५. भौतिकपक्षे 'सर्वजगत्पदार्थानाम्' इति शेषः, शरीरपक्षे 'सर्वधातुरसानाम्' इति शेषः । द्रष्टव्यो भाषा-पदार्थः । ख. कोशे तु 'सर्वजगत्पदार्थानां नयनकर्त्तारौ' इति पदार्थ एव पठ्यते ।

६. मन्त्रस्थयोरिन्द्रवायुशब्दयोर्द्विविधार्थनिर्देशादावश्यकः पाठः ।

७. वै० य० मुद्रित संस्करणों में दोनों अर्थ संक्षिप्त तथा अधूरे छपे हैं । हमने उन्हें पृथक् पृथक् पूर्ण करके छापा है ।

संसार के सब पदार्थों को प्राप्त करानेवाले (इन्द्रः) अन्तरिक्ष में स्थित सूर्य का प्रकाश (च) और पवन (मक्षु) शीघ्र गमन से (इत्था) धारण पालन वृद्धि और क्षय के हेतु से जैसे सोम आदि सब ओषधियों के रस को (सुन्वतः) उत्पन्न करते हैं, उसी प्रकार वे दोनों (धिया) अपने-अपने कर्मों से (निष्कृतम्) अपने-अपने कार्यों की सिद्धि को (उपायातम्) प्राप्त होते है [। इति प्रथमः] ।।

हे (वायो) सबके अन्तर्यामी ईश्वर ! जैसे (नरा) शरीरों को गतिशील रखनेवाले (इन्द्रः) जीव (च) और प्राणवायु उस शरीर में (मक्षु) शीघ्र गति से (इत्था) धारण पालन वृद्धि और क्षय के हेतु सब धातुओं के रसों को (सुन्वतः) उत्पन्न करते हैं, उसी प्रकार वे (धिया) धारण करनेवाली बुद्धि और कार्यों से (निष्कृतम्) कर्मों की सिद्धि और फलों को (उपायाताम्) प्राप्त होते हैं [। इति द्वितीयः] ।।

(इन्द्रिय०[1]) इस व्याकरण के सूत्र करके इन्द्र शब्द से जीव का, और (प्राणो०) इस प्रमाण से वायु शब्द करके प्राण का भी ग्रहण होता है ।।६।।

[2]इस मन्त्र में श्लेषालंकार है।

**भावार्थ**—[जैसे] ब्रह्माण्डस्थ सूर्य और वायु सब संसारी पदार्थों के प्रकाशक और पुष्ट करनेवाले हैं, [वैसे ही] जीव और प्राण [भी] शरीर के अङ्गों के [प्रकाशक और पोषक है।] परन्तु ईश्वर के आधार की अपेक्षा सब स्थान में रहती है ।।६।।



**पुनरेतौ नामान्तरेणोपदिश्येते—**

**मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधन्ता ।। ७ ।।**

मित्रम् । हुवे । पूतऽदक्षम् । वरुणम् । च । रिशादसम् ।। धियम् । घृताचीम् । साधन्ता ।। ७ ।।

**पदार्थः—(मित्रम्) सर्वव्यवहारसुखहेतुं ब्रह्माण्डस्थं सूर्यं, शरीरस्थं प्राणं वा ।** मित्र इति पदनामसु पठितम् । निघं० ५ । ४ । **अतः प्राप्त्यर्थः**[3] । मित्रो जनान् यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ।। ऋ० ३ । ५९ । १ **अत्र मित्रशब्देन सूर्यस्य ग्रहणम् ।** प्राणो वै मित्रोऽपानो वरुणः । श० ८ । २ । ५ । ६ **अत्र मित्र-वरुणशब्दाभ्यां प्राणापानयोर्ग्रहणम् । (हुवे) तन्निमित्तां बाह्याभ्यन्तरपदार्थविद्यामाददाम् ।** बहुलं छन्दसि [अ० २ । ४ । ७३] **इति विकरणाभावो**[4] **व्यत्ययेनात्मनेपदं लिडर्थे लट् च । (पूतदक्षम्) पूतं पवित्रं दक्षं बलं यस्मिन् तम् ।** दक्ष इति बलनामसु पठितम् । निघं० २ । ९ ।

१. अष्टा० ५।२।९३ ।।

२. मन्त्रगत 'इन्द्र वायु' शब्दों के दो प्रकार के अर्थ का निर्देश होने से यह पाठ आवश्यक है।

३. पदेर्गत्यर्थत्वादिह प्राप्तिरूपोऽर्थो गृह्यते । ४. अभावशब्देन शपो लुगिहाभिप्रेतः ।

(वरुणम्) [1]बहिःस्थं प्राणं शरीरस्थमपानं वा। (च) (रिशादसम्[2]) रिशा रोगाः [3]दसो[3] हिंसिता भवन्ति[4] येन तम्। (धियम्) कर्म धारणावतीं बुद्धिं [5]च। धीरिति पठितम्। [निघं० २। १], प्रज्ञानामसु च [निघं० ३। ६]। (घृताचीम्) घृतं प्रापयतीति तां क्रियाम्। घृतमित्युदकनामसु पठितम्। निघं० १। १२। (साधन्ता) साधयन्तौ। अत्र सुपां सुलुग्० [अ० ७। १। ३६] इत्याकारादेशः॥ ७॥

अन्वयः—अहं शिल्पविद्यां चिकीर्षुर्मनुष्यो यौ घृताचीं धियं [साधन्ता] साधन्तौ पूतदक्षं मित्रं रिशादसं वरुणं च हुवे॥ ७॥

अत्र [6]श्लेषालङ्कारः।

भावार्थः—यथा सूर्य्यवायुनिमित्तेन समुद्रादिभ्यो जलमुपरि गत्वा तद्वृष्टया सर्वस्य रक्षणे भवतः, एवं प्राणापानाभ्यां च शरीरस्य। अतः सर्वैर्मनुष्यैराभ्यां निमित्तीकृताभ्यां विद्यासिद्धेः सर्वोपकारः सदा निष्पादनीय इति॥ ७॥

ईश्वर पूर्वोक्त सूर्य्य और वायु को दूसरे नाम से अगले मन्त्र में स्पष्ट करता है—

पदार्थान्वयभाषा—मैं शिल्पविद्या का चाहने [वाला मनुष्य, जो (घृताचीम्) करानेवाली (धियम्) क्रिया वा बुद्धि को (साधन्ता) सिद्ध करनेवाले हैं, उन] (पूतदक्षम्) बलवाले [(मित्रम्) सब व्यवहारसंबन्धी सुखों के देनेवाले, ब्रह्माण्ड में रहनेवाले सूर्य शरीर में रहनेवाले प्राण (च)] तथा (रिशादसम्) रोग और शत्रुओं के नाश (वरुणम्) शरीर के बाहर [ब्रह्माण्ड में] रहनेवाले प्राण (=वायु) और भीतर रहनेवाले रूप वायु को (हुवे) प्राप्त होऊं। अर्थात् सूर्य और वायु तथा प्राण और अपान जिस बाह्य आभ्यन्तर पदार्थों की विद्या के निमित्त हैं, उसको ग्रहण करूं॥

(मित्रो०) इस ऋग्वेद के प्रमाण से मित्र शब्द करके सूर्य का, और (प्राणो वै० प्रमाण से मित्र शब्द से प्राण, तथा वरुण शब्द से अपान का ग्रहण होता है॥ ७॥

---

१. अयमर्थो ब्रह्माण्डपक्षे ज्ञेयः, ब्रह्माण्डस्थो वायुरित्यभिप्रायः, शरीरपक्षे मित्रपदस्यार्थे श प्राणम्' इति पूर्वमुक्तम्।

२. अत्र केचन 'अद' धातोरुत्तरपदं मन्यन्ते (यथात्र ग्रन्थकारो निर्दिशति), अपरे 'दसु' धातोः। धातुपक्षे धातूनामनेकार्थत्वाद् हिंसार्थोऽपि द्रष्टव्यः। 'दसु'पक्षे 'अन्येषामपि दृश्यते' (अ० ६।३।१३६ सूत्रेण पूर्वपदस्य दीर्घत्वं ज्ञेयम्। पदकारास्तूभयथाऽप्युत्तरपदस्योपपन्नत्वात् सांशयिकत्वान्नावगृह्णन्ति।

३. पदमिदं ग. कोष उपलभ्यते। ग. कोषे प्रतिलिपिकर्त्रा परित्यक्तः। अत एव ग.कोषे नोपलभ्यते।

४. पदमिदं क. ख. ग. कोशेषूपलभ्यते।

५. 'च। धी····· प्रज्ञानामसु च' इत्ययं पाठः ख. ग. कोशयोर्वर्तते। मुद्रणे प्रमादान्नष्टः।

६. वै० य० मुद्रितेषु संस्करणेषु 'लुप्तोपमालङ्कारः' इति पठ्यते। स चापपाठः, मित्रवरुणश श्लेषार्थस्य निर्दिष्टत्वादत्र श्लेषालंकारेणैव भाव्यम्। क. ख. ग. कोशेषु अलंकारनिर्देशो नोपलभ्यते।

इस मन्त्र में [1]श्लेषालङ्कार है।

**भावार्थ**—जैसे सूर्य्य और वायु के निमित्त से समुद्र आदि जलस्थलों से जल आकाश में उड़कर वर्षा होने से सब की वृद्धि और रक्षा होती है, वैसे ही प्राण और अपान आदि ही से शरीर की रक्षा और वृद्धि होती है। इसलिये मनुष्यों को [सूर्य और वायु, तथा] प्राण अपान आदि के निमित्त से व्यवहार-विद्या की सिद्धि करके सब के साथ [सदा] उपकार करना उचित है॥ ७॥



**केनैतावेतत्कर्म कर्त्तुं समर्थौ भवत इत्युपदिश्यते—**

ऋतेन मित्रावरुणावृतावृधावृतस्पृशा। क्रतुं बृहन्तमाशाथे॥ ८॥

ऋतेन। मित्रावरुणौ। ऋतऽवृधौ[2]। ऋतस्पृशा॥ क्रतुम्। बृहन्तम्। आशाथे इति॥ ८॥

**पदार्थः**—(**ऋतेन**) **सत्यस्वरूपेण ब्रह्मणा**। ऋतमिति सत्यनामसु पठितम्। निघं० ३। १० **अनेनेश्वरस्य ग्रहणम्**। ऋतमित्युदकनामसु च। निघं० १। १२। (**मित्रावरुणौ**) **पूर्वोक्तौ**। देवताद्वन्द्वे च। अ० ६। ३। २५ **अनेनानङादेशः**। (**ऋतावृधौ**) ऋतं **ब्रह्म तेन वर्धयितारौ ज्ञापकौ**

---

१. वै० य० मुद्रित संस्करणों में 'लुप्तोपमालंकार' छपा है। भाष्य में मित्र-वरुण शब्दों का दो प्रकार का अर्थ दर्शाया है। उपमार्थ पदार्थ तथा अन्वय में नहीं है। अतः दो अर्थों का निर्देश होने से श्लेषालङ्कार का ही निर्देश युक्त है।

२. **विशेष-स्वर विचारः**—अस्मिन् मन्त्रे द्वितीयपादादेर् '**ऋतावृधौ**' पदस्य कथं निघातत्वमितिचिन्तायां शौनकस्तु पादादौ प्रयुज्यमानानां निघातपदानां यत् परिगणनं (ऋक्प्राति० १७।२९-३६) कृतवान्, तेन ज्ञायते यदत्र स **अपादादौ** (अष्टा० ८।१।१८) इत्यस्य स्वरनियमस्य व्यत्यासं मनुते। सायणो भट्टोजिनागेशप्रभृतयो वैयाकरणास्तु '**ऋतावृधौ** इत्यस्य निघातसिद्ध्यर्थं 'मित्रावरुणौ ऋतावृधौ' इत्यनयोः पराङ्गवद्भावम् **अर्थात्** 'ऋतास्पृशौ' इत्यस्यामन्त्रितपदस्याङ्गत्वं ब्रुवते। तेन 'ऋतेन' पदात् पराणामामन्त्रितपदानां **निघातत्वं** स्वीकुर्वते (शब्दकौस्तुभ-प्रदीपोद्योत अ० २।१।४)। नागेशस्त्वत्र पराङ्गवद्भावमापाद्याप्यपरितुष्यन् छान्दसत्वात् निघातसिद्धिमप्याह। वयं त्वस्यान्यथासिद्धिं मन्महे। तथाहि—स्वरशास्त्रे निघात**विधायकौ द्वौ** नियमौ स्तः। एकोऽपादादित्वलक्षणः, अपरः समानवाक्यत्वलक्षणः। तत्र प्रथमनियमापेक्षया **समानवाक्यत्व**लक्षणो बलीयान् भवति। तेनैकस्मिन् पादे यत्रापादित्वलक्षणनियमेन निघातत्वम्, समानवाक्यत्वलक्षणेन वाक्यादित्वात् निघाताभावश्च प्राप्नुतः, तत्र समानवाक्यलक्षणेन वाक्यादित्वान्निघाताभाव **एव** भवति। यथा—**इन्द्र स्वाहा ररिमा ते मदाय** (ऋ० ३।३५।१) इत्यत्रैकस्मिन् पादे 'ररिमा' पदं '**स्वाहा**' पदात् परमिति कृत्वानुदात्तः स्यात्, वाक्यादित्वाच्चोदात्तो भवति। एवं विप्रतिपत्तौ वेदे सर्वत्र **समानवाक्यलक्षणः** स्वरः प्रवर्तते। अस्मिन् मन्त्रे 'ऋतेन मित्रावरुणावृतावृधावृतस्पृशा' इत्यत्र पादद्वयस्वीकारेऽप्येकवाक्यत्वात् अपादादिलक्षणं स्वरं बाधित्वा समानवाक्यलक्षणस्वरस्य प्रवर्तनात् निघातत्वमेव भवति।

यद्वा—'ऋतावृधौ' इत्यस्य पादादित्वमेव नास्ति। कथमिति चेत्? छन्दसां लक्षणेषु छन्दोविचितिकाराणां बहुधा विप्रतिपत्तिर्दृश्यते। तत्र नैकेन केनच्छिन्दोलक्षणेन स्वरशास्त्रविरोधः शक्य उद्भावयितुम्।

जलाकर्षणवृष्टिनिमित्ते वा। अन्यान्येषामपि दृश्यते [अ० ६। ३। १३६] इति दीर्घः। स्पृशा) ऋतस्य ब्रह्मणो वेदस्य स्पर्शयितारौ प्रापकौ जलस्य च। (क्रतुम्) सर्वं जगतं संसार यज्ञम् (बृहन्तम्) महान्तम् (आशाथे) व्याप्नुतः। छन्दसि लुङ्लङ्लिटः। अ० ३। ४। ६ वर्त्तमाने लिट्। वा छन्दसि सर्वे विधयो भवन्ति [महा० १। ४। ९] इति नुडभावः॥ ८॥

अन्वयः—ऋतेनोत्पादितावृतावृधावृतस्पृशा मित्रावरुणौ बृहन्तं क्रतुमाशाथे॥ ८॥

भावार्थः—ब्रह्मसहचर्य्यंयैतौ ब्रह्मज्ञाननिमित्ते जलवृष्टिहेतू भूत्वा सर्वमग्न्याविमूत्त जगद्व्याप्य वृद्धिक्षयकर्त्तारौ व्यवहारविद्यासाधकौ च भवत इति॥ ८॥

किस हेतु से ये दोनों कर्म करने में समर्थ होते हैं, यह विद्या अगले मन्त्र में कही है—

पदार्थान्वयभाषा—(ऋतेन) सत्यस्वरूप ब्रह्म के नियम में बन्धे हुए, (ऋतावृधौ) ब्रह्म बढ़ाने, जल के खींचने और वर्षानेवाले (ऋतस्पृशा) ब्रह्म की प्राप्ति कराने में निमित्त तथा समय पर जलवृष्टि के करनेवाले, (मित्रावरुणौ) पूर्वोक्त मित्र और वरुण (बृहन्तम्) अनेक के (क्रतुम्) जगत्‌रूप यज्ञ को (आशाथे) व्याप्त होते हैं॥ ८॥

---

यतः पादव्यवस्थाया अर्थाधीनत्वात्। तदुक्तं जैमिनिना—'यत्रार्थवशेन पादव्यवस्था सा ऋक्' (मी० २।१।३ अतएव 'त्वमग्ने यज्ञानां होता विश्वेषां हितः। देवेभिर्मानुषे जने॥' (ऋ० ६।१६।१; सा०पू०प्र०१, अर्धप्र० द० १, मं० १) इत्यस्मिन् मन्त्रे शौनककात्यायनौ 'त्वमग्ने यज्ञानाम्' इत्येवं प्रथमं पादमास्थायास्य मन्त्र वर्धमानागायत्री छन्द इत्यूचतुः। निदानसूत्रकारः पतञ्जलिस्तु 'त्वमग्ने होता विश्वेषाम्' इत्येवं प्रथमं पादमाश्रि पिपीलिकामध्यां गायत्रीं मनुते (द्र०—अस्मदीया वैदिकछन्दोमीमांसा, पृष्ठ ७२)। एवं यत्रार्थस्य पा समाप्तिर्भवति तावतामक्षराणामेव पादत्वमाश्रीयते। अत एव निदानसूत्रकारो विभिन्नछन्दसां या प्रायि अक्षरसंख्या तस्या अपकर्षं विकर्षं च प्रतिजानीते (द्र०—निदानसूत्र, पृष्ठ १, २)। तदनुसारं पिङ्गलेन १२+ अक्षराया द्विपाद्‌गायत्र्या यल्लक्षणमुक्तम्, तत्र निदानसूत्रकारमतानुसारं द्वादशाक्षरपादस्य षोडशाक्षरपर्य अष्टादशाक्षरपर्यन्ते वा विकर्षेऽस्मिन् मन्त्रे पूर्वभागे षोडशाक्षर एक एव प्रथमः पादोऽष्टाक्षरश्च द्वितीयः पा समपद्यते। सत्येवमेकपादे पराङ्गवद्भावरूपक्लिष्टकल्पनया विनाऽपीष्टस्वरसिद्धिरञ्जसा सम्पद्यते।

न च प्रतिपादमवान्तरार्थवृत्तिमाश्रित्य 'ऋतावृधौ' इत्यस्य पादादित्वं शक्यते वक्तुम्। 'मित्रावरु ऋतावृधौ ऋतस्पृशा' इत्येतेषु प्रथमं पदं विशेष्यभूतम् अपरे च द्वे विशेषणरूपे। न च विशेष्यविशेषणयो परस्परं सम्बद्धयोः 'ऋतेन मित्रावरुणौ' इत्यत्र शक्यते पादान्तत्वं वक्तुम्।

एभिर्हेतुभिरत्र विनाऽपि पराङ्गवद्भावं पूर्वमन्त्रितस्याविद्यमानवत्त्वेऽपि 'ऋतेन' पदात् परत्वमाश्रि 'ऋतावृधौ' इत्यस्यानुदात्तत्वं सिद्ध्यति। यथा 'इमं मे गङ्गे यमुने सरस्वति' (ऋ० १०। ७५। ५) इत्य गङ्गे पदस्याविद्यमानत्वेऽपि 'मे' पदात् परत्वमाश्रित्य 'यमुने सरस्वति' पदयोर्निघातत्वं भवति। एवं च पादादेः 'शुतुद्रि' पदस्याप्यस्तु निघातत्वमिति माशङ्कि। यतो ह्यत्र 'इमं मे स्तोमं सचत' इत्यर्थेन प्रत्येक पदस्यान्वयात्। तेन 'गङ्गे यमुने सरस्वति' इत्येतेषां पूर्वपादपठितानां पदानामन्वयाय द्वितीये पादे पठि 'स्तोमं सचत' पदे अपकृष्येते। प्रतिपदमन्वये 'सचत' इति बहुवचनं कथमिति न शङ्कनीयम्, वचनव्यत्ययेनैक वचनस्यार्थस्य ग्रहीतुं शक्यत्वात्। यद्वा यावन्त्यामन्त्रितपदानि तावन्ति 'सच' इत्येकवचनक्रिया द्रष्टव्या तेषां च समानानां 'सच' पदानामेकशेषनिर्देशे बहुवचनस्य सिद्धत्वात्। द्वितीयपादादेः 'शुतुद्रि' पदस्यार्थं पूर्वे 'इमं मे' पदयोरनुषङ्गात् 'हे शुतुद्रि मे इमं स्तोमं सच' इत्येवं वाक्यार्थस्योपपत्तिसम्भवात्।

भावार्थ—परमेश्वर के आश्रय से उक्त मित्र और वरुण ब्रह्मज्ञान के बढ़ानेवाले, जल वर्षानेवाले, सब मूर्त्तिमान् वा अमूर्त्तिमान् जगत् को व्याप्त होकर उसकी वृद्धि विनाश और व्यवहारविद्या की सिद्धि करने में हेतु होते हैं ॥ ८ ॥

इमावस्माकं किं किं धारयत इत्युपदिश्यते—

कवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसम् ॥ ९ ॥

कवी इति॑ । नः॒ । मि॒त्रावरु॑णा । तु॒वि॒ऽजा॒तौ । उ॒रु॒ऽक्षया॑ ॥ दक्ष॑म् । द॒धा॒ते॒ इति॑ । अ॒पस॑म् ॥ ९ ॥

पदार्थः—(कवी) क्रान्तदर्शनौ सर्वव्यवहारदर्शनहेतू । कविः क्रान्तदर्शनो भवति कवतेर्वा । निघं० १२ । १३ एतन्निरुक्ताभिप्रायेण कविशब्देन सुखसाधकौ मित्रावरुणौ गृह्येते । (नः) अस्माकम् (मित्रावरुणौ) पूर्वोक्तौ (तुविजातौ) बहुभ्यः[1] कारणेभ्य उत्पन्नौ बहुषु वा प्रसिद्धौ । तुवीति बहुनामसु पठितम् । निघं० ३ । १ । (उरुक्षया) बहुषु जगत्पदार्थेषु क्षयो निवासो ययोस्तौ । अत्र सुपां सुलुग्० [अ० ७ । १ । ३९] इत्याकारः । उर्विति बहुनामसु पठितम् । निघं० ३ । १ । 'क्षि[2] निवासगत्योः' अस्य धातोरधिकरणार्थः क्षयशब्दः । (दक्षम्) बलम् (दधाते) धरतः (अपसम्) कर्म । अप इति कर्मनामसु पठितम् । निघं० २ । १ । व्यत्ययो बहुलम् [अ० ३ । १ । ८५] इति लिङ्गव्यत्ययः । इदमपि सायणाचार्य्येण न बुद्धम्[3] ॥ ९ ॥

अन्वयः—इमौ तुविजातावुरुक्षयोरु[क्षयौ] कवी मित्रावरुणा मित्रावरुणौ नोऽस्माकं दक्षमपसं च दधाते धरतः ॥ ९ ॥

भावार्थः—ब्रह्माण्डस्थाभ्यां बलकर्मनिमित्ताभ्यामेताभ्यां[मित्रावरुणाभ्यां] सर्वेषां पदार्थानां सर्वचेष्टाविद्ययोः पुष्टिधारणे भवत इति ॥ ९ ॥

---

१. वै० य० मुद्रितेषु संस्करणेषु 'बहुभ्यः कारणेभ्यो बहुषु वोत्पन्नौ प्रसिद्धौ' इत्यक्रमोऽनन्वितः पाठो दृश्यते । यथा त्वस्माभिः पाठक्रमो व्यधायि तादृश एव सम्बन्ध भाषार्थेऽप्युपलभ्यते ।

२. 'क्षी' इति वै० य० मुद्रितेषु सर्वेषु संस्करणेष्वपपाठः, तादृशधातोरभावात् ।

३. अस्य वाक्यस्याभिप्रायो न ज्ञायते । यथा त्वत्र वाक्यं पठ्यते, तथा सायणेन 'अपसम्' रूपकल्पनाय काचिदन्यथा कल्पना कृतेऽस्ति विज्ञायते । सायणभाष्ये न 'अपसम' रूपकल्पनार्थं काचिदशास्त्रीया कल्पना दृश्यते । तत्र तु 'आपेरसुन्प्रत्यये नित्लक्षणाद्युदात्तत्वे प्राप्ते प्रत्ययस्वरकल्पना दृश्यते ।

अत्रेदमपि विचारार्हम् । कर्मनामसु (निघं० २।१) 'अपः' पदमाद्युदात्त पठ्यते । वेदे 'अपस्' शब्दे उभयथा स्वरो दृश्यते, आद्युदात्तोऽन्तोदात्तश्च । भाष्यकारा उभयविधस्यापि स्वरस्य 'कर्म' इत्येवार्थं कुर्वते । स्वरभेदादर्थभेदेन भाव्यमिति स्वरज्ञानां राद्धान्तः । तथा सति अन्तोदात्तस्य 'अपस्' शब्दस्य कोऽर्थ इति जायते शङ्का । यद्वा—यथा 'कर्तृ' शब्दे स्वरभेदवेकार्थत्वेऽप्यवान्तरार्थभेदः प्रतिज्ञायते वैयाकरणैः । यथा—'कर्त्ता' =क्रियाया कारकः, कर्त्ता=साधुकारकः, क्रियाशीलः, क्रियाधर्मवान् (अ०३।२।१३४,१३५) । एवमिहापि उभयोः कर्मनामत्वेऽपि आद्युदात्तस्य 'अपस्'शब्दस्य धात्वर्थप्रधानो व्यापनशीलं कर्मार्थः, अन्तोदात्तस्य च सामान्यं कर्मार्थ इत्येवं सूक्ष्मोऽर्थभेदः कल्पनीयः ।

**प्रादिमसूक्तोक्तेन शिल्पविद्याविमुख्यनिमित्तेनाग्निनार्थेन सहचरितानां वाय्विन्द्रमित्रवरुणानां द्वितीयसूक्तोक्तानामर्थानां संगतिरस्तीति बोध्यम् ।**

**इदमपि सूक्तं** सायणाचार्य्यादिभिर्यूरोपाख्यदेशनिवासिभिर्विलासनाख्यादिभिश्चान्यथैव **व्याख्यातमिति बोध्यम् ।।**

**इति द्वितीयं सूक्तं वर्गश्च चतुर्थः समाप्तः ।।**

वे हम लोगों के कौन-कौन पदार्थों के धारण करनेवाले हैं, इस बात का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—[ये दोनों] (तुविजातौ) बहुत कारणों से उत्पन्न और बहुतों में प्रसिद्ध (उरुक्षया) संसार के बहुत से पदार्थों में रहनेवाले, (कवी) दर्शनादि व्यवहार के हेतु (मित्रावरुणा) पूर्वोक्त मित्र और वरुण (नः) हमारे (दक्षम्) बल तथा [(अपसम्)] सुख वा दुःखयुक्त कर्मों को (दधाते) धारण करते हैं ।।६।।

**भावार्थ**—जो ब्रह्माण्ड में रहनेवाले, बल और कर्म के निमित्त, पूर्वोक्त मित्र और वरुण हैं, उनसे क्रिया और विद्याओं की पुष्टि तथा धारणा होती है ।। ६ ।।

जो प्रथम सूक्त में कहा हुआ, शिल्पविद्या आदि का मुख्य निमित्त अग्नि है, उसके सहायकारी वायु इन्द्र मित्र और वरुण के प्रतिपादन करने से प्रथम सूक्तार्थ के साथ इस दूसरे सूक्तार्थ की सङ्गति समझ लेनी ।

इस सूक्त का अर्थ **सायणाचार्य्य** आदि और **विलसन** आदि यूरोपदेशवासी लोगों ने अन्यथा कथन किया है ।।

यह दूसरा सूक्त और चौथा वर्ग समाप्त हुआ ।।



अथास्य द्वादशर्चस्य तृतीयसूक्तस्य मधुच्छन्दा ऋषिः । १–३ अश्विनौ;
४–६ इन्द्रः; ७–९ विश्वेदेवाः; १०–१२ सरस्वती [च] देवताः ।
१, ३, ५–१०, १२ गायत्री; २ निचृद्गायत्री; ४, ११
पिपीलिकामध्यानिचृद्गायत्री च छन्दः । षड्जः स्वरः ।।

**तत्रादावश्विनावुपदिश्येते—**

अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती । पुरुभुजा चनस्यतम् ।। १ ।।

**अश्विना । यज्वरीः । इषः । द्रवत्पाणी इति द्रवत्ऽपाणी । शुभः । पती इति ।। पुरुऽभुजा । चनस्यतम् ।। १।।**

**पदार्थः—( अश्विना )** जलाग्नी । **अत्र** सुपाम्० [अ० ७ । १ । ३९] **इत्याकारादेशः ।**
**या सुरथा रथीतमोभा देवा दिविस्पृशा । अश्विना ता हवामहे ।। १ ।। नहि वामस्ति दूरके यत्रा रथेन गच्छथः ।**

[¹अश्विना सोमिनो गृहम् ]॥ २ ॥ ऋ० १ । २२ । २, ४ ॥ **वयं यो सुरथौ शोभना रथाः सिद्धयन्ति याभ्यां तौ, रथीतमा भूयांसो रथा विद्यन्ते ययोस्तौ रथिनौ² अतिशयेन रथिनौ² रथितमौ³, देवौ शिल्पविद्यायां दिव्यगुणप्रकाशकौ, दिविस्पृशा विमानादियानैः सूर्य्यप्रकाशयुक्तेऽन्तरिक्षे मनुष्यादीन् स्पर्शयन्तौ, उभा उभौ, ता तौ, हवामहे गृह्णीमः ॥ १ ॥ यत्र मनुष्या वां तयोरश्विनोः साधयित्वा⁴ चलितयोः सम्बन्धयुक्तेन [रथेन] हि यतो गच्छन्ति, तत्र ⁵सोमिनः सोमविद्यासम्पादिनो गृहं विद्याधिकरणं दूरं नैव भवतीति यावत् ॥ २ ॥**

अथातो द्युस्थाना देवतास्तासामश्विनौ प्रथमागामिनौ भवतोऽश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषाऽन्योऽश्वैरश्विनावित्यौर्णवाभः । तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके, ⁶तयोः काल ऊर्ध्वमर्धरात्रात् प्रकाशीभावस्यानुविष्टम्भमनुतमो भागो हि मध्यमो ज्योतिर्भाग आदित्यः । निरु० १२ । १ ॥

तथाऽश्विनौ चापि भर्त्तारौ जर्भरी भर्त्तारावित्यर्थस्तुर्फरीतू हन्तारौ । निरु० १३ । ५ ॥

(अथातो०) **अत्र द्युस्थानोक्तत्वात् प्रकाशस्थाः प्रकाशयुक्ताः सूर्य्याग्निविद्युदादयो गृह्यन्ते । तत्र यावश्विनौ द्वौ द्वौ संप्रयुज्येते यौ च सर्वेषां पदार्थानां मध्ये गमनशीलौ भवतः । तयोर्मध्यादस्मिन्मन्त्रेऽश्विशब्देनाग्निजले गृह्येते । कुतः ? यद्यस्माज्जलमश्वैः स्वकीयवेगादिगुणैः रसेन सर्वं जगद्व्यश्नुते व्याप्तवदस्ति । तथाऽन्योऽग्निः स्वकीयैः प्रकाशवेगादिभिरश्वैः सर्वं जगद्व्यश्नुते, तस्मादग्निजलयोरश्विसंज्ञा जायते । तथैव स्वकीयस्वकीयगुणैर्द्यावापृथिव्यादीनां द्वन्द्वानामप्यश्विसंज्ञा भवतीति विज्ञेयम् । शिल्पविद्याव्यवहारे यानादिषु युक्त्या योजितौ [जर्भरी] सर्वकलायन्त्रयानधारकौ भवतः,⁷ [तुर्फरीतू] यन्त्रकलाभिस्ताडितौ चेत्तवाहननेन गमयितारौ च, ⁸तुर्फरीशब्देन यानेषु शीघ्रं वेगादिगुणप्रापयितारौ भवतः ॥**

अश्विनाविति पदनामसु पठितम् । निघं ५ । ६ **अनेनापि गमनप्राप्तिनिमित्ते अश्विनौ गृह्येते ।**

(यज्वरीः) **शिल्पविद्यासम्पादनहेतून्** (इषः) **विद्यासिद्धये या इष्यन्ते ताः क्रियाः** (द्रवत्-

---

१. अस्य भागस्यार्थदर्शनादावश्यकः पाठः । २. वै०य० मुद्रितेषु संस्करणेषु 'रथी' इत्यपपाठः ।

३. 'रथीतमः' वै० य० मुद्रितेऽपपाठः । मन्त्रे तु 'अन्येषामपि दृश्यते' (अ० ६।३।१३६) इत्यनेन दीर्घः ।

४. वै० य० मुद्रितेषु संस्करणेषु साधयित्वो इत्यपपाठः । 'साधितयोः' इति क. ख. ग. पाठः । अत्र 'साधितयोरग्निजलयोः' इत्येवं पाठः साधुः स्यात् ।

५. 'सोमिनः सोमविद्यासम्पादिनः' इति क. ख. ग. कोशेषु वर्तमानोऽपि पाठो मुद्रणप्रमादान्नष्टः ।

६. वै० य० मुद्रितेषु संस्करणेषु 'तयोः······भागो' इति पाठोऽस्थाने मुद्रित उपलभ्यते । अस्माभिर्निरुक्तपाठानुसारं यथास्थानं स्थापितः ।

७. पदमिदं क. ख. कोशयोर्वर्तमानमपि लिपिकरप्रमादाद् ग. कोशे नोपलभ्यते ।

८. अत्र 'फर्फरी शब्देन' इति पाठो युक्तः । तथा च निरुक्तम्—'फर्फरी क्षिप्रहन्तारौ' (१३।५) । हन्तिरत्र गत्यर्थत्वात् प्रापकार्थः ।

पाणी) द्रवच्छीघ्रवेगनिमित्ते पाणी पदार्थविद्याव्यवहारौ ययोस्तौ (शुभस्पती)[1] शुभस्य शिल्पकार्यप्रकाशस्य पालकौ । 'शुभ शुंभ दीप्तौ' एतस्य रूपमिदम् । (पुरुभुजा) पुरूणि बहूनि भुञ्जि भोक्तव्यानि वस्तूनि प्राप्यन्ते[2] याभ्यां तौ । पुर्विति बहुनामसु पठितम् । निघं० ३ । १ । भुगिति क्विप्प्रत्ययान्तः प्रयोगः । सम्पदादिभ्यः क्विप् । रोगाख्यायां० । अ० ३ । ३ । १०८ इत्यस्य व्याख्याने [वार्तिकम्] । (चनस्यतम्) अन्नवदेतौ सेव्येताम् । चायतेरन्ने ह्रस्वश्च । उ० ४ । २०० अनेनासुन्प्रत्ययान्ताच्चनस्शब्दात् क्यच्प्रत्ययान्तस्य[3] नामधातोर्लोटि मध्यमस्य द्विवचनेऽयं प्रयोगः ॥ १ ॥

अन्वयः—हे विद्वांसो युष्माभिर्द्रवत्पाणी शुभस्पती [पुरुभुजा] पुरुभुजाव[श्विना]श्विनौ यज्वरीरिषश्च चनस्यतम्[4] ॥१॥

---

१ पदपाठानुसारं 'शुभः, पती' इति द्वे पदे । तत्र 'शुभः' इति शुभधातोः क्विबन्तस्य षष्ठ्येकवचनम् । यथा वाचस्पतिः=वाचः, पतिः । न चात्र तथा सति 'वाचः' इव 'सावेकाचस्तृतीयादिर्विभक्तिः' (अ० ६।१।१६८) इति नियमेन विभक्तेरुदात्तत्वं शङ्क्यम्, 'पती' इत्यस्यामन्त्रितत्वात्, 'सुबामन्त्रिते पराङ्गवत् स्वरे' अ० २।१।२) इत्यनेन 'शुभः' पराङ्गवद्भावे षाष्ठिकामन्त्रितस्वरेण (अ० ६।१।१९८) तस्याद्युदात्तत्वात् । न चात्र 'द्रवत्पाणी' पदात् परत्वाद् आष्टमिकामन्त्रितस्वरेण (अ० ८।१।१९) तस्य निघातत्वं शङ्कनीयम्, पूर्वस्यामन्त्रितस्याविद्यमानवत्त्वात् (अ० ८।१।७२) । न च 'नामन्त्रिते समानाधिकरणे' (अ० ८।१।७३) नियमेन पूर्वस्यामन्त्रितस्याविद्यमानवद्भावस्य प्रतिषेधः शङ्कनीयः । महाभाष्यकारोक्तयोगविभागेनास्य सूत्रस्य 'सामान्यवचनम्' पदस्यानन्वयात् । तेन सामान्यवचनरूपस्यैव पूर्वामन्त्रितस्याविद्यमानवद्भावः प्रतिषिध्यते । इह तु 'द्रवत्पाणी, शुभस्पती' उभे अपि विशेषणे, 'अश्विना' इति च विशेष्यम् । तेनात्र 'द्रवत्पाणी' पूर्वमामन्त्रितं विशेषवचनमेव ।

इह ग्रन्थकारेण 'शुभ शुम्भ दीप्तौ' एतस्य रूपमिदम्' इत्येवोच्यते, न कश्चित् प्रत्ययः प्रतिनिर्दिश्यते । तेन ग्रन्थकारस्य 'शुभस्य शिल्पकार्यप्रकाशकस्य पालकौ' इतिवचनमुक्तदिशा द्विपदत्वेऽप्युपपद्यते । द्वयोः पदयोः सहनिर्देशो व्याख्यानस्य सौकर्यार्थः कृत इति ज्ञेयम् । यद्येकपदत्व एव ग्रन्थकारस्य तात्पर्यमित्याग्रहश्चेत् तथाऽप्यत्र न दोषः । एकपदत्वे यथा 'बृहस्पति'शब्दे 'बृहस्' इति 'कसुन्' प्रत्ययान्तं पूर्वपदं (द्र०—अस्मदीया वैदिकस्वरमीमांसा, पृष्ठ १०५-१०६, द्वि० सं०) तथैवात्र 'शुभस्' कसुनन्तम्, नित्यत्वाच्चाद्युदात्तत्वम् । ततः षष्ठीसमासे 'समासस्य' (अ० ६।१।२१७) इत्यन्तोदात्तत्वे प्राप्ते 'पत्यावैश्वर्ये' (अ० ६।२।१८) इत्यनेन पूर्वपदप्रकृतिस्वरे स एव स्वरः । आमन्त्रितत्वे यथा निघाताभावः स पूर्वमुक्त एव । एतद् भाष्यकृता स्वीये यजुर्वेदभाष्ये १०।३३ मन्त्रस्य व्याख्याने 'शुभस्पती' इत्यत्र पदद्वयमेव व्याख्यातम्, तदप्यत्रालोचनीयम् ।

एकपदत्वे पदपाठविरोधश्चेत्, तन्न, पदकारकृतो विच्छेद एव प्रामाणिक इति न वैदिकानां राद्धान्तः । स्वरादिदोषाभावेऽन्यथा पदविच्छेदोऽपि प्रमाणम् (द्र०—'दोषावस्तः' पदटिप्पण्या अन्तिमो भागः, पृष्ठ ४५६)। स्वरादिदोषे सति पदकारविच्छेदोऽप्यप्रामाणिक इत्यपि यास्कप्रमाणेन पूर्वमुक्तम् (पृष्ठ ४५६) । माध्वमतानुयायिनस्त्वेकपदत्वेनैव व्याचक्षते । तेऽत्र अकारान्तात् शुभशब्दात् पारस्करप्रभृतित्वात् सुट् मन्यते (द्र०—माध्वभाष्यस्य जयतीर्थकृता टीका) । २. पदमिदं ख. ग. कोशयोरुपलभ्यते, मुद्रणे प्रमादान्नष्टम् ।

३. वै० य० मुद्रिते 'क्यच्प्रत्ययान्तो' इत्यपपाठः, अनन्वितत्वात् ।

४. ख. कोशे इतोऽग्रे 'अन्नवदेतौ सेव्येताम्' इति पाठ उपलभ्यते । पदार्थेऽस्य पदस्येत्थमेव व्याख्यानं

**भावार्थः**—अत्रेश्वरः शिल्पविद्यासाधनमुपदिशति। यतो मनुष्याः कलायन्त्ररचनेन विमानादियानानि सम्यक् साधयित्वा जगति स्वोपकारपरोपकारनिष्पादनेन सर्वाणि सुखानि प्राप्नुयुः ॥१॥

अब तृतीय सूक्त का प्रारम्भ करते हैं। इसके आदि के मन्त्र में अग्नि और जल [को] अश्वि नाम से लिया है—

**पदार्थान्वयभाषा**—हे विद्या के चाहनेवाले मनुष्यो ! तुम लोग (द्रवत्पाणी) शीघ्र वेग के निमित्त, पदार्थविद्या और व्यवहार-सिद्धि के करने में उत्तम हेतु, (शुभस्पती) शुभ शिल्पकार्य-प्रकाश के पालक, और (पुरुभुजा) अनेक खाने-पीने के पदार्थों को देने में उत्तम हेतु (अश्विना) अर्थात् जल और अग्नि, तथा (यज्वरीः) शिल्पविद्या का सम्पादन करानेवाली (इषः) विद्या की सिद्धि के लिये इष्ट कारीगरी की क्रियाओं को (चनस्यतम्) अन्न के समान अति प्रीति से सेवन किया करो ॥

अब 'अश्विनौ' शब्द के विषय में निरुक्त आदि के प्रमाण दिखलाते हैं—[(या सुरथा०)] हम लोग अच्छी-अच्छी सवारियों को सिद्ध करने के लिये (अश्विना) पूर्वोक्त जल और अग्नि को, कि [(रथीतमा)] जिनके गुणों से अनेक सवारियों की सिद्धि होती है, तथा (देवा) जो कि शिल्पविद्या में अच्छे-अच्छे गुणों के प्रकाशक, और [(दिविस्पृशा)] सूर्य के प्रकाश से [युक्त] अन्तरिक्ष में विमान आदि सवारियों से मनुष्यों को पहुंचानेवाले होते हैं, (ता उभा) उन दोनों को शिल्पविद्या की सिद्धि के लिये [(हवामहे)] ग्रहण करते हैं ॥

[(न हि वामस्ति०)] मनुष्य लोग जहां-जहां [उन] साधे हुए अग्नि और जल के सम्बन्ध [से] युक्त रथों से जाते हैं, वहां-वहां सोमविद्यावाले विद्वानों का विद्याधिकरण [=विद्यालय दूर नहीं होता, अर्थात्] निकट ही है ॥

(अथा०) इस निरुक्त [के वचन] में जो कि द्युस्थान शब्द है, उससे प्रकाश में रहनेवाले और प्रकाश से युक्त सूर्य अग्नि विद्युत् आदि पदार्थ ग्रहण किये जाते हैं। उन पदार्थों में दो-दो के योग को 'अश्वी' कहते हैं, वे सब पदार्थों में प्राप्त होनेवाले हैं। उनमें से यहां अश्वी शब्द करके अग्नि और जल का ग्रहण करना ठीक है। क्योंकि जल अपने वेगादि गुण और रस से, तथा अग्नि अपने प्रकाश और वेगादि अश्वों [=गुणों] से सब जगत् को व्याप्त होता है। इसी से अग्नि और जल का 'अश्वी' नाम है। इसी प्रकार अपने-अपने गुणों से पृथिवी आदि भी दो-दो पदार्थ मिलकर 'अश्वी' कहाते हैं ॥

[(तथाऽश्विनौ०)] जबकि पूर्वोक्त अश्वी धारण और हनन करने [=गति देने] के के लिये शिल्पविद्या के व्यवहारों, अर्थात् कारीगरियों के निमित्त विमान आदि सवारियों में जोड़े जाते हैं, तब [(जर्भरी)] सब कलाओं के साथ उन सवारियों के धारण करनेवाले, तथा जब उक्त [अश्वी] कलाओं से [(तुर्फरीतू)] ताड़ित अर्थात् चलाए जाते हैं, तब अपने चलने से उन सवारियों को चलानेवाले होते हैं। उन अश्वियों को 'फर्फरी' भी कहते हैं, क्योंकि 'फर्फरी' शब्द के

दृश्यते। तेनास्यार्थस्य गतार्थत्वात् ग. कोशे पृथक् कृतः स्यादिति सम्भाव्यते।

अर्थ से वे सवारियों में वेगादि गुणों के देनेवाले समझे जाते हैं। [1]इस प्रकार वे अश्वी कलाघरों में संयुक्त किये हुए जल से परिपूर्ण देखने योग्य [जो] महासागर हैं, उनमें अच्छी प्रकार जाने-आने वाली नौका अर्थात् जहाज आदि सवारियों में जो मनुष्य स्थित होते हैं, उनके जाने-आने के लिये होते हैं॥ १॥

**भावार्थ**—इस मन्त्र में ईश्वर ने शिल्पविद्या के साधन का उपदेश किया है। जिससे मनुष्य लोग कलायुक्त सवारियों को बनाकर संसार में अपने तथा अन्य लोगों के उपकार से सब सुख पावें॥ १॥



पुनस्तौ कीदृशावित्युपदिश्यते—

अश्विना पुरुदंससा नरा शवीरया धिया। धिष्ण्या वनतं गिरः॥ २॥

अश्विना। पुरुऽदंससा। नरा। शवीरया। धिया॥ धिष्ण्या। वनतम्। गिरः॥ २॥

**पदार्थः**—(अश्विना) अग्निजले (पुरुदंससा) पुरूणि बहूनि दंसांसि शिल्पविद्यार्थानि कर्माणि सिध्यन्ति[2] याभ्यां तौ। दंस इति कर्मनामसु पठितम्। निघं० २। १। (नरा) शिल्पविद्याफलप्रापकौ (धिष्ण्या) यौ यानेषु वेगादीनां तीव्रतासंपादिनौ[3] (शवीरया) वेगवत्या। शव गतावित्यस्माद्धातोरीरन्प्रत्यये[4] टापि च शवीरेति सिद्धम्। (धिया) क्रियया प्रज्ञया वा। धीरिति कर्मप्रज्ञयोर्नामसु 'वायविन्द्रश्च०'[5] इत्यत्रोक्तम्। (वनतम्) यौ सम्यग्वाणीसेविनौ स्तः। अत्र व्यत्ययः। (गिरः) वाचः॥ २॥

**अन्वयः**—हे मनुष्या यूयं यौ [पुरुदंससा] पुरुदंससौ [नरा] नरौ धिष्ण्या [धिष्ण्यावश्विना]-श्विनौ शवीरया धिया गिरो वनतं वाणीसेविनौ स्तः, तौ बुद्ध्या[6] सेवयत॥ २॥

**भावार्थः**—अत्राप्यग्निजलयोर्गुणानां प्रत्यक्षकरणाय मध्यमपुरुषप्रयोगत्वात् सर्वैः शिल्पभिस्तौ तीव्रवेगवत्या मेधया पुरुषार्थेन च शिल्पविद्यासिद्धये सम्यक् सेवनीयौ स्तः। ये शिल्पविद्यासिद्धिं चिकीर्षन्ति, तैस्तद्विद्याहस्तक्रियाभ्यां सम्यक् प्रसिद्धीकृत्योक्ताभ्यामश्विभ्यामुपयोगः कर्त्तव्य इति।

---

१. यहां से आगे की पंक्तियां ख. कोशस्थ संस्कृतपाठ—'एवं यन्त्रेषु योजितौ उदन्ये जलपूर्णे उदधौ रमणसाधने समुद्रकुशले नौयानस्थितानां मनुष्याणां गमनागमनायोत्तमहेतू भवतः' के अनुसार हैं। संस्कृतपाठ में से ये पंक्तियां तथा निरुक्तपाठ की कुछ पंक्तियां सम्भवतः ग. कोश में हटादीं। अतः यहां ये पंक्तियां नहीं होनी चाहियें। २. पदमिदं क. ख. कोशयोरुपलभ्यते, ग. कोशे लिपिकर-प्रमादान्नष्टम्।

३. पदमिदं क. ख. ग. कोशेषूपलभ्यते, मुद्रणे प्रमादान्नष्टम्।

४. 'कॄशॄपॄकटि०' (उ० ४। ३१) इत्यादिना विहित 'ईरन्' प्रत्ययो बाहुलकात् शवतेरपि द्रष्टव्यः।

५. ऋ० १। २। ६ भाष्ये। ६. पदमिदं ख. कोशे दृश्यते। ग. कोशे लिपिकर-प्रमादान्नष्टम्।

सायणाचार्य्यादिभिर्मध्यमपुरुषस्य निरुक्तोक्तं विशिष्टनियमाभिप्रायम्[1] अविदित्वाऽस्य मन्त्रस्यार्थोऽन्यथा वर्णितः। तथैव यूरोपवासिभिर्विलासनाख्यादिभिश्चेति ॥ २ ॥

फिर वे अश्वी किस प्रकार के हैं, सो उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे मनुष्यो ! तुम लोग (पुरुदंससा) जिनसे शिल्पविद्या के लिये अनेक कर्म सिद्ध होते हैं, (नरा) उस विद्या के फल को देनेवाले, और (धिष्ण्या) जो कि सवारियों में वेगादिकों की तीव्रता के उत्पन्न करनेवाले [(अश्विना)] अग्नि और जल हैं, वे (शवीरया) वेग देनेवाली (धिया) क्रिया से कारीगरी में युक्त करने योग्य (गिरः) शिल्पविद्यागुणों की बतानेवाली वाणियों को (वनतम्) [अच्छी प्रकार] सेवन करनेवाले हैं, इसलिये इनसे [बुद्धिपूर्वक] अच्छी प्रकार उपकार लेते रहो ॥ २ ॥

**भावार्थ**—यहां भी अग्नि और जल के गुणों को प्रत्यक्ष दिखाने के लिये मध्यम पुरुष का प्रयोग है। इससे सब कारीगरों को चाहिये कि तीव्र वेग देनेवाली बुद्धि और अपने पुरुषार्थ से शिल्पविद्या की सिद्धि के लिये उक्त अश्वियों [=अग्नि जलों] की अच्छी प्रकार से योजना करें। जो शिल्पविद्या को सिद्ध करने की इच्छा करते हैं, उन पुरुषों को चाहिये कि विद्या और हस्तक्रिया से उक्त अश्वियों को प्रसिद्ध करके उनसे उपयोग लेवें।

**सायणाचार्य्य** आदि तथा **विलसन** आदि साहबों ने मध्यम पुरुष के विषय में निरुक्तकार के कहे हुए[2] विशेष अभिप्राय को न जानकर इस मन्त्र के अर्थ का वर्णन अन्यथा किया है ॥ २ ॥



**पुनस्तावश्विनौ कीदृशावित्युपदिश्यते—**

## दस्रा॑ युवाक॑वः सु॒ता नास॑त्या वृ॒क्तब॑र्हिषः। आ या॑तं रुद्रवर्त्तनी ॥ ३ ॥

दस्रा॑। यु॒वाक॑वः। सु॒ताः। नास॑त्या। वृ॒क्तऽब॑र्हिषः ॥ आ। या॒त॒म्। रु॒द्र॒व॒र्त्त॒नी॒ इति॑ रु॒द्रऽव॒र्त॒नी॒ ॥ ३ ॥

**पदार्थः**—(**दस्रा**) दुःखानामुपक्षयकर्त्तारौ। दसु उपक्षये इत्यस्मादौणादिको रक् प्रत्ययः[3]। (**युवाकवः**) सम्पादितमिश्रितामिश्रितक्रियाः। यु मिश्रणे अमिश्रणे चेत्यस्माद् धातोरौणादिकः आकुक्प्रत्ययः[4]। (**सुताः**) अभिमुख्यतया पदार्थविद्यासारनिष्पादिनः। अत्र बाहुलकात् कर्त्तृकारक औणादिकः क्तप्रत्ययः[5]। (**नासत्या**) न विद्यतेऽसत्यं कर्म गुणो वा ययोस्तौ। नभ्राण्नपान्नवेदा०। अ० ६। ३। ७४। नासत्यौ चाश्विनौ सत्यावेव नासत्यावित्यौर्णवाभः, सत्यस्य प्रणेतारावित्या-

---

१. द्र०—ऋग्वेदादिभाष्यभूमिका, पूर्वत्र पृष्ठ ४०२।

२. द्र०—ऋग्वेदादिभाष्यभूमिका, पूर्वत्र पृष्ठ ४०३। ३. उणादि २। १३ ॥

४. वै० य० मुद्रितेषु संस्करणेषु 'आकुः' अपपाठः, गुणवारणाय कित्त्वस्यावश्यकत्वात्। किङ्फिङ्हादि-प्रत्ययवत् (द्र०—महाभाष्य 'ऋलृक्' सूत्र) अनुक्तोऽपि बहुलवचनाद् विज्ञेयः।

५. 'अञ्जिघृसिभ्यः क्तः' (उ० ३। ८९) इत्यादिना विहितः क्तो बहुलवचनात् सुनोतेरपि भवति।

ग्रायणः। निरु० ६।१३। (वृक्तबर्हिषः) शिल्पफलनिष्पादिन ऋत्विजः। वृक्तबर्हिष इति ऋत्विङ्नामसु पठितम्। निघं० ३।१८। (आ) समन्तात् (यातम्) गच्छतो गमयतः। अत्र [1]पुरुष-व्यत्ययः, अन्तर्गतो ण्यर्थश्च। (रुद्रवर्त्तनी) रुद्रस्य प्राणस्य वर्त्तनिर्मार्गो ययोस्तौ॥ ३॥

**अन्वयः**—हे सुता युवाकवो वृक्तबर्हिषो विद्वांसः! शिल्पविद्याविदो भवन्तो यौ रुद्रवर्त्तनी [दस्रा] दस्रौ [नासत्या] नासत्यौ पूर्वोक्तावश्विनावायातं समन्ताद् यानानि गमयतः, तौ यदा यूयं साधयिष्यथ तदोत्तमानि सुखानि प्राप्स्यथ॥ ३॥

**भावार्थः**—परमेश्वरो मनुष्यानुपदिशति—युष्माभिः सर्वसुखशिल्पविद्यासिद्धये [2] दुःख-विनाशाय च शिल्पविद्यायामग्निजलयोर्यथावदुपयोगः कर्त्तव्य इति॥ ३॥

फिर भी वे अश्वी किस प्रकार के हैं, सो अगले मन्त्र में उपदेश किया है—

**पदार्थान्वयभाषा**—हे (सुताः) पदार्थविद्या के सार को सिद्ध करके प्रकट करने, (युवाकवः) एक दूसरी से मिली वा पृथक् क्रियाओं को सिद्ध करने, [तथा] (वृक्तबर्हिषः) शिल्पविद्या के फल को सिद्ध करनेवाले विद्वान् लोगो! [आप] (रुद्रवर्त्तनी) जिनका प्राणमार्ग है, वे (दस्रा) दुःखों के नाश करनेवाले, (नासत्या) जिनमें एक भी गुण [वा कर्म] मिथ्या नहीं है, ऐसे जो अश्वी [=अग्नि जल] (आयातम्) सब ओर यानों को ले जाते हैं, उन पूर्वोक्त अश्वियों को जब विद्या से [सिद्ध कर लोगे अर्थात्] उपकार में ले आओगे, उस समय तुम उत्तम सुखों को प्राप्त होवोगे॥ ३॥

**भावार्थ**—परमेश्वर मनुष्यों को उपदेश करता है कि हे मनुष्य लोगो! तुमको सब सुखों की सिद्धि के लिये, तथा दुःखों के विनाश के लिये शिल्पविद्या में अग्नि और जल का यथावत् उपयोग करना चाहिये॥३॥



[3]**इदानीमेतद्विद्योपयोगिनाविन्द्रशब्देनेश्वरसूर्य्यावुपदिश्येते—**

**इन्द्रा याहि चित्रभानो सुता इमे त्वायवः। अण्वीभिस्तना पूतासः॥ ४॥**

इन्द्र। आ। याहि। चित्रभानो इति चित्रऽभानो। सुताः। इमे। त्वाऽयवः॥ अण्वीभिः। तना। पूतासः॥ ४॥

**पदार्थः**—(इन्द्र) परमेश्वर! सूर्य्यो वा। अत्राह यास्काचार्य्यः—इन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयत इति वेरां धारयत इति वेन्दवे द्रवतीति वेन्दौ रमत इति वेन्धे भूतानीति वा। तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते। इदं करणादित्याग्रायण

१. अयं पाठो ग. कोशे वर्तते।

२. अयं पाठः क. ख. ग. सर्वकोशेषूपलभ्यते। मुद्रणे कथं भ्रष्ट इति न ज्ञायते। वै०य०मुद्रितेषु संस्करणेषु 'सर्वसुखशिल्पविद्यासिद्ध्या दुःखविनाशायाग्निजलयो०' इत्येवं भ्रष्टः पाठो दृश्यते।

३. अत्र 'एतद्विद्योपयोगिनौ' पदं व्यर्थमिव प्रतीयते। क. ग. कोशयोर्नोपलभ्यते। भावार्थोऽप्यस्य न दृश्यते। तस्मादिह 'इदानीमिन्द्रशब्देनेश्वरसूर्यावुपदिश्येते' इत्येव पाठेन भाव्यम्।

इदं दर्शनादित्यौपमन्यव इन्दतेर्वैश्वर्यकर्मण [1]इन्चछत्रूणां दारयिता वा द्रावयिता वाऽऽदारयिता च यज्वनाम् । निरु० १० । ८ । इन्द्राय साम गायत[2] नेन्द्रादृते पवते धाम [3]किञ्चनेन्द्रस्य नु वीर्य्याणि [4]प्रवोचमिन्द्रे कामा अयंसत[5] । निरु० ७ । २ ॥

इराशब्देनान्नं पृथिव्यादिकमुच्यते, तद्दारणात् तद्दानात् तद्धारणात् । चन्द्रलोकस्य प्रकाशाय द्रवणात् तत्र रमणादित्यर्थेनेन्द्रशब्दात् सूर्य्यलोको गृह्यते । तथा सर्वेषां भूतानां प्रकाशनात् प्राणे-जीवस्योपकरणादस्य सर्वस्य जगत उत्पादनाद् दर्शनहेतोश्च सर्वैश्वर्य्ययोगाद् दुष्टानां शत्रूणां विनाशकाद् दूरे गमकत्वाद् यज्वानां रक्षकत्वाच्चेत्यर्थादिन्द्रशब्देनेश्वरस्य ग्रहणम् । एवं परमेश्वराद्विना किञ्चिदपि वस्तु न पवते, तथा सूर्य्याकर्षणेन विना कश्चिदपि लोको [नियतकक्षायां] नैव चलति तिष्ठति वा ।

प्र तुविद्युम्नस्य स्थविरस्य घृष्वेर्दिवो ररप्शे महिमा पृथिव्याः । नास्य शत्रुर्न प्रतिमानमस्ति न प्रतिष्ठिः पुरुमायस्य सह्योः ॥ ऋ० ६ । १८ । १२ ॥ यस्यायं महाप्रकाशस्य वृद्धस्य सर्वपदार्थानां जगदुत्पत्तौ संघर्षकर्त्तुः सहनशीलस्य बहुपदार्थनिर्मातुरिन्द्रस्य परमैश्वर्य्यवतः परमेश्वरस्य सूर्य्यलोकस्य सृष्टेर्मध्ये महिमा प्रकाशते तस्यास्य न कश्चिच्छत्रुः, न किञ्चित्परिमाणसाधनमर्थादुपमानं, नैकत्राधिकरणं चास्ति, इत्यनेनोभानार्थौ गृह्येते ।

(आयाहि) समन्तात् प्राप्तो भव, भवति वा (चित्रभानो) चित्रा आश्चर्यभूता भानवो दीप्तयो यस्य सः (सुताः) उत्पन्ना मूर्त्तिमन्तः पदार्थाः (इमे) विद्यमानाः (त्वायवः) त्वां तं चोपेताः । छन्दसीणः । उ० १ । २ इत्यौणादिके उण्प्रत्यये कृते आयुरिति सिध्यति । त्वमित्यत्र छान्दसो वर्णलोपो वा [महाभाष्य ८ । २ । २५] इत्यनेन तकारलोपः । (अण्वीभिः) कारणैः, प्रकाशावयवैः किरणैरङ्गुलिभिर्वा । वोतो गुणवचनात् । अ० ४ । १ । ४४ अनेन ङीषि प्राप्ते व्यत्ययेन ङीन् । । (तना) विस्तृतधनप्रदाः । तनेति धननामसु पठितम् । निघं० २ । १० । अत्र सुपां सुलुग्०[अ० ७ । १ । ३९] इत्यनेनाकारादेशः । (पूतासः) शुद्धाः शोधिताश्च ॥४॥

अन्वयः—हे चित्रभानो इन्द्र परमेश्वर ! त्वमस्मानायाहि कृपया प्राप्नुहि । येन भवता इमे अण्वीभिस्तना पुष्कलद्रव्यदाः पूतासस्त्वायवः सुता उत्पादिताः पदार्थाः वर्त्तन्ते, तैर्गृहीतोपकारानस्मान् सम्पादय ॥

तथा योऽयं [चित्रभानो चित्रभानुरिन्द्र] इन्द्रः स्वगुणैः सर्वान् पदार्थानायाहि प्राप्नोति तेनेमे अण्वीभिः [6]किरणावयवैस्तना विस्तृतप्राप्तिहेतवस्त्वायवस्तन्निमित्तप्राप्तायुषः पूतासः सुताः संसारस्थाः पदार्थाः प्रकाशयुक्ताः क्रियन्ते तैरिति पूर्ववत् ॥ ४ ॥

भावार्थः—अत्र श्लेषालङ्कारेणेश्वरस्य सूर्य्यस्य वा यानि कर्माणि प्रकाश्यन्ते, तानि परमार्थव्यवहारसिद्धये मनुष्यैः समुपयोक्तव्यानि सन्तीति ॥ ४ ॥

---

१. राथसम्पादिते निरुक्तेऽयमेव पाठः । अत्र 'इन्दञ्छत्रूणां' इति शुद्धः पाठः ।

२. ऋ० ८ । ९८ । १ ॥ ३. ऋ० ९ । ६८ । ६ ॥

४. ऋ० १ । ३२ । १ ॥ ५. अनुपलब्धमूलम् ।

६. अयं ग. कोशस्थः शुद्धः पाठः । वै० य० मुद्रितेषु संस्करणेषु 'किरणकारणावयवैः' इत्यपपाठः ।

परमेश्वर ने अगले मन्त्र में इन्द्र शब्द से अपना और सूर्य्य का उपदेश किया है—

**पदार्थान्वयभाषा**—हे (चित्रभानो) आश्चर्यरूप प्रकाशयुक्त (इन्द्र) परमेश्वर! आप हमको कृपा करके [(आ याहि)] प्राप्त हूजिये। कैसे आप हैं कि जिन्होंने [(इमे) ये] (अण्वीभिः) कारण से (तना) सब संसार में विस्तृत [पुष्कल धन देनेवाले,] (पूतासः) पवित्र, और (त्वायवः) आपके उत्पन्न किये हुए व्यवहारों से युक्त, (सुताः) उत्पन्न हुए मूर्तिमान पदार्थ उत्पन्न किये हैं, [उनसे] हमें उपकार लेने में समर्थ करो, इससे हम लोग आप ही के शरणागत हैं॥

दूसरा अर्थ—जो [यह (चित्रभानो) आश्चर्यरूप दीप्तिवाला (इन्द्र)] सूर्य्य अपने गुणों से सब पदार्थों को [(आयाहि)] प्राप्त होता है, वह (अण्वीभिः) अपनी किरणों से (तना) संसार में विस्तृत धन देनेवाले, (त्वायवः) उसके निमित्त से जीनेवाले (पूतासः) पवित्र (सुताः) संसार के पदार्थों को प्रकाशयुक्त करता है॥ ४॥

**भावार्थ**—यहां श्लेषालङ्कार से परमेश्वर और सूर्य्य के जो-जो गुण और कर्म प्रकाशित किये गये हैं, इनसे परमार्थ और व्यवहार की सिद्धि के लिये अच्छी प्रकार उपयोग लेना सब मनुष्यों को योग्य है॥ ४॥

[**टिप्पणी**—यहां से आगे संस्कृत में दिये गये प्रमाणों का भाषार्थ नहीं किया गया है। सम्पा०]



**अथेन्द्रशब्देनेश्वर उपदिश्यते—**

इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः। उप ब्रह्माणि वाघतः॥ ५॥

इन्द्र। आ। याहि। धिया। इषितः। विप्रऽजूतः। सुतऽवतः॥ उप। ब्रह्माणि। वाघतः॥ ५॥

**पदार्थः**—(इन्द्र) परमेश्वर! (आ याहि) प्राप्तो भव (धिया) प्रकृष्टज्ञानयुक्तया बुद्ध्योत्तमकर्मणा वा (इषितः) प्रापयितव्यः (विप्रजूतः) विप्रैर्मेधाविभिर्विद्वद्भिर्ज्ञातः। विप्र इति मेधाविनामसु पठितम्। निघं० ३। १५। [1][जू इति सौत्रो धातुर्गत्यर्थः[2]।] (सुतावतः) प्राप्तपदार्थविद्यान् (उप) सामीप्ये (ब्रह्माणि) विज्ञातवेदार्थान् ब्राह्मणान्। ब्रह्म वै ब्राह्मणः। श० १३। १। ५। ३। (वाघतः) यज्ञविद्यानुष्ठानेन सुखसम्पादिन ऋत्विजः। वाघत इति ऋत्विङ्नामसु पठितम्। निघं० ३। १८॥ ५॥

**अन्वयः**—हे इन्द्र! धियेषितः विप्रजूतस्त्वं सुतावतो ब्रह्माणि वाघतो विदुष उपायाहि॥५॥

**भावार्थः**—मनुष्यैर्मूलकारणस्येश्वरस्य संस्कृतया बुद्ध्या विज्ञानतः साक्षात्प्राप्तिः कार्य्या। नैवं विनाऽयं केनचिन्मनुष्येण प्राप्तुं शक्य इति॥ ५॥

---

१. क. कोशे 'जू इति सौत्रः' इत्युपलभ्यते।

२. 'जुचङ्क्रम्य' (अ० ३। २। १५०) इत्यादिसूत्रे पठितः। गत्यर्थत्वात् प्राप्त्यर्थकः।

ईश्वर ने अगले मन्त्र में अपना प्रकाश किया है—

**पदार्थान्वयभाषा**—हे (इन्द्र) परमेश्वर! (धिया) निरन्तर ज्ञानयुक्त बुद्धि वा उत्तम कर्म में (इषितः) प्राप्त होने, और (विप्रजूतः) बुद्धिमान् विद्वान् लोगों के जानने योग्य आप (सुतावतः) पदार्थविद्या के जाननेवाले (ब्रह्माणि) ब्राह्मण अर्थात् जिन्होंने वेदों का अर्थ [जाना है], तथा (वाघतः) जो यज्ञविद्या के अनुष्ठान से सुख करनेवाले विद्वान् हैं, उन्हें कृपा से (उपायाहि) प्राप्त हूजिये ॥५॥

**भावार्थ**—सब मनुष्यों को उचित है कि जो सब कार्य्य जगत् की उत्पत्ति करने में आदि कारण परमेश्वर है, उसको शुद्ध बुद्धि विज्ञान से साक्षात् करना चाहिये। [क्योंकि इसके विना वह किसी को प्राप्त नहीं हो सकता ॥ ५ ॥



**अथेन्द्रशब्देन वायुरुपदिश्यते—**

## इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः। सुते दधिष्व नश्चनः ॥ ६ ॥

इन्द्र । आ । याहि । तूतुजानः । उप । ब्रह्माणि । हरिऽवः ॥ सुते । दधिष्व । नः । चनः ॥ ६ ॥

**पदार्थः**—(इन्द्र) **अयं वायुः।** विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना। ऋ० १। १४। १० **अनेन प्रमाणेनेन्द्रशब्देन वायुर्गृह्यते। (आ) समन्तात्, (याहि) याति समन्तात् प्रापयति** (तूतुजानः) त्वरमाणः। तूतुजान इति क्षिप्रनामसु पठितम्। निघं० २। १५। (उप) **सामीप्यम्**[1] (**ब्रह्माणि**) **वेदस्थानि स्तोत्राणि** (हरिवः) **वेगाद्यश्ववान्। हरयो हरणनिमित्ताः प्रशस्ताः वेगा**[2] **विद्यन्ते यस्य सः। अत्र प्रशंसायां 'मतुप्'।** मतुवसो रुः सम्बुद्धौ छन्दसि [अ० ८। ३। १] **इत्यनेन रुत्वे विसर्जनीयः**[3]। छन्दसीरः [अ० ८। २। १५] **इत्यनेन वत्वम्।** हरी **इन्द्रस्य।** निघं० १। १५। (सुते)[4] **आभिमुख्यतयोत्पन्ने वाग्व्यवहारे**[5] (दधिष्व) **दधते** (नः) **अस्मभ्यमस्माकं वा** (चनः) **अन्नभोजनादिव्यवहारम्** ॥ ६ ॥

**अन्वयः**—यो हरिवो **वेगवान्** तूतुजान इन्द्र **वायुः** सुते ब्रह्माण्युपायाहि[6] **समन्तात् प्राप्नोति, स एव** नः[7] चनो दधिष्व **दधते** ॥ ६ ॥

---

१. 'सामीप्ये' इति साधु स्यात्।

२. वै० य० मुद्रितेषु संस्करणेषु 'किरणा' इत्यपपाठः। अथस्य वायुपरत्वादत्र 'वेगा' इत्येव साधुपाठः।

३. वै० य० मुद्रितेषु संस्करणेषु 'रुत्वविसर्जनीयौ' इत्यपपाठः। सूत्रमिदं केवलं रुत्वं विदधाति, रुत्वे सति विसर्जनीयो भवति। ४. पदमिदं क. ख. कोशयोर्वर्तते, तदनु नष्टम्।

५. वै० य० मुद्रितेषु १, २, ३ संस्करणेषु 'आभिमुख्यतयोत्पन्नौ वाग्व्यवहारौ' इत्यपपाठः। क. ख. कोशयोः चतुर्थे च संस्करणे शुद्ध एव पाठ उपलभ्यते।

६. वै० य० मुद्रितेषु संस्करणेषु 'ब्रह्माण्यायाहि' इत्येव पाठः।

७. वै० य० मुद्रितेषु सस्करणेषु पदमिदं न दृश्यते। चतुर्थसंस्करणे परिवर्धितं कोष्ठके। क. कोशे तूपलभ्यते।

**भावार्थः**—मनुष्यैरयं वायुः=शरीरस्थः प्राणः सर्वचेष्टानिमित्तोऽन्नपानादानपाचनविसर्जन-धातुविभागाभिसरणहेतुर्भूत्वा पुष्टिवृद्धिक्षयकरोऽस्तीति बोध्यम् ॥ ६ ॥

**इति पञ्चमो वर्गः ॥**

ईश्वर ने अगले मन्त्र में भौतिक वायु का उपदेश किया है—

**पदार्थान्वयभाषा**—जो (हरिवः) वेगादिगुणयुक्त (तूतुजानः) शीघ्र चलनेवाला (इन्द्र) भौतिक वायु है, वह (सुते) प्रत्यक्ष उत्पन्न वाणी के व्यवहार में[1] हमारे लिये (ब्रह्माणि) वेद के स्तोत्रों को (उपायाहि) अच्छी प्रकार प्राप्त करता है। तथा वह (नः) हम लोगों के (चनः) अन्नादि व्यवहार को (दधिष्व) धारण करता है ॥ ६ ॥

**भावार्थ**—जो शरीरस्थ प्राण है, वह सब क्रिया का निमित्त होकर खाना पीना ग्रहण करना पकाना और त्यागना आदि क्रियाओं से कर्म का कराने, तथा शरीर में रुधिर आदि धातुओं के विभागों को जगह-जगह में पहुंचानेवाला है। क्योंकि वही शरीर आदि की पुष्टि और नाश का हेतु है [ऐसा मनुष्यों को जानना चाहिये] ॥६॥

यह पांचवा वर्ग समाप्त हुआ ॥



**अथेश्वरः प्राणिनां मध्ये ये विद्वांसः सन्ति, तेषां कर्त्तव्यलक्षणे उपदिशति—**

ओमा॑सश्चर्षणीधृतो॒ विश्वे॑ देवास॒ आ ग॑त। दा॒श्वांसो॑ दा॒शुषः॑ सु॒तम् ॥ ७ ॥

ओमा॑सः। च॒र्ष॒णि॒ऽधृ॒तः॒। विश्वे॑। दे॒वा॒सः॒। आ। ग॒त॒ ॥ दा॒श्वांसः॑। दा॒शुषः॑। सु॒तम् ॥ ७ ॥

**पदार्थः**—(ओमासः) रक्षका ज्ञानिनो विद्याकामा उपदेशप्रीतयो विज्ञानतृप्तयो याथातथ्यावगमाः शुभगुणप्रवेशाः सर्वविद्याश्राविणः परमेश्वरप्राप्तौ व्यवहारे च पुरुषार्थिनः शुभविद्यागुणयाचिनः क्रियावन्तः सर्वोपकारमिच्छुका विज्ञाने प्रशस्ता आप्ताः सर्वशुभलिङ्गिनो दुष्टगुणहिंसकाः शुभगुणदातारः सौभाग्यवन्तो ज्ञानवृद्धाः। अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु। अविसिविसिशुषिभ्यः कित् [उ० १। १४४] इत्यनेनौणादिकेन सूत्रेणावधातोः 'ओम'[2] शब्दः सिध्यति। ओमास इति पदनामसु पठितम्। निघं० ४। ३। (चर्षणीधृतः) सत्योपदेशेन मनुष्येभ्यः सुखस्य धर्तारः।

---

१. वै० य० मुद्रितेषु संस्करणेषु' (नः) हमारे लिये' पाठो दृश्यते, स चानावश्यकः, उत्तरत्र दर्शनात्। क. ख. कोशयोरपि न दृश्यते।

२. वै० य० मुद्रितयोः १-२ संस्करणयोः शुद्धपाठ उपलभ्यते। तृतीयसंस्करणे प्रमादात् मकारान्तः 'ओम्' मुद्रितः। चतुर्थे संस्करणे उत्तराक्षरसंयोगात् मकारोऽनुस्वारतां नीत्वा पाठो भ्रष्टतरतां नीतः। यद्यपि 'ओम' शब्दे 'मन्' प्रत्ययः 'कित्' वर्तते, तथापि 'ज्वरत्वर' (अ० ६। ४। २०) इत्यनेनोठि कृते बाहुलकादत्र गुणो भवति।

चर्षणय इति मनुष्यनामसु पठितम् । निघं० २ । ३ । (विश्वेदेवासः) देवा दीव्यन्ति विश्वे सर्वे च ते देवा विद्वांसश्च ते[1] । 'आज्जसेरसुक् । अ० ७ । १ । ५० [इत्यसुगागमः] । विश्वेदेवा इति पदनामसु पठितम् । निघं० ५ । ६ । (आ गत) समन्तात् गमयत । इत्यत्र गमधातोर्ज्ञानार्थः[3] प्रयोगः । (दाश्वांसः) सर्वस्याभयदातारः । दाश्वान् साह्वान् मीढ्वांश्च । अ० ६ । १ । १२ अनेनायं दानार्थाद्दाशेः क्वसुप्रत्ययान्तो निपातितः । (दाशुषः) दातुः (सुतम्) यत् सोमादिकं ग्रहीतुं विज्ञानं प्रकाशयितुं चाभीष्टं वस्तु ॥

निरुक्तकार एनं मन्त्रमेवं समाचष्टे—अवितारो वाऽवनीया वा, मनुष्यधृतः सर्वे च देवा इहागच्छत, दत्तवन्तो दत्तवतः सुतमिति । तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते । यत्तु किञ्चिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते, यदेव विश्वलिङ्गमिति शाकपूणिरनत्यन्तगतस्त्वेष उद्देशो भवति, बभ्रुरेक इति दश द्विपदा अलिङ्गा भूतांशः काश्यप आश्विनमेकलिङ्गमभितष्टीयं सूक्तमेकलिङ्गम् । निरु० १२ । ४० । अत्र रक्षाकर्त्तारः सर्वे रक्षणीयाश्च सर्वे विद्वांसः सन्ति, ते च सर्वेभ्यो विद्याविज्ञानं दत्तवन्तो भवन्त्विति ॥ ७ ॥

अन्वयः— हे ओमासश्चर्षणीधृतो दाश्वांसो विश्वे देवासः सर्वे विद्वांसो दाशुषः सुतमागत समन्तादागच्छत ॥ ७ ॥

भावार्थः—ईश्वरो विदुषः प्रत्याज्ञां ददाति—यूयमेकत्र विद्यालये चेतस्ततो वा भ्रमणं कुर्वन्तः सन्तोऽज्ञानिनो जनान् विदुषः सम्पादयत । यतः सर्वे मनुष्या विद्याधर्मसुशिक्षासत्क्रियावन्तो भूत्वा सदैव सुखिनः स्युरिति ॥ ७ ॥

ईश्वर ने अगले मन्त्र में प्राणियों में जो विद्वान् होते हैं, उनके[4] लक्षण और कर्तव्यों का प्रकाश किया है—

पदार्थान्वयभाषा—हे (ओमासः) अपने गुणों से संसार के जीवों की रक्षा करने ज्ञान से

---

१. मन्त्रे पदपाठे च 'विश्वे देवाः' स्वरानुरोधाद् द्वे पदे स्तः । भाष्यकृता त्वत्र समानाधिकरणसमासः प्रदर्शितः । अयं मन्त्रो भाष्यकृता यजुर्वेदभाष्ये (६ । ३३)ऽपि व्याख्यातः । तत्र यथास्थितं द्वे पदे एव निर्दिष्टे । अत्रत्यं व्याख्यानं यदि शब्दार्थपरमेवाश्रीयते, तर्हि कथंचित् समाधातुं शक्यते ।

२. सूत्रमेतत् क. कोशे पठ्यते ।

३. क. कोशेऽत्र '(आ गत) आसमन्ताज्ज्ञापयत । आगत इत्यत्र गमिर्ज्ञानार्थो गृह्यते' इत्येवं पाठ आसीत् । अस्मिन् पाठे गमेर्ज्ञानार्थत्वं वक्तुमुचितम् । 'ज्ञापयत' इत्यस्य स्थाने 'गमयत' इत्येवं पाठः परिवर्तितस्तदा 'इत्यत्र गमधातोर्ज्ञानार्थः प्रयोगः' इति लेखो न युज्यते । यद्युच्येत 'गमयत' इत्यस्य 'ज्ञापयत' इत्येवार्थो गृह्यताम् । तदपि न संगच्छते, अन्वये ज्ञानार्थस्यानन्वयात् । तस्मादत्र संशोधनकाले स्खलननिमित्त एवायं पाठोऽवशिष्टः स्यात् । ग्रन्थकर्तुर्वेदभाष्ये एतादृशाः स्खलननिमित्ता बहवोऽपपाठा दृश्यन्ते । तत्र प्रधानं कारणं कार्यबाहुल्यं लिपिकरपण्डितानां च प्रमाद इति शक्यतेऽनुमातुम् ।

४. वै०य० मुद्रितेषु संस्करणेषु 'मन्त्र में विद्वानों के लक्षण और आचरणों का' इत्येवमपपाठ उपलभ्यते । यथा त्वस्माभिः पाठो धृतस्तथा क. कोशे समुपलभ्यते । केवलं 'कर्तव्यों का' इत्यस्य स्थाने 'उनको क्या-क्या करना चाहिये इसका' पाठो वर्तते ।

परिपूर्ण, विद्या और उपदेश में प्रीति रखने, विज्ञान से तृप्त, यथार्थ निश्चययुक्त, शुभगुणों को देने, और सब विद्याओं का सुनाने, परमेश्वर के जानने के लिये [तथा व्यवहार में] पुरुषार्थी, श्रेष्ठ विद्या के गुणों को चाहने, दुष्ट गुणों के नाश करने, [शुभ गुणों के देनेवाले, और सौभाग्य-युक्त,] अत्यन्त ज्ञानवान्, (चर्षणीधृतः) सत्य उपदेश से मनुष्यों के सुख के धारण करने और कराने, (दाश्वांसः) अपने शुभ गुणों से सबको निर्भय करनेहारे (विश्वे देवासः) सब विद्वान् लोगो ! आप (दाशुषः) दान करनेवालों के (सुतम्) सोम आदि पदार्थ, विज्ञान का प्रकाश, और [इष्ट वस्तु को] (आ गत) सब प्रकार प्राप्त होवो ॥ ७ ॥

**भावार्थ**—ईश्वर विद्वानों को आज्ञा देता है कि—'तुम लोग एक जगह पाठशाला में अथवा इधर-उधर देशदेशान्तरों में भ्रमते हुए अज्ञानी पुरुषों को विद्यारूपी ज्ञान देके विद्वान् किया करो, कि जिससे सब मनुष्य लोग विद्या धर्म और श्रेष्ठ शिक्षायुक्त होके अच्छे-अच्छे कर्मों से युक्त होकर सदा सुखी रहें ॥ ७ ॥



पुनस्तानेवोपदिशति—

विश्वे॑ दे॒वासो॑ अ॒प्तुरः॑ सु॒तमाग॑न्त॒ तूर्ण॑यः । उ॒स्रा इ॑व॒ स्वस॑राणि ॥ ८ ॥

विश्वे॑ । दे॒वासः॑ । अ॒प्ऽतुरः॑ । सु॒तम् । आ । ग॒न्त॒ । तूर्ण॑यः ॥ उ॒स्राःऽइ॑व । स्वस॑राणि ॥ ८ ॥

**पदार्थः**—(विश्वे) समस्ताः (देवासः) विद्यावन्तः (अप्तुरः) मनुष्याणामपः प्राणान् तुतुरति विद्याविबलानि प्राप्नुवन्ति प्रापयन्ति च ते । अयं शीघ्रार्थस्य तुरेः क्विबन्तः प्रयोगः । (सुतम्) अन्तःकरणाभिगतं विज्ञानं कर्तुम् (आगन्त) आगच्छत । अयं गमेर्लोटो मध्यमबहुवचने प्रयोगः । बहुलं छन्दसि । अ० २ । ४ । ७३ इत्यनेन शपो लुकि कृते तप्तनप्तनथनाश्च । अ० ७ । १ । ४५ इति तबादेशे पित्वादनुनासिकलोपाभावः । (तूर्णयः) सर्वत्र विद्यां प्रकाशयितुं त्वरमाणाः । त्रित्वरा सम्भ्रमे इत्यस्मात् वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् । उ० ४ । ५३ अत्र नेरनुवर्त्तनात्तूर्णिरिति सिद्धम्[1] । (उस्रा इव) सूर्य्यकिरणा इव । उस्रा इति रश्मिनामसु पठितम् । निघं० १ । ५ । (स्वसराणि) अहानि । स्वसराणीत्यहर्नामसु पठितम् । निघं० १ । ६ ॥ ८ ॥

**अन्वयः**—हे अप्तुरस्तूर्णयो विश्वे देवासः यूयं स्वसराणि प्रकाशयितुं उस्राः [इव] किरणा इव सुतं कर्मोपासनाज्ञानरूपं व्यवहारं प्रकाशयितुमागन्त नित्यमागच्छत समन्तात् प्राप्नुत ॥ ८ ॥

**अत्रोपमालङ्कारः ।**

**भावार्थः**—ईश्वरेणैतन्मन्त्रेणेयमाज्ञा दत्ता—हे सर्वे विद्वांसो नैव युष्माभिः कदाचिदपि विद्याविशुभगुणप्रकाशकरणे विलम्बालस्ये कर्त्तव्ये । यथा दिवसे सर्वे मूर्त्तिमन्तः पदार्थाः प्रकाशिता भवन्ति, तथैव युष्माभिरपि सर्वे विद्याविषयाः सदैव प्रकाशिताः कार्य्या इति ॥ ८ ॥

---

१. अत्र क. कोशपाठः—अत्र नेरित्यनुवर्तनात् त्रित्वरा सम्भ्रमे इति त्वरेः निः प्रत्ययः । ज्वरत्वर-स्रिव्यविमवामुपधायाश्च' अष्टा० ६ । पा० [४] । सू० [२०] इत्यूठ् ।

ईश्वर ने फिर भी उन्हीं विद्वानों का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे (अप्तुरः) मनुष्यों को प्राण और विद्या आदि का बल देने, और (तूर्णयः) सर्वत्र विद्या आदि के प्रकाश करने में शीघ्रता करनेवाले (विश्वे देवासः) सब विद्वान् लोगो! (स्वसराणि) दिनों को प्रकाश करने के लिये (उस्रा इव) जैसे सूर्य्य की किरण आती जाती हैं, वैसे ही तुम भी मनुष्यों के समीप (सुतम्) कर्म उपासना और ज्ञान का प्रकाश करने के लिये (आगन्त) नित्य आया जाया करो॥ ८॥

इस मन्त्र में उपमालङ्कार है।

**भावार्थ**—ईश्वर ने [इस मन्त्र में] यह आज्ञा दी है—"हे विद्वानो! आप लोगों को कभी भी विद्या आदि शुभ गुणों के प्रकाश करने में थोड़ा भी विलम्ब वा आलस्य करना योग्य नहीं है। जैसे दिन की निकासी में सूर्य्य सब मूर्तिमान् पदार्थ प्रकाशित होते हैं, वैसे ही विद्वान् लोगों को भी विद्या के विषयों का प्रकाश सदा करना चाहिये॥ ८॥



**एते कीदृशस्वभावा भूत्वा किं सेवेरन्नित्युपदिश्यते—**

विश्वे॑ दे॒वासो॑ अ॒स्रिध॒ एहि॑मायासो अ॒द्रुहः॑। मेधं॑ जुषन्त॒ वह्न॑यः॥ ९॥

विश्वे॑। दे॒वासः॑। अ॒स्रिधः॑। एहि॑ऽमायासः। अ॒द्रुहः॑॥ मेध॑म्। जु॒ष॒न्त॒। वह्न॑यः॥ ९॥

**पदार्थः**—(विश्वे) समस्ताः (देवासः) वेदपारगाः (अस्रिधः) अक्षयविज्ञानवन्तः। क्षयार्थस्य नञ्पूर्वकस्य स्त्रिधेः **क्विबन्तस्य रूपम्। (एहिमायासः) आसमन्ताच्चेष्टायां प्रज्ञा येषां ते। चेष्टार्थस्याङ्पूर्वस्य ईहधातोः** सर्वधातुभ्य इन्। उ० ४। ११८ **इतीन्प्रत्ययान्तं रूपम्।** मायेति प्रज्ञानामसु पठितम्। निघं० ३। ९। (**अद्रुहः**) **द्रोहरहिताः। (मेधम्) ज्ञानक्रियामयं शुद्धं यज्ञं सर्वैर्विद्वद्भिः शुभैर्गुणैः कर्मभिर्वा सह सङ्गतम्।** मेध इति यज्ञनामसु पठितम्। निघं० ३। १७। (**जुषन्त**) [2]**संप्रीत्या सेवध्वम्। (वह्नयः) सुखस्य वोढारः। अयं वहेर्निप्रत्ययान्तः प्रयोगः**[3]। वह्नयो वोढारः। निरु० ८। ३॥ ९॥

**अन्वयः**—हे एहिमायासोऽस्रिधोऽद्रुहो वह्नयो विश्वे देवासो भवन्तो मेधं[4] **ज्ञानक्रियाभ्यां [5]सेवनीयम् यज्ञं जुषन्त [6]संप्रीत्या सेवध्वम्॥ ९॥**

---

१. वै० य० मुद्रित संस्करणों में भाषा-भावार्थ क. कोशस्थ भूतपूर्व संस्कृत-पाठानुसार है। हमने अल्प सा परिवर्तन करके वर्तमान संस्कृत-भावार्थ के अनुकूल बना दिया है।

२. 'सं' पदं क. ख कोशयोरुपलभ्यते।

३. 'वहिश्रिश्रुयुद्रु०' (उ० ४। ५१) इत्यादिना निप्रत्ययः, नित्वादाद्युदात्तः।

४. वै० य० मुद्रितेषु संस्करणेषु 'मेधं' पदं 'ज्ञानक्रियाभ्यां' पदात् परं दृश्यते, पदार्थानुसारं प्राङ् निर्दिष्टम्।

५. वै० य० मुद्रितेषु संस्करणेषु 'सेवनीयं' इत्यपपाठः।

६. एते पदे भाष्यकृता स्वहस्तेन ख. कोशे परिवर्धिते। जुषन्तमित्यस्य पदार्थेन गतत्वादन्वये नास्ति विशेषावश्यकता।

**भावार्थः**—ईश्वर आज्ञापयति—भो विद्वांसः ! [भवन्तो] परक्षयद्रोहरहिता विशालविद्यया क्रियावन्तो भूत्वा सर्वेभ्यो मनुष्येभ्यो विद्यासुखयोः सदा दातारो भवन्त्विति ॥ ६ ॥

विद्वान् लोग कैसे स्वभाववाले होकर कैसे कर्मों को सेवें, इस विषय को ईश्वर ने अगले मन्त्र में दिखाया है—

**पदार्थान्वयभाषा**—हे (एहिमायासः) क्रिया में बुद्धि रखनेवाले (अस्रिधः) [अक्षय=] दृढ़ ज्ञान से परिपूर्ण, (अद्रुहः) द्रोहरहित, (वह्नयः) संसार को सुख पहुंचानेवाले (विश्वे) सब (देवासः) विद्वान् लोगो ! तुम (मेधम्) ज्ञान और क्रिया से सिद्ध करने योग्य यज्ञ को [(जुषन्त)] प्रीतिपूर्वक यथावत् सेवन किया करो ॥ ६ ॥

**भावार्थ**—ईश्वर आज्ञा देता है कि—हे विद्वान् लोगो ! तुम दूसरे के विनाश और द्रोह से रहित तथा अच्छी विद्या से क्रियावाले होकर सब मनुष्यों को सदा विद्या और सुख देते रहो ॥६॥



तैः कीदृशी वाक् प्राप्तुमेष्टव्येत्युपदिश्यते—

पा॒व॒का नः॒ सर॑स्वती॒ वाजे॑भिर्वा॒जिनी॑वती । य॒ज्ञं व॑ष्टु धि॒याव॑सुः ॥ १० ॥

पा॒व॒का । नः॒ । सर॑स्वती । वाजे॑भिः । वा॒जिनी॑ऽवती ॥ य॒ज्ञम् । व॒ष्टु॒ । धि॒याऽव॑सुः ॥ १० ॥

**पदार्थः**—(पावका) पावं पवित्रकारकं व्यवहारं काययति शब्दयति या सा । 'पूञ् पवने' इत्यस्माद्भावार्थे घञ्[1] । तस्मिन् सति 'कै शब्दे' इत्यस्मात् आतोऽनुपसर्गे कः । अ० ३ । २ । ३ इति कप्रत्ययः[2] । उपपदमतिङ् । अ० २ । २ । १९ इति समासः[3] । (नः) अस्माकम् (सरस्वती) सरसः प्रशंसिता ज्ञानादयो गुणा विद्यन्ते यस्यां सा सर्वविद्याप्रापिका वाक् । सर्वधातुभ्योऽसुन् । उ० ४ । १८९ अनेन गत्यर्थात् सृधातोरसुन्प्रत्ययः । सरन्ति प्राप्नुवन्ति सर्वा विद्या येन तत्सरः । अस्मात् प्रशंसायां 'मतुप्' । सरस्वतीति वाङ्नामसु पठितम् । निघं० १ । ११ । (वाजेभिः) सर्वविद्याप्राप्तिनिमित्तैरन्नादिभिः सह । वाज इत्यन्ननामसु पठितम् । निघं० २ । ७ । (वाजिनीवती) सर्वविद्यासिद्धक्रियायुक्ता । वाजिन इति पदनामसु पठितम् । निघं० ५ । ६ अनेन [4]वाजिनः क्रियाप्राप्तिहेतवो व्यवहारास्तद्वती । वाजिनीति गमनार्था प्राप्त्यर्था च क्रिया गृह्यते । (यज्ञम्)

१. 'ऋदोरप्' (अ० ३ । ३ । ५७) इत्यप्प्राप्ते छान्दसत्वादत्र 'घञ्' द्रष्टव्यः ।

२. 'इति क प्रत्ययः' अयं पाठः क. कोश उपलभ्यते, आवश्यकश्च ।

३. पदकारा इमं पदं ण्वुच्प्रत्ययान्तं मत्वा नावगृह्णन्ति । यथात्वत्र व्याख्यानं तथावग्रहेण भाव्यम् । तथापि द्विधा निर्वचनसम्भवे 'संदेहान्नावग्रहः' इति नियमेन समासपक्षेऽप्यवग्रहो न भवति । स्वरस्तु 'थाथघञ्क्ताजबित्रकाणाम्' (६ । २ । १४४) इत्युत्तरपदान्तोदात्तः । अपरपक्षे पुनाते ण्वुंच् उपसंख्येयः, ण्वुलि वा उञ्छादित्वाद्यान्तोदात्तत्वं ज्ञेयम् ।

४. वै० प्र० मुद्रितेषु संस्करणेषु 'वाजिनः······तद्वती' इत्येतावानंशः 'सर्वविद्यासिद्धक्रियायुक्ता' इत्यस्मात् परमस्थाने पठ्यते । वाजिनः······तद्वती'=क्रिया प्राप्तिवती=वाजिनी, ततो मतुप् स्त्रियां ङीप् ।

**शिल्पविद्यामहिमानं कर्म च** । यज्ञो वै महिमा। श० ६।२।३।१८।[1] यज्ञो वै कर्म। श० १।१।२।१। ( **वष्टु** ) **कामसिद्धिप्रकाशिका भवतु**। ( **धियावसुः** ) **शुद्धकर्मणा सह वासप्रापिका**। तत्पुरुषे कृति बहुलम्। अ० ६।३।१४ **अनेन तृतीयातत्पुरुषे विभक्त्यलुक्**[2]। सायणाचार्य्यस्तु **बहुव्रीहिसमासमङ्गीकृत्य छान्दसोऽलुगिति प्रतिज्ञातवान्। अत एवैतद् भ्रान्त्या व्याख्यातवान्**[3] ॥

**इमामृचं निरुक्तकार एवं समाचष्टे**—पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्मवसुः। निरु० ११।२६। **अत्रान्नवतीति विशेषः** ॥ १० ॥

**अन्वयः**—**या** वाजेभिर्वाजिनीवती धियावसुः पावका सरस्वती **वागस्ति, सा**[नो]ऽस्माकं[4]यज्ञं **शिल्पविद्यामहिमानं कर्म च** वष्टु **तत्प्रकाशयित्री भवतु** ॥ १० ॥

**भावार्थः—ईश्वरोऽभिवदति—सर्वैर्मनुष्यैः सत्याभ्यां विद्याभाषणाभ्यां युक्ता क्रियाकुशला सर्वोपकारिणी स्वकीया वाणी सदैव सम्भावनीयेति** ॥ १० ॥

विद्वानों को किस प्रकार की वाणी की इच्छा करनी चाहिये, इस विषय को अगले मन्त्र में ईश्वर ने कहा है—

**पदार्थान्वयभाषा**—जो (वाजेभिः) सब विद्या की प्राप्ति के निमित्त अन्न आदि पदार्थ हैं, उनके साथ जो (वाजिनीवती) विद्या से सिद्ध की हुई क्रियाओं से युक्त, (धियावसुः) शुद्ध कर्म के साथ वास देने, और (पावका) पवित्र करनेवाले व्यवहारों को चितानेवाली, (सरस्वती) जिसमें प्रशंसा योग्य ज्ञान आदि गुण हों, ऐसी उत्तम सब विद्याओं की देनेवाली वाणी है, वह हम लोगों के (यज्ञम्) शिल्पविद्या के महिमा और कर्मरूप यज्ञ को (वष्टु) प्रकाश करनेवाली हो ॥१०॥

१. अध्यायानुसारं श० ६।३।१।१८॥

२. अस्य मन्त्रस्य माध्वभाष्यस्य भाष्यव्याख्याता जयतीर्थ आह—'तेन सहार्थे तृतीयायाः समासोऽलुक् च।

३. अस्यायमभिप्रायः—यद्यप्यस्मिन् सूत्रे सप्तम्या अधिकारस्तथापि सा नास्मिन् सूत्रे सम्बध्यते। तथा चोक्तम्—'मण्डूकप्लुतयोऽधिकाराः। यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः।······अथवैतज्ज्ञापयत्यनुवर्तन्ते च नाम विधयो न चानुवर्तनादेव भवन्ति। किं तर्हि ? यत्नाद् भवन्ति(महा० ५।२।४)'। एवं च सति सप्तम्या अधिकारेऽपि अत्र सम्बन्धाभावः। एवं च कृत्वा सर्वस्यालुक्प्रकरणस्योत्सर्गसूत्रमिदम्। अत एव महाभाष्यकृता 'बन्धे च विभाषा' (अ० ६।३।१३) इत्यत्र 'सर्वत्रैवोत्तरपदाधिकारे तत्पुरुषे कृति बहुलमिति प्राप्ते' इत्युक्तम। 'तत्पुरुषे कृति' (६।३।१४) इत्यस्य भाष्येऽप्युक्तम्—'अथ किमर्थं लुगलुगनुक्रमणं क्रियते, न तत्पुरुषे कृति बहुलमित्येव सिद्धम् ?····· उदाहरणभूयस्त्वात्। ते वै विधयः सुपरिगृहीता भवन्ति येषां लक्षणं प्रपञ्चश्च।'

इदं भाष्यवचनमाश्रित्यैव भगवता ग्रन्थकारेण सूत्रमिदमुपन्यस्तम्। सप्तम्या अनुवृत्तिमाश्रित्य सायणेन यच्छान्दसमलुगुक्तं तन्महाभाष्यविरोधात् प्रत्याख्यातम्। स्वरस्तु तृतीयासमासेऽपि 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमान०' (६।२।२) इत्यादिना सिद्ध एव।

४. वै० य० मुद्रितेषु संस्करणेषु 'यज्ञं' पदं 'कर्म च' इत्यस्मात् परमस्थाने पठ्यते।

**भावार्थ**—सब मनुष्यों को चाहिये कि वे ईश्वर की प्रार्थना और अपने पुरुषार्थ से सत्य विद्या और सत्यवचनयुक्त कामों में कुशल, और सब के उपकार करनेवाली वाणी को प्राप्त रहें, यह ईश्वर का उपदेश है ॥१०॥



पुनः सा कीदृशीत्युपदिश्यते—

चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥ ११ ॥

चोदयित्री । सूनृतानाम् । चेतन्ती । सुऽमतीनाम् ॥ यज्ञम् । दधे । सरस्वती ॥ ११ ॥

**पदार्थः**—(चोदयित्री) शुभगुणग्रहणप्रेरिका (सूनृतानाम्) सुतरामूनयत्यनृतं यत्कर्म तत् सून् तदृतं यथार्थं सत्यं येषां ते सूनृतास्तेषाम् । अत्र 'ऊन परिहाणे' अस्मात् क्विप् च [अ० ३ । २ । ७६] इति 'क्विप्' । (चेतन्ती) संपादयन्ती सती (सुमतीनाम्) शोभना मतिर्बुद्धिर्येषां ते सुमतयस्तेषां विदुषाम् (यज्ञम्) पूर्वोक्तम् । (दधे) दधाति । छन्दसि लुङ्लङ्लिटः । अ० ३।४।६ अनेन वर्त्तमाने लिट् । [1](सरस्वती) वाणी ॥ ११ ॥

**अन्वयः**—या सूनृतानां सुमतीनां विदुषां चेतन्ती चोदयित्री सरस्वत्यस्ति, सैव वेदविद्या-संस्कृता वाक् यज्ञं दधे दधाति ॥ ११ ॥

**भावार्थः**—या किलाप्तानां सत्यलक्षणा पूर्णविद्यायुक्ता छलादिदोषरहिता यथार्थवाणी वर्त्तते, सा मनुष्याणां सत्यज्ञानाय भवितुमर्हति नेतरेषामिति ॥ ११ ॥

ईश्वर ने [फिर] वह वाणी किस प्रकार की है, इस बात का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—जो (सूनृतानाम्) मिथ्या वचन के नाश करने, सत्यवचन और सत्य कर्म को सदा सेवन करने, (सुमतीनाम्) अत्यन्त उत्तम बुद्धि और विद्यावाले विद्वानों की (चेतन्ती) समझने तथा (चोदयित्री) शुभ गुणों के ग्रहण [की प्रेरणा] करनेहारी (सरस्वती) वाणी है, वही वेदविद्या से संस्कृत की हुई वाणी [(यज्ञम्)] यज्ञ आदि कर्म [को (दधे)] धारण करने-वाली होती है ॥११॥

**भावार्थ**—जो आप्त अर्थात् पूर्णविद्यायुक्त, और छल आदि दोषरहित विद्वान् मनुष्यों की सत्य उपदेश करनेवाली यथार्थ वाणी है, वही सब मनुष्यों के सत्य ज्ञान होने के लिये योग्य होती है, अविद्वानों का नहीं ॥ ११ ॥



पुनः सा कीदृशीत्युपदिश्यते—

महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति ॥ १२ ॥

१. इदं मन्त्रपदमेतस्य व्याख्यानं च क. कोशे समुपलभ्यते । लिपिकरप्रमादात् ख. कोशे नष्टम् ।

मुहः । अर्णः । सरस्वती । प्र । चेतयति । केतुना ॥ धियः । विश्वाः । वि । राजति ॥ १२ ॥

पदार्थः—( महः ) महत् । अत्र सर्वधातुभ्योऽसुन् [उ० ४ । १८९] इत्यसुन् प्रत्ययः । ( अर्णः ) जलार्णवमिव शब्दसमुद्रम् । उदके नुट् च । उ० ४ । १९७ अनेन सूत्रेणार्तेरसुन् प्रत्ययः । अर्ण इत्युदकनामसु पठितम् । निघं० १ । १२ । ( सरस्वती ) वाणी ( प्र ) प्रकृष्टार्थे (चेतयति) सम्यङ् ज्ञापयति (केतुना) शोभनकर्मणा[1] प्रज्ञया वा । केतुरिति प्रज्ञानामसु पठितम् । निघं० ३ । ९ । (धियः) मनुष्याणां धारणावतीर्बुद्धीः (विश्वाः) सर्वाः (वि) विशेषार्थे (राजति) प्रकाशयति । अत्रान्तर्भावितो ण्यर्थः ॥

निरुक्तकार एनं मन्त्रमेवं समाचष्टे—महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति, केतुना कर्मणा प्रज्ञया वेमानि च सर्वाणि प्रज्ञानान्यभिविराजति, वागर्थेषु विधीयते तस्मान्माध्यमिकां वाचं मन्यन्ते, वाग्व्याख्याता । निरु० ११ । २७ ॥ १२ ॥

अन्वयः—या सरस्वती केतुना [महो] महदर्णः खलु जलार्णवमिव शब्दसमुद्रं [प्रचेतयति] प्रकृष्टतया सम्यग् ज्ञापयति, सा मनुष्याणां[2] विश्वा धियो विराजति विविधतयोत्तमा बुद्धीः प्रकाशयति ॥ १२ ॥

अत्र वाचकोपमेयलुप्तोपमालङ्कारः[3] ।

भावार्थः—यथा वायुना चालितः सूर्य्येण प्रकाशितो जलरत्नोर्मिसहितो महान् समुद्रोऽनेकव्यवहाररत्नप्रदो वर्त्तते, तथैवास्याकाशस्थस्य वेदस्थस्य च महतः शब्दसमुद्रस्य प्रकाशहेतुर्वेदवाणी विदुषामुपदेशश्चेतरेषां मनुष्याणां यथार्थतया मेधाविज्ञानप्रदो भवतीति ॥ १२ ॥

सूक्तद्वयसंबन्धिनोऽर्थस्योपदेशानन्तरमनेन तृतीयसूक्तेन क्रियाहेतुविषयस्याश्विशब्दस्यार्थमुक्त्वा तत्सिद्धिकर्तॄणां विदुषां स्वरूपलक्षणमुक्त्वा विद्वद्भवनहेतुना सरस्वतीशब्देन सर्वविद्याप्राप्तिनिमित्तार्था वाक् प्रकाशितेति वेदितव्यम् । द्वितीयसूक्तोक्तानां वाय्विन्द्रादीनामर्थानां संबन्धे तृतीयसूक्तप्रतिपादितानामश्विविद्वत्सरस्वत्यर्थानामन्वयाद् द्वितीयसूक्तोक्तार्थेन सहास्य तृतीयसूक्तोक्तार्थस्य सङ्गतिरस्तीति बोध्यम् ।

अस्य सूक्तस्यार्थः सायणाचार्य्यादिभिरन्यथैव वर्णितः । तत्र प्रथमं तस्यायं भ्रमः—'द्विविधा हि सरस्वती विग्रहवद्देवता नदीरूपा च । तत्र पूर्वाभ्यामृग्भ्यां विग्रहवती प्रतिपादिता । अनया तु नदीरूपा प्रतिपाद्यते ।' इत्यनेन कपोलकल्पनयाऽयमर्थो लिखित इति बोध्यम् । एवमेव व्यर्था

---

१. निघण्टावपठितमपि 'केतुः' कर्म नाम । तथा चाह निरुक्तकारः—'केतुना कर्मणा' (११ । २७) इति । अत एव नामानुक्रमणीकारो माधवभट्टोऽपि—'कूटः सुकृत्या करणं केतुर्वयोधतं शची' इति कर्मनामसु पठितवान् । द्र०—वेङ्कटमाधवीयर्ग्वेदानुक्रमण्याः परिशिष्टे, पृष्ठ १४४, पं० ५६ । अत्र 'केतुः' स्थाने 'केरुः' अपपाठः ।

२. वै० य० मुद्रितेषु संस्करणेषु 'प्राणिनां' पाठः । क. ख. ग. कोशेषु 'मनुष्याणां' इत्येव साधुतरः पाठः । 'प्राणिनां' पाठेऽपि सामर्थ्याद् मनुष्या एव ग्राह्या भवन्ति, न प्राणिमात्रम् ।

३. क. ख. ग. कोशेष्वत्र 'वाचकोपमेयोपमानलुप्तालंकारः' इति पाठः ।

कल्पना'ऽध्यापकविलासनाख्यादीनामप्यस्ति । ये विद्यामप्राप्य व्याख्यातारो भवन्ति, तेषामन्धवत् प्रवृत्तिर्भवतीत्यत्र किमाश्चर्यम् ।।

इति प्रथमोऽनुवाकस्तृतीयं सूक्तं षष्ठश्च वर्गः समाप्तः ।।

ईश्वर ने फिर भी वह वाणी कैसी है, इस बात का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—जो (सरस्वती) वाणी (केतुना) शुभ कर्म अथवा श्रेष्ठ बुद्धि से (महः) अगाध (अर्णः) [जल के समुद्र के समान] शब्दरूपी समुद्र को (प्रचेतयति) [अच्छे प्रकार] जनानेवाली है, वही मनुष्यों की (विश्वाः) सब [(धियः)] बुद्धियों को [(विराजति)] विशेष करके प्रकाश करती है। १२ ।।

इस मन्त्र में वाचकोपमेयलुप्तोपमालंकार दिखलाया है।

**भावार्थ**—जैसे वायु से चालित और सूर्य से प्रकाशित, जल रत्न और तरंगों से युक्त महान् समुद्र बहुत उत्तम व्यवहार और रत्नादि की प्राप्ति करानेवाला होता है, वैसे ही जो आकाश और वेद के शब्दरूपी महासागर को प्रकाशित करनेवाली वेदवाणी और विद्वानों का उपदेश है, वही साधारण मनुष्यों की यथार्थ रूप से बुद्धि और ज्ञान का बढ़ानेवाला होता है ।। १२ ।।

दो सूक्तों की विद्या का प्रकाश करके इस तृतीय सूक्त से क्रियाओं का हेतु अश्विशब्द का अर्थ, और उसके सिद्ध करनेवाले विद्वानों का [स्वरूप और] लक्षण कहकर विद्वान् होने का हेतु, सरस्वती शब्द से सब विद्याप्राप्ति के निमित्त वाणी का प्रकाश किया है, ऐसा जानना चाहिये। [दूसरे सूक्त में कहे गये वायु, इन्द्र आदि के अर्थों के सम्बन्ध में तृतीयसूक्त प्रतिपादित अश्वि, विद्वान् और सरस्वती आदि के अर्थों का अन्वय होने के कारण] दूसरे सूक्त के अर्थ के साथ तीसरे सूक्त के अर्थ की संगति समझनी चाहिये।।

इस सूक्त का अर्थ **सायणाचार्य** आदि नवीन पण्डितों ने अशुद्ध वर्णन किया है। इनके व्याख्यानों में पहिले सायणाचार्य का भ्रम दिखलाते हैं। उन्होंने सरस्वती के दो अर्थ माने हैं। एक अर्थ से देहवाली देवतारूप और दूसरे से नदीरूपी सरस्वती मानी है। तथा उनने यह भी कहा है कि—'इस सूक्त में पहिले दो मन्त्रों से शरीरवाली देवतारूप सरस्वती का प्रतिपादन किया है, और अब इस मन्त्र से नदीरूप सरस्वती का वर्णन करते हैं'। यह अर्थ उन्होंने अपनी कपोल-कल्पना से विपरीत लिखा है। इसी प्रकार अध्यापक **विलसन** आदि की भी व्यर्थ कल्पना जाननी चाहिये। क्योंकि जो मनुष्य विद्या के विना किसी ग्रन्थ की व्याख्या करने को प्रवृत्त होते हैं, उनकी प्रवृत्ति अन्धों के समान होती है ।।

[यह] प्रथम अनुवाक, तीसरा सूक्त और छठा वर्ग समाप्त हुआ ।।



१. 'ऽध्यापकविलसनाख्यस्य वेदार्थयत्नकर्तुश्चास्ति' इति क. कोशे पाठः।

अथास्य दशर्चस्य चतुर्थसूक्तस्य मधुच्छन्दा ऋषिः । इन्द्रो देवता । १, २, ४—६ गायत्री; ३ विराड्गायत्री; १० निचृद्गायत्री च छन्दः । षड्जः स्वरः ॥

तत्र[1] प्रथममन्त्रेणोक्तविद्याप्रपूर्त्यर्थमिदमुपदिश्यते—

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि ॥ १ ॥

सुरूपऽकृत्नुम् । ऊतये । सुदुघाम्ऽइव । गोऽदुहे ॥ जुहूमसि । द्यविऽद्यवि ॥ १ ॥

**पदार्थः**—(सुरूपकृत्नुम्) य इन्द्रः सूर्यः सर्वान् पदार्थान् स्वप्रकाशेन स्वरूपान् करोतीति तम् । कृहनिभ्यां क्त्नुः । उ० ३ । ३० अनेन क्त्नुप्रत्ययः, उपपदसमासः । इन्द्रो दिव इन्द्र ईशे पृथिव्याः[2], नेन्द्रादृते पवते धाम किञ्चन[3] । निरु० ७ । २ ।[4] अहमिन्द्रः परमेश्वरः सूर्यं पृथिवीं च ईशे रचितवानस्मीति तेनोपदिश्यते । तस्मादिन्द्राद्विना किञ्चिदपि धाम न पवते न पवित्रं भवति । (ऊतये) विद्याप्राप्तये । अवधातोः प्रयोगः, ऊतियूति० । अ० ३ । ३ । ९७ अस्मिन् सूत्रे निपातितः । (सुदुघामिव) यथा कश्चिन्मनुष्यो बहुदुग्धदात्र्या गोः पयो दुग्ध्वा स्वाभीष्टं प्रपूरयति तथा । दुहः कप् घश्च । अ० ३ । २ । ७० इतिसुपूर्वाद् दुहधातोः कप्प्रत्ययो घादेशश्च । (गोदुहे) गोर्दोग्ध्रे दुग्धादिकमिच्छवे मनुष्याय । सत्सूद्विष० । अ० ३ । २ । ६१ इति सूत्रेण क्विप्प्रत्ययः । (जुहूमसि) स्तुमः । बहुलं छन्दसि । अ० २ । ४ । ७६ अनेन शपः स्थाने श्लुः । अभ्यस्तस्य च । अ० ६ । १ । ३३ अनेन संप्रसारणम् । सम्प्रसारणाच्च । अ० ६ । १ । १०४ अनेन पूर्वरूपम् । हलः । अ० ६ । ४ । २ इति दीर्घः । इदन्तो मसिः । अ० ७ । १ । ४६ अनेन मसेरिकारागमः । (द्यविद्यवि) दिने दिने । नित्यवीप्सयोः । अ० ८ । १ । ४ अनेन द्वित्वम् । द्यविद्यवीत्यहर्नामसु पठितम् । निघं० १ । ९ ॥१॥

**अन्वयः**—गोदुहे दुग्धादिकमिच्छवे मनुष्याय [सुदुघामिव] दोहनसुलभां गामिव वयं द्यविद्यवि प्रतिदिनं सविधानां स्वेषामूतये विद्याप्राप्तये सुरूपकृत्नुमिन्द्रं परमेश्वरं जुहूमसि स्तुमः ॥ १ ॥

**अत्रोपमालङ्कारः ।**

**भावार्थः**—यथा मनुष्या गोर्दुग्धं प्राप्य स्वप्रयोजनानि साधयन्ति, तथैव धार्मिका विद्वांसः परमेश्वरोपासनया श्रेष्ठविद्यादिगुणान् प्राप्य स्वकार्य्याणि प्रपूरयन्तीति ॥ १ ॥

अब चौथे सूक्त का आरम्भ करते हैं । ईश्वर ने इस सूक्त के पहिले मन्त्र में उक्त विद्याओं के परिपूर्ण करनेवाले साधन का प्रकाश किया है—

**पदार्थान्वयभाषा**—जैसे [(गोदुहे)] दूध [आदि] की इच्छा करनेवाला मनुष्य [(सुदुघामिव)]

---

१. इतः पूर्वं क. कोशे 'इदानीं सूक्तत्रयेणोक्तविद्या-प्रतिपादनानन्तरं तत्सम्बन्धी तत्सहायकारी चेन्द्र-शब्दार्थोऽनेन सूक्तेनोच्यते' इत्यधिकः पाठः । २. ऋ० १०।८९।१० ॥

३. ऋ० ९।६९।६ ॥ ४. अङ्कमात्रनिर्देशान्निरुक्तस्योल्लेखोऽनावश्यकः ।

दूध दोहने के लिये सुलभ दुहानेवाली गौओं को दोहके अपनी कामनाओं को पूर्ण कर लेता है, वैसे हम लोग (द्यविद्यवि) सब दिन अपने निकटस्थित मनुष्यों को (ऊतये) विद्या की प्राप्ति के लिये (सुरूपकृत्नुम्) [इन्द्र=] परमेश्वर, जो कि अपने प्रकाश से सब पदार्थों को उत्तम रूपयुक्त करनेवाला है, उसकी (जुहूमसि) स्तुति करते हैं ॥ १ ॥

इस मन्त्र में उपमालङ्कार है।

**भावार्थ**—जैसे मनुष्य गाय के दूध को प्राप्त होके अपने प्रयोजन को सिद्ध करते हैं, वैसे ही विद्वान् धार्मिक पुरुष भी परमेश्वर की उपासना से श्रेष्ठ विद्या आदि गुणों को प्राप्त होकर अपने-अपने कार्य्यों को पूर्ण करते हैं ॥ १ ॥



अथेन्द्रशब्देन[1] सूर्य्य उपदिश्यते—

उप॑ नः॒ सव॒नाग॑हि॒ सोम॑स्य सोमपाः पिब। गो॒दा इद्रे॒वतो॒ मदः॑ ॥ २ ॥

उप॑। नः॒। सव॑ना। आ। ग॒हि॒। सोम॑स्य। सो॒म॒ऽपाः॒। पि॒ब॒ ॥ गो॒ऽदाः। इत्। रे॒वतः॑। मदः॑ ॥२॥

**पदार्थः**—( उप ) सामीप्ये ( नः ) अस्माकम् ( सवना ) ऐश्वर्य्ययुक्तानि वस्तूनि प्रकाशयितुम्। षु प्रसवैश्वर्य्ययोः इत्यस्माद्धातो र्ल्युट् [च]। अ० ३। ३। ११५ [इति ल्युट्] प्रत्ययः[2]। शेश्छन्दसि बहुलम् [अ० ६। १। ६८] इति शलुक्। ( आगहि ) आगच्छति। बहुलं छन्दसि। अ० २। ४। ७३ अनेन[3] शपो लुकि सति वाच्छन्दसि [अ० ३। ४। ८८] इति हेरपित्वाद्, अनुदात्तोपदेश०। अ० ६। ४। ३७ इत्यनुनासिकलोपः, लडर्थे लोट् च। ( सोमस्य ) उत्पन्नस्य कार्य्यभूतस्य जगतो मध्ये ( सोमपाः ) सर्वपदार्थरक्षकः सन् ( पिब ) पिबति। अत्र व्यत्ययः[4], लडर्थे लोट् च। ( गोदाः ) चक्षुरिन्द्रियव्यवहारप्रदः। क्विप् च [अ० ३। २। ७६] इति क्विप् प्रत्ययः। गौरिति पदनामसु पठितम्। निघं ५। ५। जीवो येन रूपं जानाति तस्माच्चक्षुर्गौः। ( इत् ) एव ( रेवतः ) पदार्थप्राप्तिमतो जीवस्य। छन्दसीरः [अ० ८। २। १५] इति वत्वम्। ( मदः ) हर्षकरः ॥ २ ॥

**अन्वयः**—यतोऽयं सोमपा गोदा इन्द्रः सूर्य्यः सोमस्य जगतो मध्ये स्वकिरणैः सवना सवनानि प्रकाशयितुमुपागहि उपागच्छति, तस्माद् [इत्] एव नोऽस्माकं रेवतः पुरुषार्थिनो जीवस्य च मदो[5] हर्षकरो भवति ॥ २ ॥

**भावार्थः**—[यथा] सूर्य्यस्य प्रकाशे सर्वे जीवाः स्वस्य स्वस्य कर्मानुष्ठानाय विशेषतः प्रवर्त्तन्ते, नैवं रात्रौ कश्चित्सुखतः कार्य्याणि कर्त्तुं शक्नोतीति ॥ २ ॥

---

१. मन्त्रे साक्षादपठितोऽपि सूक्तस्यैन्द्रत्वादिह निविष्टः।

२. 'प्रत्ययः' पदं वै०य० मुद्रितेषु संस्करणेषु सूत्रसंख्यातः पूर्वं पठ्यते।

३. अयं पाठः क. कोशे उपलभ्यते।

४. पुरुषस्येति शेषः।

५. क कोशे पदमिदमुपलभ्यते।

अगले मन्त्र में ईश्वर ने इन्द्र[1] शब्द से सूर्य के गुणों का वर्णन किया है—

**पदार्थान्वयभाषा**—[जिस लिये यह] (सोमपाः) सब पदार्थों का रक्षक, और (गोदाः) नेत्र के व्यवहार को देनेवाला सूर्य्य अपने प्रकाश से (सोमस्य) उत्पन्न हुए कार्य्यरूप जगत् में (सवना) ऐश्वर्य्ययुक्त पदार्थों के प्रकाश करने को अपनी किरणों द्वारा ([उप] आगहि) समीप आता है, इसी से [(इत्) ही] यह (नः) हम लोगों तथा (रेवतः) पुरुषार्थ से अच्छे-अच्छे पदार्थों को प्राप्त होनेवाले पुरुषों को (मदः) आनन्द बढ़ानेवाला होता है ॥ २ ॥

**भावार्थ**—जिस प्रकार सब जीव सूर्य्य के प्रकाश में अपने-अपने कर्म करने को [विशेष रूप से] प्रवृत्त होते हैं, उस प्रकार [कोई] रात्रि में सुख से [कार्य] नहीं कर सकता ॥ २ ॥



येनायं सूर्य्यो रचितस्तं कथं जानीमेत्युपदिश्यते—

अथा ते अन्तमानां विद्याम सुमतीनाम् । मा नो अति ख्य आगहि ॥ ३ ॥

अथ । ते । अन्तमानाम् । विद्याम । सुऽमतीनाम् ॥ मा । नः । अति । ख्यः । आ । गहि ॥ ३ ॥

**पदार्थः**—(अथ) अनन्तरार्थे। निपातस्य च [अ० ६ । ३ । १३५] इति दीर्घः । (ते) तव (अन्तमानाम्) अन्तः सामीप्यमेषामस्ति तेऽन्तिकाः,[2] अतिशयेनान्तिका अन्तमास्तत्समागमेन । अत्रान्तिकशब्दात्तमपि कृते पृषोदरादित्वात्[3] तिकलोपः । अन्तमानामित्यन्तिकनामसु पठितम् । निघं० २ । १६ । (विद्याम) जानीयाम (सुमतीनाम्) वेदादिशास्त्रे परोपकारे धर्माचरणे च श्रेष्ठा 'मतिर्येषां मनुष्याणाम् तेषाम्[4]। (मा) निषेधार्थे (नः) अस्मान् (अतिख्यः) उपदेशोल्लङ्घनं मा कुर्याः (आगहि) आगच्छ ॥ ३ ॥

**अन्वयः**—हे परमैश्वर्य्यवन्निन्द्र परमेश्वर ! वयं ते तवान्तमानामर्थात्त्वां ज्ञात्वा त्वन्निकटे त्वदाज्ञायां च स्थितानां सुमतीनामाप्तानां विदुषां समागमेन त्वां [विद्याम] विजानीयाम । त्वन्नोऽस्माना[गह्या]गच्छास्मदात्मनि प्रकाशितो भव । अथान्तर्यामितया स्थितः सन् सत्यमुपदेशं मातिख्यः कदाचिदस्योल्लङ्घनं मा कुर्य्याः ॥ ३ ॥

---

१. मन्त्र में साक्षात् इन्द्र का पाठ न होने पर भी सूक्त का इन्द्र देवता होने से यहां इन्द्र का निर्देश किया है।

२. अत इनिठनौ (अ० ५।२।११५) इति ठन्, ठस्येकः (अ० ७।३।५०) इतीकादेशः ।

३. पृषोदरादीनि यथोपदिष्टम् (अ० ६।३।१०८) इत्यनेनेत्यभिप्रायः । तमे तादेश्च (महा० ६।४।१४९) इति वार्तिकं त्वस्यैव प्रपञ्चः ।

४. मतिः, मनीषा, जूतिः, स्मृतिः, संकल्पः, क्रतुः, असुः, कामः, वश इति सर्वाण्येतानि प्रज्ञानस्य नामधेयानि भवन्ति । ऐ० आर० २।६।१ ॥

५. पदमिदं क. कोशे दृश्यते । इतोऽग्रे वै० य० मुद्रितेषु संस्करणेषु 'मतय इति मनुष्यनामसु पठितम् । निघं० २।३' इत्युपलभ्यते । तस्यात्रासंबद्धत्वात् मनुष्यनामसु 'मतयः' पदस्यापठितत्वात् क. ख. कोशयोरनुपलम्भाच्चास्माभिः पृथक् कृतः ।

**भावार्थः**—यदा मनुष्या धार्मिकाणां विद्वत्तमानां सकाशाच्छिक्षाविद्ये प्राप्नुवन्ति, तदा[1] पृथिवीमारभ्य परमेश्वरपर्य्यन्तान् पदार्थान् विदित्वा सुखिनो भूत्वा पुनस्ते नैव कदाचिदन्तर्यामीश्वरोपदेशं विहायेतस्ततो भ्रमन्तीति ॥ ३ ॥

जिसने सूर्य्य को बनाया है, उस परमेश्वर को जानने का उपाय अगले मन्त्र में जनाया है—

**पदार्थान्वयभाषा**—हे परम ऐश्वर्य्ययुक्त परमेश्वर ! (ते) आपके (अन्तमानाम्) निकट अर्थात् आपको जानकर आपके समीप तथा आपकी आज्ञा में रहनेवाले विद्वान् लोग, (सुमतीनाम्) जिन्होंको वेदादिशास्त्र और परोपकाररूपी धर्म करने में श्रेष्ठ बुद्धि हो रही है उनके समागम से हम लोग आपको (विद्याम) जान सकते हैं। और आप (नः) हमको (आगहि) प्राप्त अर्थात् हमारे आत्माओं में प्रकाशित हूजिये। और (अथ) इसके अनन्तर कृपा करके अन्तर्यामिरूप से हमारे आत्माओं में स्थित हुए सत्य उपदेश को ( मातिख्यः ) मत रोकिये, किन्तु उसकी प्रेरणा सदा किया कीजिये ॥३॥

**भावार्थ**—जब मनुष्य लोग इन धार्मिक श्रेष्ठ विद्वानों के समागम से शिक्षा और विद्या को प्राप्त होते हैं, तभी पृथिवी से लेकर परमेश्वरपर्य्यन्त पदार्थों के ज्ञान द्वारा नाना प्रकार से सुखी होके फिर वे अन्तर्यामी ईश्वर के उपदेश को छोड़कर कभी इधर-उधर नहीं भ्रमते ॥ ३ ॥



**तत्समीपे स्थित्वा मनुष्येण किं कर्त्तव्यम्, ते च तान् प्रति किं कुर्य्युरित्युपदिश्यते—**

**परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् । यस्ते सखिभ्य आ वरम् ॥ ४ ॥**

परा । इहि । विप्रम् । अस्तृतम् । इन्द्रम् । पृच्छ । विपःऽचितम् ॥ यः । ते । सखिऽभ्यः । आ । वरम् । ४ ॥

**पदार्थः**—( परा ) पृथक् ( इहि ) भव ( विप्रम् ) मेधाविनम् । वेर्प्रो वक्तव्यः [महा० ५ । ४ । ११९ वा०] इति वे परस्या नासिकायाः[2] स्थाने 'प्रः' समासान्तादेशः । उपसर्गाच्च । अ० ५ । ४ । ११९ इति सूत्रस्योपरि वार्तिकम् । विप्र इति मेधाविनामसु पठितम् । निघं० ३।१५। (अस्तृतम्) अहिंसकम् (इन्द्रम्) विद्यया परमैश्वर्य्ययुक्तं मनुष्यम् (पृच्छ) संदेहान् पृष्ट्वोत्तराणि गृहाण । द्व्यचोऽतस्तिङः । अ० ६ । ३ । १३४ इति दीर्घः । (विपश्चितम्) विद्वांसं, य आप्तः सन्नुपदिशति । विपश्चिदिति मेधाविनामसु पठितम् । निघं० ३ । १५ । पुनरुक्तयाऽऽप्तत्वादिगुणवत्त्वं गृह्यते । [ (यः) ][3] (ते) तुभ्यम् (सखिभ्यः) मित्रस्वभावेभ्यः (आ) समन्तात् (वरम्) परमोत्तमं विज्ञानधनम् ॥ ४ ॥

---

१. इतोऽग्रे वै० य० मुद्रितेषु संस्करणेषु 'नैव' पदं पठ्यते । तच्चास्थान इति कृत्वाऽग्रे यथास्थानं नीतः । क. कोशे तु यथास्थानमेव पठ्यते ।

२. वै० य० मुद्रिते चतुर्थसंस्करणे 'परस्यादेनासिकायाः' इत्यपपाठः । पूर्वसंस्करणेषु शुद्धः पाठ उपलभ्यते ।  ३. लिपिकरमुद्रणदोषाभ्यां नोपलभ्यते ।

अन्वयः—हे विद्यां चिकीर्षो मनुष्य ! यो विद्वान् तुभ्यं [ते तव] सखिभ्यो मित्रशीलेभ्यश्च आ समन्ताद् वरं विज्ञानं ददाति, तं विप्रमस्तृतमिन्द्रं विपश्चितमुपगम्य सन्देहान् पृच्छ । यथार्थतया तदुपदिष्टान्युत्तराणि गृहीत्वाऽन्येभ्यस्त्वमपि वद । यो ह्यविद्वान् ईर्ष्यकः कपटी स्वार्थी मनुष्योऽस्ति, तस्मात् सर्वदा परेहि ॥ ४ ॥

भावार्थः—सर्वेषां मनुष्याणामियं योग्यतास्ति—पूर्वं परोपकारिणं पण्डितं ब्रह्मनिष्ठं श्रोत्रियं पुरुषं विज्ञाय तेनैव सह प्रश्नोत्तरविधानेन सर्वाः शङ्का निवारणीयाः । किन्तु ये विद्याहीनाः सन्ति, नैव केनापि तत्सङ्गकथनोत्तरविश्वासः कर्तव्य इति ॥ ४ ॥

मनुष्य लोग विद्वानों के समीप जाकर क्या करें, और वे इनके साथ कैसे वर्तें, इस विषय का उपदेश ईश्वर ने अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे विद्या की अपेक्षा करनेवाले मनुष्य ! [(यः)] जो विद्वान् तुझ और (ते) तेरे (सखिभ्यः) मित्रों के लिये (आवरम्) श्रेष्ठ विज्ञान को देता हो, उस (विप्रम्) श्रेष्ठ बुद्धिमान्, (अस्तृतम्) हिंसा आदि अधर्मरहित, (इन्द्रम्) विद्या [से] परमैश्वर्ययुक्त, (विपश्चितम्) यथार्थ सत्य कहनेवाले मनुष्य के समीप जाकर, उस विद्वान् से अपने सन्देह (पृच्छ) पूछ, और फिर उनके कहे यथार्थ उत्तरों को ग्रहण करके औरों के लिये तू भी उपदेश कर । परन्तु जो मनुष्य अविद्वान् अर्थात् मूर्ख. ईर्ष्या करने वा कपट और स्वार्थ में संयुक्त हो, उससे तू (परेहि) सदा दूर रह ॥ ४ ॥

**भावार्थ**—सब मनुष्यों को यही योग्य है कि प्रथम सत्य का उपदेश करनेहारे, वेद पढ़े हुए, और परमेश्वर की उपासना करनेवाले विद्वानों को प्राप्त होकर अच्छी प्रकार उनके साथ प्रश्नोत्तर की रीति से अपनी सब शङ्का निवृत्त करें । किन्तु विद्याहीन मूर्ख मनुष्य का सङ्ग, वा उनके दिये हुए उत्तरों में विश्वास कभी न करें ॥ ४ ॥



पुनः स एवार्थ उपदिश्यते —

उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत । दधाना इन्द्र इद्दुवः ॥ ५ ॥

उत । ब्रुवन्तु । नः । निदः । निः । अन्यतः । चित् । आरत ॥ दधानाः । इन्द्रे । इत् । दुवः ॥५॥

**पदार्थः**—(उत) अप्येव (ब्रुवन्तु) सर्वा विद्या उपदिशन्तु (नः) अस्मभ्यम् (निदः) निन्दितारः । 'णिदि कुत्सायाम्' अस्मात् क्विप्, छान्दसो वर्णलोपो वा [महा० ८ । २ । २५] इति नलोपः । (निः) नितराम् (अन्यतः) देशात् (चित्) अन्ये (आरत) गच्छन्तु । व्यवहिताश्च [अ० १ । ४ । ८१] इत्युपसर्गव्यवधानम्[1] । अत्र व्यत्ययः । (दधानाः) धारयितारः (इन्द्रे) परमैश्वर्ययुक्ते परमेश्वरे (इत्) इतः । इयते प्राप्यते सोऽयमिद् देशः । अत्र कर्मणि क्विप् । ततः सुपां सुलुक्० [अ० ७ । १ । ३९] इति ङसेर्लुक् । (दुवः) परिचर्यायाम् ॥ ५ ॥

---

१. पूर्वपठितो 'निर्' उपसर्गः' क्रिययेह व्यवहित इति भावः ।

**अन्वयः**—य इन्द्रे परमेश्वरे दुवः परिचर्यां दधानाः सर्वासु विद्यासु धर्मे पुरुषार्थे च वर्त्तमानाः सन्ति, त उतैव नोऽस्मभ्यं सर्वा विद्या ब्रुवन्तूपदिशन्तु। ये चिदन्ये नास्तिका निदो निन्दितारोऽविद्वांसो धूर्ताः सन्ति, ते सर्वे [इद्] इतो देशावस्मन्निवासान्निरारत दूरे गच्छन्तु, उतान्यतो देशादपि निःसरन्तु। अर्थादधार्मिकाः पुरुषाः क्वापि मा तिष्ठेयुरिति ॥ ५ ॥

**भावार्थः**—सर्वैर्मनुष्यैराप्तविद्वत्सङ्गेन मूर्खसङ्गत्यागेनेत्थं पुरुषार्थः कर्त्तव्यो, यतः सर्वत्र विद्यावृद्धिरविद्याहानिश्च, मान्यानां सत्कारो दुष्टानां ताडनं चेश्वरोपासना पापिनां निवृत्तिर्धार्मिकाणां वृद्धिश्च नित्यं भवेदिति[1] ॥ ५ ॥

इति सप्तमो वर्गः समाप्तः ॥

ईश्वर ने फिर भी इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—जो कि [(इन्द्रे)] परमेश्वर की (दुवः) सेवा को [(दधानाः)] धारण किये हुए, सब विद्या धर्म और पुरुषार्थ में वर्त्तमान हैं, वे (उत) ही (नः) हम लोगों के लिये सब विद्याओं का [(ब्रुवन्तु)]उपदेश करें।(चित्)और जो कि नास्तिक (निदः) निन्दक वा धूर्त मनुष्य हैं, वे सब [(इत्)] हम लोगों के निवासस्थान से (निरारत) दूर चले जावें। किन्तु निश्चय करके [(अन्यतः)] और देशों से भी दूर हो जायं, अर्थात् अधर्मी पुरुष किसी देश में न रहें ॥५॥

**भावार्थ**—सब मनुष्यों को उचित है कि आप्त धार्मिक विद्वानों का सङ्ग कर, और मूर्खों के सङ्ग को सर्वथा छोड़के, ऐसा पुरुषार्थ करना चाहिये कि जिससे सर्वत्र विद्या की वृद्धि, अविद्या की हानि, मानने योग्य श्रेष्ठपुरुषों का सत्कार, दुष्टों को दण्ड, ईश्वर की उपासना आदि शुभ कर्मों की वृद्धि और अशुभ कर्मों का विनाश नित्य होता रहे ॥ ५ ॥

यह सातवां वर्ग समाप्त हुआ ॥



मनुष्यैः कीदृशं शीलं धार्य्यमित्युपदिश्यते—

**उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः। स्यामेदिन्द्रस्य शर्मणि ॥ ६ ॥**

उत। नः। सुऽभगान्। अरिः। वोचेयुः। दस्म। कृष्टयः ॥ स्याम। इत्। इन्द्रस्य। शर्मणि ॥६॥

**पदार्थः**—(उत) अपि (नः) अस्मान् (सुभगान्) शोभनो भगो विद्यैश्वर्य्ययोगो येषां, तान्। भग इति धननामसु पठितम्। निघं० २। १०। (अरिः) शत्रुः (वोचेयुः) सम्प्रीत्या सर्वा विद्याः सर्वान् प्रत्युपदिश्यासुः। वचेराशिषि लिङि प्रथमस्य बहुवचने लिङ्याशिष्यङ्। अ० ३। १। ८६ अनेन विकरणस्थान्यङ् प्रत्ययः। वच उम्। अ० ७। ४। २० अनेनोमागमः।

१. एतन्मन्त्रस्य पाश्चात्यैर्विविधैः पण्डितैर्येऽर्था निर्दिष्टास्तदर्थम् 'ऋग्वेदादिभाष्यभूमिका-परिशिष्ट' नाम्नि संग्रहे २३-२४ पृष्ठे द्रष्टव्ये। तथा 'ऋ० द० स० के पत्र और विज्ञापन' नाम्नि संग्रहेऽपि-५७-५८ पृष्ठे (सं० २) अवलोकनीये।

(दस्म) दुष्टस्वभावोपक्षेतः ! 'दसु उपक्षये' इत्यस्मात् इषियुधीन्धिदसि०। उ० १। १४४ अनेन मक् प्रत्ययः। (कृष्टयः) मनुष्याः। कृष्टय इति मनुष्यनामसु पठितम्। निघं० २। ३। (स्याम) भवेम (इत्) एव (इन्द्रस्य) परमेश्वरस्य (शर्मणि) नित्यसुखे। शर्मेति 'सुखनामसु पठितम्। निघं० ३। ६॥ ६॥

अन्वयः—हे दस्म 'दुष्टस्वभावोपक्षेतर्जगदीश्वर ! वयं तवेन्द्रस्य शर्म्मणि खल्वाज्ञापालनाख्यव्यवहारे [इदेव] नित्यं प्रवृत्ताः स्याम। इमे कृष्टयः सर्वे मनुष्याः सर्वान् प्रति सर्वा विद्या वोचेयुरुपदिश्यासुः, यतः सत्योपदेशप्राप्तान्नोस्मानरिरुत शत्रुरपि सुभगान् जानीयाद् वदेच्च ॥६॥

भावार्थः—यदा सर्वे मनुष्या विरोधं विहाय सर्वोपकारकरणे प्रयतन्ते, तदा शत्रवोऽप्यविरोधिनो भवन्ति। यतः[3] सर्वान् मनुष्यानीश्वरानुग्रहनित्यानन्दौ प्राप्नुतः[4] ॥ ६ ॥

अब मनुष्यों को कैसा स्वभाव धारण करना चाहिये, इस विषय का उपदेश ईश्वर ने अगले मन्त्र में किया है—

पदार्थान्वयभाषा—हे (दस्म) दुष्ट स्वभाव को नष्ट करनेवाले परमेश्वर ! हम लोग (इन्द्रस्य) आपके दिये हुए (शर्मणि) नित्य सुख वा आज्ञा पालने में [(इत्) ही नित्य] प्रवृत्त [(स्याम)] हों। और ये (कृष्टयः) सब मनुष्य लोग प्रीति के साथ सब मनुष्यों के लिये सब विद्याओं को (वोचेयुः) उपदेश करें। जिससे सत्य के उपदेश को प्राप्त हुए (नः) हम लोगों को (अरिः, उत) शत्रु भी (सुभगान्) श्रेष्ठ विद्या ऐश्वर्ययुक्त जाने वा कहे ॥ ६ ॥

भावार्थ—जब सब मनुष्य विरोध को छोड़कर सबके उपकार करने में प्रयत्न करते हैं, तब शत्रु भी मित्र हो जाते हैं। जिससे सब मनुष्यों को ईश्वर की कृपा वा निरन्तर उत्तम आनन्द प्राप्त होते हैं ॥ ६ ॥



किमर्थः स इन्द्रः प्रार्थनीय इत्युपदिश्यते—

एमाशुमाशवे भर यज्ञश्रियं नृमादनम्। पतयन्मन्दयत्सखम् ॥ ७ ॥

आ। ईम्। आशुम्। आशवे। भर। यज्ञऽश्रियम्। नृऽमादनम् ॥ पतयत्। मन्दयत्ऽसखम् ॥७॥

पदार्थः—(आ) अभितः (ईम्) जलं पृथिवीं च। ईमिति जलनामसु पठितम्। निघं० १। १२। पदनामसु च। निघं० ४। २। (आशुम्) वेगादिगुणवन्तमग्निवाय्वादिपदार्थसमूहम्।

१. वै० य० मुद्रितेषु संस्करणेषु 'पदनामसु पठितम्। निघं० ५।५।' इत्यपपाठः। प्रकृतेऽनन्वयात् पदनामसु ५। ५ चापाठात्।

२. वै० य० मुद्रितेषु संस्करणेषु 'हे दस्मोपक्षयरहितर्जगदीश्वर' (सं० १-२); 'रहित जगदीश्वर' (सं० ३-४) पाठ उपलभ्यते। अयं पदार्थविरोधात् अर्थस्यानन्वयाच्चापपाठः।

३. अत्र 'ततः' इति समीचीनः पाठः स्यात्।

४. द्रष्टव्याऽत्र पूर्वमन्त्रस्या टिप्पणी (पृष्ठ ४६८ टि० १)।

[1]आशुरित्यश्वनामसु पठितम् । निघं० १ । १४ । कृवापा० । उ० १ । १ **अनेनाशूङ्धातोरुण् प्रत्ययः । (आशवे) यानेषु सर्वानन्दस्य वेगादिगुणानां च व्याप्तये (भर) सम्यग्धारय प्रदेहि (यज्ञश्रियम्) चक्रवर्त्तिराज्यादेर्महिम्नः श्रीर्लक्ष्मीः** शोभा । राष्ट्रं वा अश्वमेधः । श० १३ । १ । ६ । ३[2] **अनेन यज्ञशब्दाद्राष्ट्रं** गृह्यते । यज्ञो वै महिमा । श० ६ । २ । ३ । १८ ।[3] **(नृमादनम्) माद्यन्ते हर्ष्यन्तेऽनेन तन्मादनं** नृणां मादनं नृमादनम् (पतयत्) **यत्पतिं करोतीति पतित्वसंपादकं तत्** । तत् करोति तदाचष्टे [महा० ३ । १ । २६ वा०] **इति पतिशब्दाण्णिच्** । **(मन्दयत्सखम्) मन्दयन्तो विद्याज्ञापकाः सखायो यस्मिंस्तत्** ।। ७ ।।

**अन्वयः—हे इन्द्र परमेश्वर !** [4]**त्वं स्वकृपयाऽस्मदर्थमाशव** आशुं यज्ञश्रियम् [ईं] नृमादनं पतयत्**स्वामित्वसम्पादकं** मन्दयत्सुखं विज्ञानादिधनम् [आ] भर **देहि** ।। ७ ।।

**भावार्थः—ईश्वरः पुरुषार्थिनो मनुष्यस्योपरि कृपां दधाति नालसस्य । कुतः, यावन्मनुष्यः स्वयं पूर्णं पुरुषार्थं न करोति, नैव तावदीश्वरकृपाप्राप्तान् पदार्थान् रक्षितुमपि समर्थो भवति । अतो मनुष्यैः पुरुषार्थवद्भिर्भूत्वेश्वरकृपेष्टव्येति** ।। ७ ।।

[वह इन्द्र=] परमेश्वर प्रार्थना करने योग्य क्यों है, यह विषय अगले मन्त्र में प्रकाशित किया है—

**पदार्थान्वयभाषा**—हे इन्द्र परमेश्वर ! आप अपनी कृपा करके हम लोगों के अर्थ (आशवे) यानों में सब सुख वा वेगादि गुणों की शीघ्र व्याप्ति के लिये, (आशुम्) वेग आदि गुणवाले अग्नि वायु आदि पदार्थ, (यज्ञश्रियम्) चक्रवर्त्ति राज्य के महिमा की शोभा, (ईम्) जल और पृथिवी आदि, (नृमादनम्) जो कि मनुष्यों को अत्यन्त आनन्द देनेवाले, तथा (पतयत्) स्वामिपन को करनेवाला, वा (मन्दयत्सखम्) जिसमें आनन्द को प्राप्त होने वा विद्या के जाननेवाले मित्र हों, ऐसे विज्ञान आदि धन को हमारे लिये ([आ] भर) धारण कीजिये ।।७।।

**भावार्थ**—ईश्वर पुरुषार्थी मनुष्य पर कृपा करता है, आलस करनेवाले पर नहीं । क्योंकि जब तक मनुष्य ठीक-ठीक पुरुषार्थ नहीं करता, तब तक ईश्वर की कृपा और अपने किये हुए कर्मों से प्राप्त हुए पदार्थों की रक्षा भी करने में समर्थ कभी नहीं हो सकता । इसलिये मनुष्यों को पुरुषार्थी होकर ही ईश्वर की कृपा के भागी होना चाहिये ।। ७ ।।



**पुनश्च कथंभूत इन्द्र इत्युपदिश्यते—**

**अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः । प्रावो वाजेषु वाजिनम् ।। ८ ।।**

अस्य । पीत्वा । शतक्रतो इति शतऽक्रतो । घनः । वृत्राणाम् । अभवः ।। प्र । आवः । वाजेषु । वाजिनम् ।। ८ ।।

१. वै० य० मुद्रितेषु संस्करणेषु १-२; 'अश्विरत्यश्व०' इति, सं० ३-४ 'आश्विरत्यश्व०' पाठः । तत्र प्रथमः प्रत्यक्षमपपाठः, द्वितीयश्च निघण्टौ 'आशुः' इति सविसर्जनीयपाठात् ।

२. अध्यायप्रपाठकक्रमयोः समानो निर्देशः ।      ३. अध्यायानुसारं ६।३।१।१८ ।।

४ वै० य० मुद्रितेषु संस्करणेषु 'तव कृपया' पाठः ।

**पदार्थः** - (**अस्य**) समक्षासमक्षस्य[1] सर्वस्य जगतो जलरसस्य वा (**पीत्वा**) पानं कृत्वा (**शतक्रतो**) शतान्यसंख्याताः क्रतवः कर्माणि यस्य शूरवीरस्य[2] सूर्य्यलोकस्य वा सः। शतमिति बहुनामसु पठितम्। निघं० ३। १। क्रतुरिति कर्मनामसु पठितम्। निघं० २। १। (**घनः**) दृढः काठिन्येन मूर्त्तिं प्रापितो वा। मूर्त्तौ घनः। अ० ३। ३। ७७ अनेनायं निपातितः। (**वृत्राणाम्**) वृत्रवत् सुखावरकाणां शत्रूणां मेघानां वा। वृत्र इति मेघनामसु पठितम्। निघं० १। १०। (**अभवः**) भूयाः, भवति वा। अत्र पक्षे व्यत्ययः, लिङ्लटोरर्थे लङ् च। (**प्रावः**) रक्ष, रक्षति वा, अत्रापि पूर्ववत्। (**वाजेषु**) युद्धेषु। वाज इति संग्रामनामसु पठितम्। निघं० २। १७। (**वाजिनम्**) धार्मिकं शूरवीरं मनुष्यं प्राप्तिनिमित्तं सूर्य्यलोकं वा। वाजिन इति पदनामसु पठितम्। निघं० ५। ६ अनेन युद्धेषु प्राप्तवेगहर्षाः शूराः सूर्य्यलोका वा गृह्यन्ते ॥ ८ ॥

**अन्वयः**—[3]हे शतक्रतो पुरुषव्याघ्र! यथा घनो मूर्तिमानयं सूर्य्यलोकोऽस्य जलस्य रसं पीत्वा वृत्राणां मेघावयवानां हननं कृत्वा सर्वानोषध्यादीन् पदार्थान् प्रावो रक्षति, यथा च स्वप्रकाशेन सर्वान् प्रकाशते, तथैव [ घनः ] त्वमपि [ वृत्राणां ] सर्वेषां रोगाणां दुष्टानां शत्रूणां च [पीत्वा] निवारको भूत्वाऽस्य रक्षकोऽभवो भूयाः। एवं वाजेषु दुष्टैः सह युद्धेषु प्रवर्त्तमानं धार्मिकं वाजिनं शूरं प्रावः प्रकृष्टतया सदैव रक्षको भव ॥ ८ ॥

अत्र लुप्तोपमालङ्कारः[4]।

**भावार्थः**—[5]यथा यो मनुष्यो दुष्टैः सह धर्मेण युध्यति तस्यैव विजयो भवति नेतरस्य, तथा परमेश्वरोऽपि धार्मिकाणां युद्धकर्त्तॄणां मनुष्याणामेव सहायकारी भवति, नेतरेषाम् ॥ ८ ॥

फिर भी परमेश्वर ने [इन्द्र=शूर और][6] सूर्य्यलोक के स्वभाव का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा** [7]हे (**शतक्रतो**) असंख्यात कर्मों के करनेवाले शूरवीर पुरुषोत्तम!

१. प्रत्यक्षाप्रत्यक्षस्येत्यर्थः। २. शूरवीरपक्षे सम्बुद्धौ, सूर्यपक्षे च प्रथमाविभक्तावर्थो ज्ञेयः। क. कोशे तु 'तत्संबुद्धौ, सूर्यलोको वा' पाठो दृश्यते।

३. अत्र पदार्थे 'शतक्रतो' पदं श्लेषवृत्त्या शूरवीरपरं सूर्यलोकपरं च व्याख्यातम्। तमनुरुध्यैव च क्रियापदानामप्यर्थे पुरुषभेदः प्रदर्शितः। इहान्वये उभयोरप्यर्थयोर्विचित्रं सांकर्यमुपलभ्यते, यथा-तथा पदयोश्च प्रयोगो दृश्यते। अनेन सांकर्येण नार्थद्वैविध्यं स्पष्टमवबुध्यते। पदार्थानुसारमन्वयद्वैविध्यमेवं द्रष्टव्यम्—

(क) हे शतक्रतो पुरुषव्याघ्र! त्वं घनः कठिनो दृढः भूत्वाऽस्य जगतो वृत्राणां सुखावरकान् शत्रून् पीत्वा हननं कृत्वा सर्वप्राणिनां दुःखनिवारकोऽभवो भूयाः। वाजेषु युद्धेषु प्रवर्त्तमानं वाजिनं धार्मिकं शूरं प्रावो रक्ष ॥

(ख) अयं शतक्रतो सूर्यलोकः घनः कठिनः तीव्रः सन् अस्य जगतो रसं जलं पीत्वा वृत्राणां मेघानां हननं कृत्वा निवारकोऽभवो भवति। वाजेषु मेघभेदनरूपेषु युद्धेषु वाजिनं बलवन्तं किरणसमूहं प्रावः स्वशक्त्या रक्षति समर्थयति ॥

४. यथा त्वत्र पदार्थस्तथाऽत्र श्लेषालङ्कार इत्युचितः प्रतिभाति। संस्कृतपदार्थे परिवर्तनेऽत्रापि परिवर्तनमावश्यकम्।

५. अयं भावार्थः क.कोशस्थस्येश्वरपरस्य पदार्थानुसारी वर्तते। ६. पदार्थेऽर्थद्वयकरणादिहावश्यकः पाठः।

७. यह भाषा-पदार्थ वर्तमान संस्कृत-अन्वय के अनुसार है। संस्कृत पदार्थ में शूरवीर तथा सूर्यलोक

जैसे यह (घनः) मूर्तिमान् सूर्यलोक (अस्य) जल के रस को (पीत्वा) पीकर (वृत्राणाम्) मेघ के अवयवों का भेदन करके अर्थात् बरसाके सब ओषधी आदि पदार्थों की (प्रावः) रक्षा करता है, और जैसे अपने प्रकाश से सबको प्रकाशित करता है, वैसे ही तुम भी [ (वृत्राणाम्) ] सब रोग और धर्म के विरोधी दुष्ट शत्रुओं के [ (पीत्वा) ]नाश करनेहारे होकर [ (अस्य) ]इस जगत् के रक्षा करनेवाले (अभवः) होवो। इसी प्रकार जो दुष्टों के साथ (वाजेषु) युद्ध में प्रवर्त्तमान (वाजिनम्) धार्मिक और शूरवीर पुरुष है, उसकी सदा [ (प्रावः) ] अच्छे प्रकार रक्षा करते रहो ॥ ८ ॥

इस मन्त्र में लुप्तोपमालङ्कार[1] है।

भावार्थ—[2]जैसे जो मनुष्य दुष्टों के साथ धर्मपूर्वक युद्ध करता है, उसी का ही विजय होता है और का नहीं। तथा परमेश्वर भी धर्मपूर्वक युद्ध करनेवाले मनुष्यों का ही सहाय करनेवाला होता है, औरों का नहीं ॥ ८ ॥



पुनरिन्द्रशब्देनेश्वर उपदिश्यते—

तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो। धनानामिन्द्र सातये ॥ ९ ॥

तम्। त्वा। वाजेषु। वाजिनम्। वाजयामः। शतक्रतो इति शतऽक्रतो। धनानाम्। इन्द्र। सातये ॥ ९ ॥

**पदार्थः**—( तम् ) इन्द्रं परमेश्वरम् ( त्वा ) त्वाम् ( वाजेषु ) युद्धेषु ( वाजिनम् ) विजयप्रापकम्। वाजिन इति पदनामसु [निघं० ५। ६] पठितत्वात् प्राप्त्यर्थोऽत्र गृह्यते। ( वाजयामः ) विज्ञापयामः। 'वज गतौ' इत्यन्तर्गतण्यर्थेन ज्ञापनार्थोऽत्र गृह्यते। ( शतक्रतो ) शतेष्वसंख्यातेषु वस्तुषु क्रतुः प्रज्ञा यस्य तत्सम्बुद्धौ। क्रतुरिति प्रज्ञानामसु पठितम्। निघं० ३। ९। (धनानाम्) पूर्णविद्याराज्यादिसाध्यपदार्थानाम् ( इन्द्र ) परमैश्वर्य्यवन्! ( सातये ) सुखार्थं सम्यक्सेवनाय ॥ ९ ॥

**अन्वयः**—हे शतक्रतो इन्द्र जगदीश्वर! वयं धनानां सातये वाजेषु वाजिनं तं पूर्वोक्तमिन्द्रं परमेश्वरं त्वा[ त्वा ]मेव सर्वान् मनुष्यान् प्रति वाजयामो विज्ञापयामः ॥ ९ ॥

---

परक दो अर्थों का निर्देश होने से संस्कृत-अन्वय और भाषा-पदार्थ भी दो पृथक्-पृथक् होने चाहियें। परन्तु यहां संस्कृत अन्वय और भाषार्थ में दोनों का संमिश्रण कर दिया गया है।

१. संस्कृत-पदार्थ में दो प्रकार का अर्थ निर्दिष्ट होने से यहां 'श्लेषालंकार' होना चाहिये। 'लुप्तोपमालंकार' क. कोशस्थ भूतपूर्व ईश्वरपरक पदार्थ के अनुसार लिखा गया है। पदार्थ में शोधन कर देने पर यहां भी शोधन करना उचित था, जो प्रतीत होता है, रह गया। ग्रं० य० मुद्रित संस्करणों में कुछ पाठ आगे पीछे करके वर्तमान संस्कृत-अन्वयानुसारी बनाया है।

२. यह भावार्थ भी क.कोशस्थ भूतपूर्व संस्कृत-पदार्थ के अनुसार है। यहां भी उचित संशोधन करना रह गया।

**भावार्थः**—यो दुष्टान् युद्धेन निर्बलान् कृत्वा जितेन्द्रियो विद्वान् भूत्वा जगदीश्वराज्ञां पालयति, स एव मनुष्यो धनानि विजयं च प्राप्नोतीति ॥ ९ ॥

फिर इन्द्र शब्द से अगले मन्त्र में ईश्वर का प्रकाश किया है—

**पदार्थान्वयभाषा**—हे (शतक्रतो) असंख्यात वस्तुओं में विज्ञान रखनेवाले (इन्द्र) परम ऐश्वर्य्यवान् जगदीश्वर ! हम लोग (धनानाम्) पूर्ण विद्या और राज्य को सिद्ध करनेवाले पदार्थों को (सातये) सुखभोग वा अच्छे प्रकार सेवन करने के लिये (वाजेषु) युद्धादि व्यवहारों में (वाजिनम्) विजय [प्राप्त] करानेवाले, (तम्) उक्त गुणयुक्त (त्वा) आपको ही (वाजयामः) नित्य प्रति जानने और जनाने का प्रयत्न करते हैं ॥ ९ ॥

**भावार्थ**—जो मनुष्य दुष्टों को युद्ध से निर्बल करके जितेन्द्रिय वा विद्वान् होकर जगदीश्वर की आज्ञा का पालन करता है, वही उत्तम धन वा युद्ध में विजय को [प्राप्त करता] अर्थात् सब शत्रुओं को जीतनेवाला होता है ॥ ९ ॥



**पुनः स कीदृशः किमर्थं स्तोतव्य इत्युपदिश्यते—**

यो रायो॒३ऽवनि॑र्म॒हान्त्सु॑पा॒रः सु॑न्व॒तः सखा॑ । तस्मा॒ इन्द्रा॑य गायत ॥ १० ॥

यः । रा॒यः । अ॒वनिः॑ । म॒हान् । सु॒ऽपा॒रः । सु॒न्व॒तः । सखा॑ ॥ तस्मै॑ । इन्द्रा॑य । गा॒य॒त॒ ॥ १० ॥

**पदार्थः**—(यः) परमेश्वरः करुणामयः (रायः) विद्यासुवर्णादिधनस्य । राय इति धननामसु पठितम् । निघं० २ । १० । (अवनिः) रक्षकः प्रापको दाता (महान्) सर्वेभ्यो महत्तमः (सुपारः) सर्वकामानां सुष्ठु पूर्त्तिकरः (सुन्वतः) अधिगतसोमविद्यस्य धार्मिकस्य[1] मनुष्यस्य (सखा) सौहार्द्देन सुखप्रदः (तस्मै) तमीश्वरम् (इन्द्राय) परमैश्वर्यवन्तम् । अत्रोभयत्र सुपां सुलुग्० [अ० ७ । १ । ३९] इति द्वितीयैकवचनस्थाने चतुर्थ्येकवचनम् (गायत) नित्यमर्चत । गायतीत्यर्चतिकर्मसु पठितम् । निघं० ३ । १४ ॥ १० ॥

**अन्वयः**—हे विद्वांसो मनुष्या ! यो महान् सुपारः सुन्वतः सखा रायोऽवनिः करुणामयोऽस्ति, यूयं तस्मै तमिन्द्रायेन्द्रं परमेश्वरमेव गायत नित्यमर्चत ॥ १० ॥

**भावार्थः**—नैव केनापि केवलं परमेश्वरस्य स्तुतिमात्रकरणेन सन्तोष्टव्यं, किन्तु तदाज्ञायां वर्त्तमानेन स नः सर्वत्र पश्यतीत्यधर्मान्निवर्त्तमानेन तत्सहायेच्छुना मनुष्येण सर्वोद्योगे प्रवर्त्तितव्यम् ॥ १० ॥

एतस्य विद्यया परमेश्वरज्ञानात्मशरीरारोग्यदृढत्वप्राप्त्या सदैव दुष्टानां विजयेन पुरुषार्थेन च चक्रवर्त्तिराज्यं धार्मिकैः प्राप्तव्यमिति संक्षेपतोऽस्य चतुर्थसूक्तोक्तार्थस्य तृतीयसूक्तोक्तार्थेन सह सङ्गतिरस्तीति बोध्यम् ॥

१. क॰ कोशेऽयं पाठ उपलभ्यते । केवलम् 'अभि' इत्यस्य 'अधि' शोधनमस्माभिर्विहितम् ।

**अस्यापि सूक्तस्यार्य्यावर्त्तनिवासिभिः सायणाचार्य्यादिभिर्यूरोपाख्यदेशनिवासिभिरध्यापकविलासनाख्यादिभिरन्यथैव व्याख्या कृतेति वेदितव्यम् ॥**

**इति चतुर्थं सूक्तमष्टमश्च वर्गः समाप्तः ॥**

फिर भी वह परमेश्वर कैसा है, और क्यों स्तुति करने योग्य है, इस विषय का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे विद्वान् मनुष्यो ! [(यः)] जो [(महान्)] बड़ों से बड़ा, (सुपारः) अच्छी प्रकार सब कामनाओं की परिपूर्णता करनेहारा, (सुन्वत.) प्राप्त हुए सोमविद्यावाले धर्मात्मा पुरुष को (सखा) मित्रता से सुख देने, तथा (रायः) विद्या सुवर्ण आदि धन का (अवनिः) रक्षक, और इस संसार में उक्त पदार्थों को जीवों को पहुंचाने और उनका देनेवाला करुणामय है, (तस्मै) उस [(इन्द्राय) परमैश्वर्यवान्] परमेश्वर की तुम लोग (गायत) नित्य पूजा किया करो ॥ १० ॥

**भावार्थ**—किसी मनुष्य को केवल परमेश्वर की स्तुतिमात्र ही करने से सन्तोष न करना चाहिये। किन्तु उसकी आज्ञा में रहकर और ऐसा समझकर कि परमेश्वर मुझको सर्वत्र देखता है, इसलिये अधर्म से निवृत्त होकर और परमेश्वर के सहाय की इच्छा करके मनुष्य को सदा उद्योग ही में वर्त्तमान रहना चाहिये ॥ १० ॥

इस सूक्त की कही हुई विद्या से धर्मात्मा पुरुषों को परमेश्वर का ज्ञान सिद्ध करना, तथा आत्मा और शरीर के स्थिर भाव आरोग्य की प्राप्ति, तथा दुष्टों के विजय और पुरुषार्थ से चक्रवर्ति राज्य को प्राप्त होना, इत्यादि अर्थ की तृतीय सूक्त में कहे अर्थ के साथ सङ्गति समझनी चाहिये ॥

आर्यावर्त्तवासी सायणाचार्य्य आदि विद्वान्, तथा यूरोपखण्डवासी अध्यापक विलसन आदि साहबों ने इस सूक्त की भी व्याख्या ऐसी विरुद्ध की है कि यहां उसका लिखना व्यर्थ है ॥

यह चौथा सूक्त और आठवां वर्ग समाप्त हुआ ॥



अथ दशर्चस्यास्य पञ्चमसूक्तस्य मधुच्छन्दा ऋषिः । इन्द्रो देवता । १ विराड्गायत्री; २ आर्च्युष्णिक्; ३ पिपीलिकामध्या निचृद्गायत्री; ४, १० गायत्री; ५–७, ९ निचृद्गायत्री; ८ पादनिचृत्गायत्री च छन्दः । १, ३–१० षड्जः; २ ऋषभः स्वरः ॥

**अथेन्द्रशब्देनेश्वरभौतिकावर्थावुपदिश्यते—**

आ त्वेता नि षीदतेन्द्रमभि प्र गायत । सखायः स्तोमवाहसः ॥ १ ॥

आ । तु । आ । इत । नि । सीदत । इन्द्रम् । अभि । प्र । गायत ॥ सखायः । स्तोमऽवाहसः ॥ १ ॥

**पदार्थः**—( आ ) समन्तात् ( तु ) पुनरर्थे ( आ ) अभ्यर्थे ( इत ) प्राप्नुत । द्व्यचोऽतस्तिङः [अ० ६ । ३ । १३४] इति दीर्घः । (निषीदत) शिल्पविद्यायां नितरां तिष्ठत (इन्द्रम्) परमेश्वरं विद्युदादियुक्तं वायुं वा । इन्द्र इति पदनामसु पठितम् । निघं० ५ । ४ । विद्याजीवनप्रापकत्वाद् इन्द्रशब्देनात्र परमात्मा वायुश्च गृह्यते । विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना । ऋ० १ । १४ । १० । इन्द्रेण वायुनेति [सामानाधिकरण्याद्] वायोरिन्द्रसंज्ञा । (अभिप्रगायत) आभिमुख्येन प्रकृष्टतया विद्यासिध्यर्थं तद्गुणानुपदिशत शृणुत च (सखायः) परस्परं सुहृदो भूत्वा[1] (स्तोमवाहसः) स्तोमः स्तुतिसमूहो वाहः[2] प्राप्तव्यः प्रापयितव्यो येषां ते ॥ १ ॥

**अन्वयः**—हे स्तोमवाहसः सखायो विद्वांसः ! सर्वे यूयं मिलित्वा परस्परं प्रीत्या मोक्षशिल्पविद्यासम्पादनोद्योग आनिषीदत । तदर्थमिन्द्रं परमेश्वरं वायुं चाभिप्रगायत । एवं [तु] पुनः सर्वाणि सुखान्येत ॥ १ ॥

**भावार्थः**—यावन्मनुष्या हठच्छलाभिमानं त्यक्त्वा सम्प्रीत्या परस्परोपकाराय मित्रवन्न प्रयतन्ते, तावन्नैवतेषां कदाचिद्विद्यासुखोन्नतिर्भवतीति ॥ १ ॥

पांचवें सूक्त के प्रथम मन्त्र में इन्द्र शब्द से परमेश्वर और स्पर्शगुणवाले वायु का प्रकाश किया है—

**पदार्थान्वयभाषा**—हे (स्तोमवाहसः) प्रशंसनीय गुणयुक्त वा प्रशंसा कराने, और (सखायः) सबसे मित्रभाव में वर्त्तनेवाले विद्वान् लोगो ! तुम सब लोग मिलके परस्पर प्रीति के साथ मुक्ति और शिल्पविद्या को सिद्ध करने में (आनिषीदत) स्थित होवो । और उसकी निरन्तर अच्छी प्रकार से यत्नपूर्वक साधना करने के लिये (इन्द्रम्) परमेश्वर वा बिजली से युक्त हुए वायु और उसके गुणों का (अभिप्रगायत) उपदेश करो और सुनो, कि जिससे वह अच्छी रीति से सिद्ध की हुई विद्या सब को प्रकट हो जावे । (तु) और उसी से तुम सब लोग सब सुखों को (एत) प्राप्त होओ ॥

[3]इन्द्र का पदनाम[4] में पाठ है । अतः विद्या और प्राणियों के जीवन का हेतु होने से इन्द्र शब्द से परमेश्वर और स्पर्श गुणवाले वायु का ग्रहण होता है । (इन्द्रेण वायुना०[5]) ऋग्वेद के इस प्रमाण से वायु का इन्द्र नाम जानना चाहिये ॥ १ ॥

---

१. पदार्थे 'भूत्वा' पदमनावश्यकम् । अन्वयेऽपि नान्वेति ।

२. वहिहाधाञ्भ्यश्छन्दसि (उ० ४।२२१) इत्यनेनासुन्, णिदनुवृत्त्या (सू० २१८) उपधावृद्धिः, ततो बहुव्रीहिः, पूर्वपदप्रकृतिस्वरत्वं च । सायणस्तूपपदसमासं मत्वोत्तरपदप्रकृतिस्वरे प्राप्ते 'गतिकारकयोः पूर्वपदप्रकृतिस्वरत्वं च' (उ० ४।२२७) सूत्रे पूर्वपदप्रकृतिस्वरमाह । यत्तु ग्रन्थकार(द० स०)कृतायामुणादिवृत्तौ 'वक्षाः हासाः धासाः' इत्युदाहरणान्युक्तानि तदुज्ज्वल-दत्तीयोणादिवृत्त्यनुसारं ज्ञेयानि । विशेषस्त्वत्र यजुर्वेदभाष्यस्य १३।१८ विवरणे द्रष्टव्यः ।

३. वै०य० मुद्रित संस्करणों में यह भावार्थ अधूरा और पदार्थ के मध्य पड़ा हुआ है । हमने पाठ की पूर्ति करके पदार्थ के अनन्तर रखा है ।

४. निघं० ५।४ ॥ ५. ऋ० १।१४।१० ॥

भावार्थ—जब तक मनुष्य हठ छल और अभिमान को छोड़कर सत्य प्रीति के साथ परस्पर मित्रता करके परोपकार करने के लिये तन मन और धन से यत्न नहीं करते, तबतक उनके सुखों और विद्या आदि उत्तम गुणों की उन्नति कभी नहीं हो सकती ॥ १ ॥



पुनस्तावेवोपदिश्येते—

पुरूतमं पुरूणामीशानं वार्य्याणाम् । इन्द्रं सोमे सचा सुते ॥ २ ॥

पुरुऽतमम् । पुरूणाम् । ईशानम् । वार्य्याणाम् ॥ इन्द्रम् । सोमे । सचा । सुते ॥ २ ॥

पदार्थः—(पुरूतमम्) पुरून् बहून् दुष्टस्वभावान् जीवान् पापकर्मफलदानेन तमयति ग्लापयति तं परमेश्वरं, तत्फलभोगहेतुं वायुं वा । पुरुरिति बहुनामसु पठितम् । निघं० ३ । १ । अत्र अन्येषामपि दृश्यते [अ० ६ । ३ । १३६] इति दीर्घः । (पुरूणाम्) बहूनामाकाशादि-पृथिव्यन्तानां पदार्थानाम् (ईशानम्) रचने समर्थं परमेश्वरं, तन्मध्यस्थविद्यासाधकं वायुं वा (वार्य्याणाम्) वराणां वरणीयानामत्यन्तोत्तमानां मध्ये स्वीकर्तुमर्हम् । वार्य्यं वृणोतेरथापि वरतमं तद्वार्य्यं वृणीमहे वरिष्ठं गोपयत्यं तद्वार्यं वृणीमहे वर्षिष्ठं गोपायितव्यम् । निरु० ५ । १ । (इन्द्रम्) सकलैश्वर्य्यप्रदं परमेश्वरम्, आत्मनः सर्वभोगहेतुं वायुं वा (सोमे) सोतव्ये सर्वस्मिन् पदार्थे, विमानादियाने वा । (सचा) ये समवेताः पदार्थाः सन्ति । सचा इति पदनामसु पठितम् । निघं० ४ । २ । (सुते) उत्पन्नेऽभिषवविद्ययाऽभिप्राप्ते ॥ २ ॥

अन्वयः—हे [1]सखायो विद्वांसो वार्य्याणां [2]पुरूतमं पुरूणामीशानमिन्द्रमभिप्रगायत । ये [तु[1]] सुते सोमे सचा सन्ति तान् सर्वोपकाराय यथायोग्यमभिप्रगायत ॥ २ ॥

अत्र श्लेषालङ्कारः । पूर्वस्मान्मन्त्रात् 'सखायः', 'तु', 'अभिप्रगायत' इति [3]पदत्रयमनु-वर्त्तनीयम् ।

भावार्थः—ईश्वरस्य यथायोग्यव्यवस्थया जीवेभ्यस्तत्तत्कर्मफलदातृत्वात् भौतिकस्य वायोः कर्मफलहेतुत्वेन सकलचेष्टाविद्यासाधकत्वादस्मादुभयार्थस्य ग्रहणम् ॥ २ ॥

फिर भी अगले मन्त्र में उन्हीं दोनों के गुणों का प्रकाश किया है—

पदार्थान्वयभाषा—(सखायः[4]) हे मित्र विद्वान् लोगो ! (वार्य्याणाम्) अत्यन्त उत्तम [पदार्थों में स्वीकार करने योग्य] (पुरूतमम्) बहुत दुष्ट स्वभाववाले जीवों को [कर्मफल देकर] ग्लानि प्राप्त करानेवाले (पुरूणाम्) आकाश से लेकर पृथिवीपर्यन्त असंख्यात पदार्थों को

१. पदानीमानि पूर्वमन्त्रादनुवर्त्तन्ते ।

२. वै० य० मुद्रितेषु संस्करणेषु 'पुरूतममीशानं पुरूणामिन्द्र०' इति पूर्वापरपाठः । स चानन्वित इव ।

३. 'अभि प्र गायत' इत्येतानि त्रीण्येकीकृत्य पदत्रयमुक्तम् ।

४. यह पद पूर्वमन्त्र से ग्रहण किया है ।

(ईशानम्) रचने में समर्थ, और (इन्द्रम्) श्रेष्ठ जीवों को सब ऐश्वर्य के देनेवाले परमेश्वर के, तथा[1] (वार्याणाम्) अत्यन्त उत्तम (पुरूतमम्) दुष्ट जीवों के कर्मों के भोग में निमित्त, और (पुरूणाम्) आकाश से लेके पृथिवीपर्यन्त बहुत से पदार्थों की विद्याओं के [(ईशानम्)] साधक (इन्द्रम्) जीवमात्र को सुख देनेवाले पदार्थों के हेतु भौतिक वायु के, गुणों को (अभिप्रगायत[2]) अच्छी प्रकार उपदेश करो। और (तु[2]) जो कि (सुते) उत्पन्न हुए पदार्थों में व्याप्त, वा रस खींचने की क्रिया से प्राप्त, (सोमे) उस विद्या से प्राप्त होने योग्य [सब पदार्थों वा विमानादि यानों में] (सचा) समवेत पदार्थ हैं, उनको उक्त विद्याओं से सब के उपकार के लिये यथायोग्य युक्त करो ॥ २ ॥

इस मन्त्र में श्लेषालंकार है। पीछे के मन्त्र से इस मन्त्र में 'सखाय' 'तु' 'अभिप्रगायत' इन तीन शब्दों को अर्थ के लिये लेना चाहिये।

**भावार्थ**—इस मन्त्र में यथायोग्य व्यवस्था करके जीवों को उनके किये हुए कर्मों का फल देने से ईश्वर तथा इन कर्मों के फलभोग कराने के हेतु वा सब क्रियाओं के साधक होने से भौतिक अर्थात् संसारी वायु का ग्रहण किया है ॥ २ ॥



**तावस्मदर्थं किं कुरुत इत्युपदिश्यते—**

**स घा नो योग आ भुवत् स राये स पुरंन्ध्याम् । गमद् वाजेभिरा स नः ॥३॥**

सः । घ । नः । योगे । आ । भुवत् । सः । राये । सः । पुरम्ऽध्याम् ॥ गमत् । वाजेभिः । आ । सः । नः ॥ ३ ॥

**पदार्थः**—(सः) **इन्द्र ईश्वरो वायुर्वा (घ) एवार्थे निपातः।** ऋचि तुनुघ०। अ० ६। ३। १३२ **अनेन दीर्घादेशः।** (नः) **अस्माकम् (योगे) सर्वसुखसाधनप्राप्तिसाधके (आ भुवत्) समन्ताद् भूयात्। भूधातोराशिषि लिङि प्रथमैकवचने** लिङ्याशिष्यङ्। अ० ३। १। ८६ **इत्यङि सति,** किदाशिषि [अ० ३। ४। १०४] **इत्यागमानित्यत्वे[3] प्रयोगः।** (सः) **उक्तोऽर्थः।** (राये) **परमोत्तमधनलाभाय।** राय इति धननामसु पठितम्। निघं० २। १०। (सः) **पूर्वोक्तोऽर्थः। (पुरन्ध्याम्) बहुशास्त्रविद्यायुक्तायां बुद्धयाम्।** पुरन्धिरिति पदनामसु पठितम्। निघं० ४। ३। **(गमत्) आगच्छेत् गमयति वा। अत्र पक्षे वर्त्तमानेऽर्थे लिङर्थे च लुङ्।** बहुलं छन्दस्यमाङ्योगेऽपि। अ० ६। ४। ७५ **इत्यडभावः। (वाजेभिः) उत्तमैरन्नैर्विमानादियानैः सह वा।** बहुलं छन्दसि। अ० ७। १। १० **अनेनैसादेशाभावः। (आ) सर्वतः (सः) अतीतार्थे[4] (नः) अस्मान् ॥ ३ ॥**

---

१. यहां से आगे श्लेषालंकार द्वारा भौतिक अर्थ दर्शाने के लिए 'वार्याणाम्, पुरूतमम्, पुरूणाम्, ईशानम्, इन्द्रम्' इन पदों का पुनः निर्देश किया है।
२. ये पद पूर्वमन्त्र से ग्रहण किये हैं।
३. यासुडागमाभाव इत्यर्थः।
४. पूर्वोक्तार्थ इत्यर्थः।

अन्वयः—स ह्येवेन्द्रः परमेश्वरो वायुश्च नोऽस्माकं योगे सहायकारी व्यवहारविद्योपयोगाय चाभुवत् समन्ताद् भूयाद् भवति वा। तथा स [च] एव राये स पुरन्ध्यां च प्रकाशको भूयाद्भवति वा। एवं स एव वाजेभिः सह नोऽस्मानागमदाज्ञाप्यात् समन्तात् गमयति वा ॥ ३ ॥

अत्र श्लेषालङ्कारः।

भावार्थः—ईश्वरः पुरुषार्थिनो मनुष्यस्य सहायकारी भवति नेतरस्य। तथा वायुरपि पुरुषार्थेनैव कार्य्यसिद्ध्युपयोगी भवति। नैव कस्यचिद्विना पुरुषार्थेन धनबुद्धिलाभो भवति। नैवैताभ्यां विना कदाचिदुत्तमं सुखं च भवति। इत्यतः सर्वैर्मनुष्यैरुद्योगिभिराशीर्मद्भि[1]र्भवितव्यम् ॥ ३ ॥

वे दोनों (=इन्द्र और वायु) तुम हम और सब प्राणिलोगों के लिये क्या करते हैं, सो अगले मन्त्र में प्रकाश किया है—

पदार्थान्वयभाषा—(सः) [वही] पूर्वोक्त इन्द्र परमेश्वर और स्पर्शवान् वायु (नः) हम लोगों के (योगे) सब सुखों के सिद्ध करानेवाले, वा पदार्थों को प्राप्त करानेवाले योग तथा [व्यवहार विद्या में उपयोग के लिये] (सः) वे [(घ)] ही (राये) [परम] उत्तम धन के लाभ के लिये, और (सः) वे [ही] (पुरन्ध्याम्) अनेक शास्त्रों की विद्याओं से युक्त बुद्धि में (आ भुवत्) प्रकाशित हों [या होता है]। इसी प्रकार (सः) वे [ही] (वाजेभिः) उत्तम अन्न अथवा विमान आदि सवारियों के सह वर्त्तमान (नः) हम लोगों को (आगमत्) उत्तम सुख होने का ज्ञान देवे। तथा यह वायु भी इस विद्या की सिद्धि में हेतु होता है ॥ ३ ॥

इस [मन्त्र] में भी श्लेषालङ्कार है।

भावार्थ—ईश्वर पुरुषार्थी मनुष्य का सहायकारी होता है, आलसी का नहीं। तथा स्पर्शवान् वायु भी पुरुषार्थ ही से कार्य्यसिद्धि का निमित्त होता है। क्योंकि किसी प्राणी को पुरुषार्थ के विना धन वा बुद्धि का, और इनके विना उत्तम सुख का लाभ कभी नहीं हो सकता। इसलिये सब मनुष्यों को उद्योगी अर्थात् पुरुषार्थी आशावाले[2] अवश्य होना चाहिये ॥३॥



पुनरीश्वरसूर्यौ [3]गातव्यावित्युपदिश्यते—

यस्य॑ सं॒स्थे न वृ॒ण्वते॒ हरी॑ स॒मत्सु॒ शत्र॑वः। तस्मा॒ इन्द्रा॑य गायत ॥ ४ ॥

---

१. 'आशिर्मद्भि०' इति युक्तः पाठः स्यात्। ग्रन्थकृता १।२३ भावार्थे 'आशीश्च वदति' इत्येवं दीर्घेकारान्त 'आशी' शब्दः प्रयुक्तः। स च शुद्ध एव (द्र०—अमरटीका भानुजिकृता ३।३।२२८॥ 'आशीष्' अस्येव दीर्घेकारवान् प्रयोगो नास्माभिरुपलब्धः। 'आशीर्मद्भिः' क.ग.कोशयोर्नास्ति॥ वै० य० मुद्रित संस्करणों में भाषा में 'आशावाले' पाठ मिलता है। तदनुसार 'आशावद्भिः' अधिक युक्त प्रतीत होता है।

२. संस्कृत-पाठानुसार 'आशीवाले' होना चाहिये। परन्तु हमें संस्कृतपाठ में 'आशीर्मद्भिः' अशुद्ध पाठ पर सन्देह है। यदि यहां संस्कृत-पाठ 'आशावद्भिः' होता, तो वाक्य अधिक संगत हो जाता।

३. गातव्यौ=गुणस्तवनश्रवणाभ्यां विज्ञातव्यौ इत्यर्थः।

यस्यं । सम्ऽस्थे । न । वृण्वते । हरी इति । समत्ऽसु । शत्रवः ।। तस्मै । इन्द्राय । गायत ।। ४ ।

**पदार्थः**—(यस्य) परमेश्वरस्य सूर्यलोकस्य वा (संस्थे) सम्यक् तिष्ठन्ति यस्मिंस्तस्मिन् जगति। घञर्थे कविधानं०। अ० ३। ३। ५८ इति वार्तिकेनाधिकरणे कः प्रत्ययः। (न) निषेधार्थे (वृण्वते) संभजन्ते (हरी) हरणशीलौ बलपराक्रमौ प्रकाशाकर्षणाख्यौ च। हरी इन्द्रस्येत्यादिष्टोपयोजननामसु पठितम्। निघं० १। १५। (समत्सु) युद्धेषु। समत्स्विति संग्रामनामसु पठितम्। निघं० २। १७। (शत्रवः) अमित्राः (तस्मै) एतद्गुणविशिष्टम्[1] (इन्द्राय) परमेश्वरं सूर्यं वा। अत्रोभयत्रापि सुपां सु० [अ० ७। १। ३९] अनेनामः स्थाने ङे। (गायत) गुणस्तवनश्रवणाभ्यां विजानीत ।। ४ ।।

**अन्वयः**—हे मनुष्या ! यूयं यस्य हरी संस्थे वर्त्तेते, यस्य सहायेन शत्रवः समत्सु न वृण्वते सम्यग् बलं न सेवन्ते, तस्मा इन्द्राय तमिन्द्रं नित्यं गायत[2] ।। ४ ।।

**अत्र** श्लेषालङ्कारः।

**भावार्थः**—न यावन्मनुष्या परमेश्वरेष्टा बलवन्तश्च भवन्ति, नैव तावद् दुष्टानां शत्रूणां नैर्बल्यङ्कर्तुं शक्तिर्जायत इति[3] ।। ४ ।।

ईश्वर और सूर्यलोक गुणों के स्तवन और श्रवण से जानने योग्य हैं, यह इस मन्त्र से प्रकाश किया है—

**पदार्थान्वयभाषा**—हे मनुष्यो ! तुम लोग ( यस्य ) जिस परमेश्वर वा सूर्य्य के ( हरी ) पदार्थों को प्राप्त करानेवाले बल और पराक्रम, तथा प्रकाश और आकर्षण (संस्थे) इस संसार में वर्त्तमान हैं, जिनके सहाय से (समत्सु) युद्धों में (शत्रवः) वैरी लोग[4] (न वृण्वते) अच्छी प्रकार बल नहीं कह सकते, (तस्मै) उस (इन्द्राय) परमेश्वर वा सूर्य्यलोक को [ (गायत) ] उनके गुणों की प्रशंसा कर और सुनके यथावत् जानलो ।। ४ ।।

इस [मन्त्र] में श्लेषालङ्कार है।

**भावार्थ**—जबतक मनुष्य लोग परमेश्वर को अपने इष्ट देव समझनेवाले, और बलवान् अर्थात् पुरुषार्थी नहीं होते, तबतक उनको दुष्ट शत्रुओं की निर्बलता करने को सामर्थ्य भी नहीं होता[6] ।। ४ ।।



१. अत्र 'तस्मै' इत्यस्य 'तम्' पदार्थो द्रष्टव्यः। एतद् गुणविशिष्टम्=पूर्वोक्तगुणविशिष्टम् इत्यर्थः।

२. अयमन्वय ईश्वरसूर्ययोरुभयोः समानः।        ३. भावार्थ ईश्वर पर एव।

४. पदार्थ में 'गायत' का अर्थ 'गुणस्तवनश्रवणाभ्यां विजानीत' किया है। इसी कारण हमने वै० य० मुद्रित संस्करणों में मुद्रित पाठ को शोधकर संस्कृतानुसारी बनाया है।

५. सूर्यपरक अर्थ में शत्रु का वृत्र=मेघ अर्थ जानना चाहिये।

६. यह भावार्थ ईश्वरपरक है।

जगत्स्थाः पदार्थाः किमर्थाः कीदृशाः केन पवित्रीकृताश्च सन्तीत्युपदिश्यते—

सुतपाव्ने सुता इमे शुचयो यन्ति वीतये । सोमासो दध्याशिरः ॥ ५ ॥

सुतऽपाव्ने । सुताः । इमे । शुचयः । यन्ति । वीतये ॥ सोमासः । दधिऽआशिरः ॥ ५ ॥

पदार्थः—(सुतपाव्ने) सुतानामाभिमुख्येनोत्पादितानां पदार्थानां पाता रक्षको[1] जीवस्तस्मै[2] । अत्र आतो मनिन्क्वनिब्वनिपश्च [अ० ३ । २ । ७४] इति वनिप्प्रत्ययः । (सुताः) उत्पादिताः (इमे) सर्वे (शुचयः) पवित्राः (यन्ति) यान्ति प्राप्नुवन्ति (वीतये) ज्ञानाय भोगाय वा । वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु [धातु० २ । ४१] अस्मात् मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः [अ० ३ । ३ । ९६] अनेन क्तिन्प्रत्यय उदात्तत्वं च । (सोमासः) अभिसूयन्त उत्पद्यन्त उत्तमा व्यवहारा येषु ते । सोम इति पदनामसु पठितम् । निघं० ५ । ५ । (दध्याशिरः) दधति पुष्णन्तीति दधयः, ते समन्ताद्[आ]शीर्यन्ते येषु ते[3] । दधातेः प्रयोगः । आदृगम० । अ०३।२।१७१ अनेन किन् प्रत्ययः । शॄ हिंसार्थः, [अस्मादाङ्पूर्वात्] क्विप् ॥ ५ ॥

अन्वयः—इन्द्रेण परमेश्वरेण [4]वायुसूर्य्याभ्यां वा यतः सुतपाव्ने वीतय इमे दध्याशिरः शुचयः सोमासः सर्वे पदार्थाः [सुता] उत्पादिताः पवित्रीकृताः सन्ति, तस्मादेतान् सर्वे जीवा यन्ति प्राप्नुवन्ति ॥ ५ ॥

अत्र श्लेषालङ्कारः ।

भावार्थः—ईश्वरेण सर्वेषां जीवानामुपरि कृपां कृत्वा कर्मानुसारेण फलदानाय सर्वं कार्य्यं जगद् रच्यते पवित्रीयते च, एवं पवित्रकारकौ सूर्य्यपवनौ च । तेन हेतुना सर्वे जडाः पदार्था जीवाश्च पवित्राः सन्ति । परन्तु ये मनुष्याः पवित्रगुणकर्मग्रहणे पुरुषार्थिनो भूत्वैतेभ्यो यथावदुपयोगं गृह्णन्ति[5] ग्राहयन्ति [च], त एव पवित्रा भूत्वा सुखिनो भवन्ति ॥ ५ ॥

इति नवमो वर्गः ॥

ये संसारी पदार्थ किसलिये उत्पन्न किये गये हैं और कैसे हैं, ये किससे पवित्र किये जाते हैं, इस विषय का प्रकाश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—परमेश्वर ने, वा वायु और सूर्य से जिस कारण (सुतपाव्ने) अपने

१. अर्थनिर्देशोऽयं, न षष्ठीसमासस्य विग्रहेण निर्देशः । विग्रहस्तु 'सुतान् पाति' इत्येव द्रष्टव्यः । कृदुत्तरपदप्रकृतिस्वरः (अ० ६।२।१३९) । षष्ठीसमासे तु समासान्तोदात्तत्वे स्वरो न सिद्ध्यति ।

२. षष्ठ्यर्थे चतुर्थी ।

३. अत्रापि विग्रहः—'दधय आशिरो येषु ते' इत्येवं द्रष्टव्यः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (अ० ६।२।१) ।

४. अत्रेन्द्रपदेनाधिदैविकार्थे वायुः सूर्यो वैकतमो ग्रहीतव्यः । तेन 'इन्द्रेण परमेश्वरेण वायुना सूर्येण वा' इत्येवं पार्थक्येन योजना कर्तव्या, न समुच्चयेन ।

५. वै० य० मुद्रितेषु संस्करणेषु 'गृहीत्वा' पाठो दृश्यते । भावार्थे 'लेते तथा' पदनिर्देशाद् वाक्यार्थस्य स्फुटतायै च 'गृह्णन्ति' साधुतरः पाठः ।

उत्पन्न किये हुए पदार्थों की रक्षा करनेवाले जीव के ( वीतये ) ज्ञान वा भोग के लिये [(इमे) ये] ( दध्याशिरः ) जो धारण [ पोषण ] करनेवाले और नाशवान् हैं, तथा जो ( शुचयः ) पवित्र, ( सोमासः ) जिनसे अच्छे व्यवहार होते हैं, वे सब पदार्थ उत्पादन करके पवित्र किये हैं, इसी से सब प्राणी लोग इनको, [ (यन्ति) ] प्राप्त होते हैं ॥ ५ ॥

इस मन्त्र में श्लेषालङ्कार है।

**भावार्थ**—ईश्वर ने सब जीवों पर कृपा करके उनके कर्मों के अनुसार यथायोग्य फल देने के लिये सब कार्य्यरूप जगत् को रचा और पवित्र किया है। तथा पवित्र करनेवाले सूर्य्य और पवन को रचा है, उसी हेतु से सब जड़ पदार्थ वा जीव पवित्र होते हैं। परन्तु जो मनुष्य पवित्र गुणकर्मों के ग्रहण में पुरुषार्थी होकर संसारी पदार्थों से यथावत् उपयोग लेते तथा सब जीवों को उनका उपयोग कराते हैं, वे ही मनुष्य पवित्र होकर सुखी होते हैं ॥ ५ ॥

यह नवां वर्ग समाप्त हुआ ॥



**किं कृत्वा जीवः पूर्वोक्तोपयोगग्रहणे समर्थो भवतीत्युपदिश्यते—**

## त्वं सुतस्य पीतये सद्यो वृद्धो अजायथाः । इन्द्र ज्यैष्ठ्याय सुक्रतो ॥ ६ ॥

त्वम् । सुतस्य । पीतये । सद्यः । वृद्धः । अजायथाः ॥ इन्द्र । ज्यैष्ठ्याय । सुक्रतो इति सुऽक्रतो ॥ ६ ॥

**पदार्थः**—(त्वम्) जीवः (सुतस्य) [1]उत्पन्नस्यास्य जगत्पदार्थसमूहस्य सकाशाद् रसस्य (पीतये) पानाय ग्रहणाय वा (सद्यः) शीघ्रम् (वृद्धः) ज्ञानादिशुभगुणग्रहणेन[2] सर्वोपकारकरणे च श्रेष्ठः (अजायथाः) प्रादुर्भूतो भव (इन्द्र) विद्यादिपरमैश्वर्ययुक्त विद्वन्! इन्द्र इति पदनामसु पठितम्। निघं० ५। ४ अनेन गन्ता प्रापको विद्वान् जीवो गृह्यते (ज्यैष्ठ्याय) अत्युत्तमकर्मणामनुष्ठानाय (सुक्रतो) श्रेष्ठकर्मबुद्धियुक्त मनुष्य! ॥ ६ ॥

**अन्वयः**—हे इन्द्र सुक्रतो विद्वन् मनुष्य! त्वं सद्यः सुतस्य पीतये ज्यैष्ठ्याय वृद्ध अजायथाः ॥ ६ ॥

**भावार्थः—जीवायेश्वर[3] उपदिशति—हे मनुष्य! यावत्त्वं न विद्यावृद्धो भूत्वा सम्यक् पुरुषार्थं परोपकारं च करोषि, नैव तावन्मनुष्यभावं सर्वोत्तमसुखं च प्राप्स्यसि। तस्मात्त्वं धार्मिको भूत्वा पुरुषार्थी भव ॥ ६ ॥**

ईश्वर ने, जीव जिस करके पूर्वोक्त उपयोग के ग्रहण करने को समर्थ होते हैं, इस विषय को अगले मन्त्र में कहा है—

**पदार्थान्वयभाषा**—हे ( इन्द्र ) विद्यादिपरमैश्वर्य्य युक्त ( सुक्रतो ) श्रेष्ठ कर्म करने और

१. 'उत्पन्नस्य' इत्यस्य सम्बन्धः 'सकाशाद् उत्पन्नस्य रसस्य' इत्येवं ज्ञेयः।

२. वै० य० मुद्रितेषु संस्करणेषु 'ज्ञानादिसर्वगुणग्रहणेन' इति पाठः।

३. वै० य० मुद्रितेषु संस्करणेषु 'ईश्वरोपदिशति' इत्यपपाठः।

उत्तम बुद्धिवाले विद्वान् मनुष्य ! ( त्वम् ) तू ( सद्यः ) शीघ्र ( सुतस्य ) संसारी पदार्थों से [उत्पन्न] रस के ( पीतये ) पान वा ग्रहण, और ( ज्यैष्ठ्याय ) अत्युत्तम कर्मों के अनुष्ठान करने के लिये ( वृद्धः ) विद्या आदि शुभ गुणों के ग्रहण और सब के उपकार करने में श्रेष्ठ ( अजायथाः ) हो ॥ ६ ॥

भावार्थ—ईश्वर जीव के लिये उपदेश करता है कि—'हे मनुष्य ! तू जबतक विद्या में वृद्ध होकर अच्छी प्रकार [पुरुषार्थ और] परोपकार न करेगा, तबतक तुझको मनुष्यपन और सर्वोत्तम सुख की प्राप्ति कभी न होगी। इससे तू [धार्मिक होकर] पुरुषार्थ करनेवाला सदा हो ॥ ६ ॥



क एवमनुष्ठात्रे जीवायाशीर्ददातीत्युपदिश्यते—

आ त्वा॑ विशन्त्वाशवः॒ सोमा॑स इन्द्र गिर्वणः । शं ते॑ सन्तु॒ प्रचे॑तसे ॥ ७ ॥

आ । त्वा॒ । वि॒शन्तु॒ । आ॒शवः॑ । सोमा॑सः । इ॒न्द्र॒ । गि॒र्व॒णः॒ ॥ शम् । ते॒ । स॒न्तु॒ । प्रऽचे॑तसे ॥ ७ ॥

पदार्थः—(आ) समन्तात् (त्वा) त्वां जीवम् (विशन्तु) आविष्टा भवन्तु (आशवः) वेगादिगुणसहिताः सर्वक्रियाव्याप्ताः ( सोमासः ) सर्वे पदार्थाः ( इन्द्र ) जीव विद्वन् ! (गिर्वणः) गीर्भिर्वन्यते सम्भज्यते [यः] स गिर्वणास्तत्संबुद्धौ। गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति। निरु० ६। १४। देवशब्देनात्र प्रशस्तैर्गुणैः स्तोतुमर्हो विद्वान् गृह्यते। गिर्वणस इति पदनामसु पठितम्। निघं० ४। ३। (शम्) सुखम्। शमिति सुखनामसु पठितम्। निघं० ३। ६। (ते) तुभ्यम् (सन्तु) (प्रचेतसे) प्रकृष्टं चेतो विज्ञानं यस्य तस्मै ॥ ७ ॥

अन्वयः—हे धार्मिक गिर्वण इन्द्र विद्वन् ! मनुष्य आशवः सोमासस्त्वा त्वामाविशन्तु। एवंभूताय प्रचेतसे ते तुभ्यं मदनुग्रहेणैते शं सन्तु सुखकारका भवन्तु ॥ ७ ॥

भावार्थः—ईश्वर ईदृशाय जीवायाशीर्वादं[1] ददाति—यदा यो विद्वान् परोपकारी भूत्वा मनुष्यो नित्यमुद्योगं करोति, तदैव सर्वेभ्यः पदार्थेभ्य उपकारं संगृह्य सर्वान् प्राणिनः सुखयति। स सर्वं सुखं प्राप्नोति, नेतर इति ॥ ७ ॥

उक्त काम के आचरण करनेवाले जीव को आशीर्वाद कौन देता है, इस बात का प्रकाश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—हे धार्मिक ( गिर्वणः ) प्रशंसा के योग्य कर्म करनेवाले ( इन्द्र ) विद्वान् मनुष्य ! ( आशवः ) वेगादि गुण सहित सब क्रियाओं से व्याप्त ( सोमासः ) सब पदार्थ (त्वा) तुझको (आविशन्तु) प्राप्त हों। तथा इन पदार्थों को प्राप्त हुए (प्रचेतसे) शुद्ध ज्ञानवाले ( ते ) तेरे लिये ये सब पदार्थ मेरे अनुग्रह से ( शम् ) सुख करनेवाले ( सन्तु ) हों ॥ ७ ॥

१. द्र०—पृष्ठ ५०८, टि० १।

**भावार्थ**—ईश्वर ऐसे मनुष्यों को आशीर्वाद देता है कि जो मनुष्य विद्वान् परोपकारी होकर, अच्छी प्रकार नित्य उद्योग करके, इन सब पदार्थों से उपकार ग्रहण करके सब प्राणियों को सुखयुक्त करता है, वही सदा सुख को प्राप्त होता है, अन्य कोई नहीं । ७ ।।



एतदर्थमिन्द्रशब्दार्थ उपदिश्यते—

त्वां स्तोमा॑ अवीवृधन् त्वामु॒क्था श॑तक्रतो । त्वां व॑र्धन्तु नो॒ गिर॑: ।। ८ ।।

त्वाम् । स्तोमा॑: । अ॒वी॒वृ॒ध॒न् । त्वाम् । उ॒क्था । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ।। त्वाम् । व॒र्ध॑न्तु । न॒: । गिर॑: ।। ८ ।।

**पदार्थः**—(त्वाम्) इन्द्रं परमेश्वरं (स्तोमाः) वेदस्तुतिसमूहाः (अवीवृधन्) वर्धयन्ति । अत्र लडर्थे लुङ् । (त्वाम्) स्तोतव्यम् (उक्था) परिभाषितुमर्हाणि वेदस्थानि सर्वाणि स्तोत्राणि । पातॄतुदिवचि० । उ० २ । ७ अनेन वचधातोस्थक्प्रत्ययस्तेनोक्थस्य सिद्धिः । शेश्छन्दसि बहुलम् (अ० ६ । १ । ६८) इति शेर्लुक् । (शतक्रतो) उक्तोऽस्यार्थः[1] (त्वाम्) सर्वज्येष्ठम् (वर्धन्तु) वर्धयन्तु । अत्रान्तर्गतो ण्यर्थः (नः) अस्माकम् (गिरः) विद्यासत्यभाषणादियुक्ता वाण्यः । गीरिति वाङ्नामसु पठितम् । निघं० १ । ११ ।। ८ ।।

**अन्वयः**—हे शतक्रतो बहुकर्मवन् बहुप्रज्ञेश्वर ! यथा स्तोमास्त्वामवीवृधन् अत्यन्तं वर्धयन्ति, [2]यथा च त्वमुक्था[उक्था]नि स्तुतिसाधकानि वर्धितानि कृतवान्, तथैव नो गिरस्त्वां वर्धन्तु सर्वथा प्रकाशयन्तु ।। ८ ।।

**अत्र लुप्तोपमालङ्कारः ।**

**भावार्थः**—[3]यथा ये विश्वस्मिन् पृथिवीसूर्यादयः सृष्टाः पदार्थाः सन्ति, ते सर्वे सर्वकर्त्तारं परमेश्वरं ज्ञापयित्वा तमेव[4] प्रकाशयन्ति, [5]तथैतानुपकारानीश्वरगुणांश्च सम्यग् विदित्वा विद्वांसोऽपीदृश एव कर्मणि प्रवर्त्तेरन्निति ।। ८ ।।

ईश्वर ने उक्त अर्थ के प्रकाश के लिये इन्द्र शब्द के अर्थ का अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—हे (शतक्रतो) असंख्यात कर्मों के करने और अनन्त विज्ञान के जाननेवाले परमेश्वर ! जैसे (स्तोमाः) वेद के स्तोत्र, तथा (उक्था) प्रशंसनीय स्तोत्र

---

१. ऋग्भाष्य १।४।८, ६ ।।

२. अत्र 'यथा च···कृतवान्' पाठोऽसम्बद्ध इव प्रतिभाति । यथा पदार्थस्तथा स्यात्—'यथा च त्वामुक्थानि स्तुतिसाधनानि वर्धयन्ति' इत्येवं पाठेन भाव्यम् । यथामुद्रिते पाठे मन्त्रस्थं त्वां पदमपि व्यक्तं भवति । ३. क. ग. कोशयोः 'यथा' नास्ति ।

४. ग. कोशे 'तमेव धन्यवादैः प्रकाशयन्ति' इति पाठः । स च मुद्रणेऽनादृतः स्यात्' अनावश्यकत्वात् ।

५. क. ग. कोशयोः 'तथा' नास्ति ।

**अथ तयोर्बहिरन्तःकार्य्यमुपदिश्यते—**

**वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् । मक्ष्वित्था धिया नरा ॥ ६ ॥**

वायो इति । इन्द्रः । च । सुन्वतः । आ । यातम् । उप । निःऽकृतम् ॥ मक्षु । इत्था । धिया । नरा ॥६॥

**पदार्थः**—(वायो) हे[1] सर्वान्तर्यामिन्नीश्वर ! (इन्द्रश्च) अन्तरिक्षस्थः सूर्य्यप्रकाशो वायुश्च[2] । इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा । अ० ५।२।९३ इति सूत्राशयादिन्द्रशब्देन जीवस्यापि ग्रहणम् । प्राणो वै वायुः । श० ८ । १ । ७ । २ । अत्र वायुशब्देन प्राणस्य ग्रहणम् । (सुन्वतः) अभिनिष्पादयतः (आ) समन्तात् (यातम्) प्राप्नुतः । अत्र व्यत्ययः । (उप) समीप्यम्[3] (निष्कृतम्) कर्मणां सिद्धिः[4] फलं च (मक्षु) त्वरितगत्या । मक्ष्विति क्षिप्रनामसु पठितम् । निघं २ । १५ । (इत्था) धारणपालनवृद्धिक्षयहेतुना । था हेतौ च च्छन्दसि । अ० ५ । ३ । २६ इति थाप्रत्ययः । (धिया) धारणावत्या बुद्धया कर्मणा वा । धीरिति प्रज्ञानामसु पठितम् । निघं० ३ । ९ ॥ कर्मनामसु च । निघं० २ । १ । (नरा) [5]नयनकर्त्तारौ । सुपां सुलुग्० [अ० ७ । १ । ३९] इत्याकारादेशः ॥६॥

**अन्वयः**—हे वायो ! नरा नराविन्द्रश्चेन्द्रवायू मक्ष्वित्था यथा सुन्वतस्तथा तौ धिया निष्कृतमुपायातमुपायतः ॥ ६ ॥

[6][अत्र श्लेषालङ्कारः ।]

**भावार्थः**—यथाऽत्र ब्रह्माण्डस्थाविन्द्रवायू सर्वप्रकाशकपोषकौ स्तः, एवं शरीरे जीवप्राणावपि । परन्तु सर्वत्रेश्वराधारापेक्षाऽस्तीति ॥६॥

पूर्वोक्त इन्द्र और वायु के शरीर के भीतर और बाहरले कार्य्यों का अगले मन्त्र में उपदेश किया है—

**पदार्थान्वयभाषा**—[7]हे (वायो) सबके अन्तर्यामी ईश्वर ! आपके धारण किये हुए (नरा)

---

की सत्ता के अवलम्ब से उक्त इन्द्र और वायु अपने-अपने कार्य करने में समर्थ होते हैं, यह वर्णन किया है ।' इस प्रकार छपा है । यह भावार्थ क. कोश में पठित संस्कृत-भावार्थानुसारी है । क. कोश का संस्कृत-भावार्थ इस प्रकार है—'अत्र मन्त्रे परमेश्वरस्यैव सत्तामाश्रित्यैतौ स्वकार्यकरणे समर्थौ स्त इति ।'

१. 'हे' पदं क. ख. ग. कोशेषूपलभ्यते ।

२. वै० य० मुद्रितेषु संस्करणेषु 'वायुर्वा' इत्यपपाठः । मन्त्रे समुच्चयार्थकस्य चकारस्य पाठात् ।

३. 'सामीप्ये' इति साधुतरं स्यात् ।  ४. 'सिद्धिः' पदं क. ख. ग. कोशेषूलभ्यते ।

५. भौतिकपक्षे 'सर्वजगत्पदार्थानाम्' इति शेषः, शरीरपक्षे 'सर्वधातुरसानाम्' इति शेषः । द्रष्टव्यो भाषा-पदार्थः । ख. कोशे तु 'सर्वजगत्पदार्थानां नयनकर्त्तारौ' इति पदार्थ एव पठ्यते ।

६. मन्त्रस्थयोरिन्द्रवायुशब्दयोर्द्विविधार्थनिर्देशादावश्यकः पाठः ।

७. वै० य० मुद्रित संस्करणों में दोनों अर्थ संक्षिप्त तथा अधूरे छपे हैं । हमने उन्हें पृथक् पृथक् पूर्ण करके छापा है ।

असंख्यात सुख देनेवाले (वाजम्) पदार्थों के विज्ञान को सम्यक् सेवन करावे, कि जिससे हम लोग उत्तम-उत्तम सुखों को प्राप्त हों ॥ ९ ॥

**भावार्थ**—जिसकी सत्ता से संसार के पदार्थ बलवान् होकर अपने-अपने व्यवहारों में वर्त्तमान हैं, उन सब बल आदि गुणों से उपकार लेकर विश्व के नाना प्रकार के सुख भोगने के लिये हम लोग पूर्ण पुरुषार्थ करें। तथा ईश्वर इस व्यवहार में हमारा सहाय करे। इसलिये हम लोग ऐसी प्रार्थना करते हैं ॥ ९ ॥



**कस्य रक्षणेन पुरुषार्थः सिद्धो भवतीत्युपदिश्यते—**

मा नो॒ मर्ता॑ अ॒भि द्रु॑हन् त॒नूना॑मिन्द्र गिर्वणः । ईशा॑नो यवया व॒धम् ॥ १० ॥

मा । नः॒ । मर्ताः॑ । अ॒भि । द्रु॒ह॒न् । त॒नूना॑म् । इ॒न्द्र॒ । गि॒र्व॒णः॒ ॥ ईशा॑नः । य॒व॒य॒ । व॒धम् ॥ १० ॥

**पदार्थः**—(मा) निषेधार्थे (नः) **अस्माकमस्मान् वा** (मर्त्ताः) **मरणधर्माणो मनुष्याः।** मर्ता इति मनुष्यनामसु पठितम्। निघं० २।३। (**अभिद्रुहन्**) **अभिद्रुह्यन्त्वभिजिघांसन्तु। अत्र व्यत्ययेन शो लोडर्थे लुङ् च।** (तनूनाम्) शरीराणां, **विस्तृतानां पदार्थानां वा** (**इन्द्र**) **सर्वरक्षकेश्वर** ! (गिर्वणः) **वेदशिक्षाभ्यां संस्कृताभिर्गीर्भिर्वन्यते सम्यक् सेव्यते यस्तत्संबुद्धौ** (**ईशानः**) **योऽसावीष्टे** ([1]**यवय**) **मिश्रय।** प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च [अ० ३। १। २६ वा०] **इति यवशब्दाद्धात्वर्थे णिच्।** अन्येषामपि दृश्यते। अ० ६। ३। १३६ **इति दीर्घः।** (**वधम्**) **हननम्** ॥ १० ॥

**अन्वयः**—हे गिर्वणः **सर्वशक्तिमन्निन्द्र परमेश्वर** ! ईशानस्त्वं नोऽस्माकं तनूनां वधं मा यवय। **इमे** मर्त्ताः **सर्वे प्राणिनोऽस्मान्** मा[2] अभिद्रुहन् **मा जिघांसन्तु** ॥ १० ॥

भावार्थः—**नैव कोऽपि मनुष्योऽन्यायेन कंचिदपि प्राणिनं** हिंसितुमिच्छेत्, **किंतु सर्वैः सह मित्रतामाचरेत्। यथेश्वरः कञ्चिदपि नाभिद्रुह्यति, तथैव सर्वैर्मनुष्यैरनुष्ठातव्यमिति** ॥ १० ॥

**अनेन पञ्चमेन सूक्तेन मनुष्यैः कथं पुरुषार्थः कर्त्तव्यः सर्वोपकारश्चेति [उक्तम्, तस्य] चतुर्थेन सूक्तेन सह सङ्गतिरस्तीति विज्ञेयम्** ॥

**इदमपि सूक्तं** सायणाचार्य्यादिभिर्विलसनाख्यादिभिश्चान्यथा**र्थं वर्णितम्** ॥

**इति पञ्चमं सूक्तं दशमश्च वर्गः समाप्तः** ॥

किसकी रक्षा से पुरुषार्थ सिद्ध होता है, इस विषय का प्रकाश ईश्वर ने अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे (गिर्वणः) वेद वा उत्तम-उत्तम शिक्षाओं से शुद्ध की हुई वाणियों

१. वै० य० मुद्रितेषु संस्करणेषु 'यवया' इत्यपपाठः, अन्वये शुद्ध एव पाठो दृश्यते।

२. पदमिदं पूर्वपठितमेवानुषज्यतेऽत्र।

करके सेवा करने योग्य सर्वशक्तिमान् (इन्द्र) सबके रक्षक (ईशानः) परमेश्वर ! आप (नः) हमारे (तनूनाम्) शरीरों वा [अन्य पदार्थों] का (वधम्) नाश (मा) कभी मत (यवय) कीजिये। तथा आपके उपदेश उपदेश से ये (मर्त्ताः) सब मनुष्य लोग भी (नः) हमसे ([1]माभिद्रुहन्) वैर कभी न करें ॥ १० ॥

**भावार्थ**—कोई मनुष्य अन्याय से किसी प्राणी को मारने की इच्छा न करे, किन्तु परस्पर सब [सबके साथ] मित्रभाव से वर्त्तें। क्योंकि जैसे परमेश्वर विना अपराध से किसी का तिरस्कार नहीं करता, वैसे ही सब मनुष्यों को भी करना चाहिये ॥ १० ॥

इस पञ्चम सूक्त में मनुष्यों को किस प्रकार पुरुषार्थ और सबका उपकार करना चाहिये, इस विषय के कहने से चौथे सूक्त के अर्थ के साथ इसकी सङ्गति जाननी चाहिये ॥

इस सूक्त का भी अर्थ **सायणाचार्य्य** आदि और **डाक्टर विलसन** आदि साहबों ने उलटा किया है ॥

यह पांचवां सूक्त और दशवां वर्ग समाप्त हुआ ॥



अथ दशर्च्चस्य षष्ठस्य सूक्तस्य मधुच्छन्दा ऋषिः। १—३ इन्द्रः; ४, ६, ८, ९ मरुतः; ५, ७ मरुत इन्द्रश्च, १० इन्द्रश्च देवताः। १, ३, ५—७, ९, १० गायत्री; २ विराड्गायत्री ४, ८ निचृद्गायत्री च छन्दः। षड्जः स्वरः ॥

**[2]तत्रोक्तविद्यार्थ केऽर्था उपयोक्तव्या इत्युपदिश्यते—**

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः। रोचन्ते रोचना दिवि ॥ १ ॥

युञ्जन्ति। ब्रध्नम्। अरुषम्। चरन्तम्। परि। तस्थुषः ॥ रोचन्ते। रोचना। दिवि ॥ १ ॥

**पदार्थः**—(**युञ्जन्ति**) **योजयन्ति** (**ब्रध्नम्**) **महान्तं परमेश्वरम्। शिल्पविद्यासिद्धय आदित्यमग्निं प्राणं वा।** ब्रध्न इति महन्नामसु पठितम्। निघं० ३।३।[3] (**अरुषम्**) **सर्वेषु मर्मसु सीदन्तमहिंसकं परमेश्वरं प्राणवायुं, तथा बाह्ये देशे रूपप्रकाशकं रक्तगुणविशिष्टमादित्यं वा।** अरुषमिति रूपनामसु पठितम्। निघं० ३।७। (**चरन्तम्**) **सर्वं जगज्जानन्तं, सर्वत्र व्याप्नुवन्तम्** (**परि**) **सर्वतः** (**तस्थुषः**) **तिष्ठन्तीति तान् सर्वान् स्थावरान्** पदार्थान् **मनुष्यान्**

१. 'मा' पद मन्त्र में एक बार पढ़ा है, उसी का दुबारा संयोग किया है।

२. वै० य० मुद्रितेषु संस्करणेषु (सं० १-३) 'तन्त्रो०' इत्यपपाठः। चतुर्थसंस्करणे 'मन्त्रो०' इति भ्रष्टतरं शोधनं विहितम्।

३. इतोऽग्रे वै० य० मुद्रितेषु संस्करणेषु 'अश्वनामसु च। निघं० १।१४।' इत्येतावान् अधिकः पाठ उपलभ्यते। स प्रकृते संबंधाभावाद् भावार्थाते च मरवपरस्यार्थस्य प्रत्याख्यानाद् अस्माभिर्निराकृतः।

वा[1]। तस्थुष इति मनुष्यनामसु पठितम्। निघं० २।३। (रोचन्ते) प्रकाशन्ते रुचिहेतवश्च भवन्ति (रोचनाः) प्रकाशिताः प्रकाशकाश्च (दिवि) द्योतनात्मके ब्रह्मणि सूर्य्यादिप्रकाशे वा ॥

अयं मन्त्रः शतपथेऽप्येवं व्याख्यातः—युञ्जन्ति ब्रध्नमरुषं चरन्तमिति। असौ वा आदित्यो ब्रध्नोऽरुषोऽमुमेवाऽस्मा आदित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्यै। श० १३।१।१५।१॥ १॥

अन्वयः—ये मनुष्या अरुषं ब्रध्नं परितस्थुषश्चरन्तं परमात्मानं स्वात्मनि बाह्यदेशे सूर्य्यं वायुं वा युञ्जन्ति, ते रोचनाः सन्तो दिवि प्रकाशे रोचन्ते प्रकाशन्ते[2]॥ १॥

[अत्र श्लेषालंकारः।][3]

भावार्थः—ईश्वर उपदिशति—ये खलु विद्यासंपादने उद्युक्ता भवन्ति तानेव सर्वाणि सुखानि प्राप्नुवन्ति। तस्माद् विद्वांसः पृथिव्यादिपदार्थेभ्य उपयोगं संगृह्योपग्राह्य च सर्वान् प्राणिनः सुखयेयुरिति॥

यूरोपदेशवासिना भट्टमोक्षमूलराख्येनास्य मन्त्रस्यार्थो रथेऽश्वस्य योजनरूपो गृहीतः, सोऽन्यथास्तीति भूमिकायां[4] लिखितम्॥ १॥

छठे सूक्त के प्रथम मन्त्र में यथायोग्य कार्य्यों में किस प्रकार से किन-किन पदार्थों को संयुक्त करना चाहिये, इस विषय का उपदेश किया है—

पदार्थान्वयभाषा—[5]जो मनुष्य (अरुषम्) अङ्ग-अङ्ग में व्याप्त होनेवाले, हिंसारहित (ब्रध्नम्) महान् परमेश्वर, जो (परितस्थुषः) सब मनुष्य वा स्थावर जंगम पदार्थ अर्थात् चराचर जगत् को (चरन्तम्) जानता वा सब में व्याप्त हो रहा है, उसको उपासना योगद्वारा अपनी आत्मा में (युञ्जन्ति) प्राप्त होते हैं, वे (रोचनाः) ज्ञान से प्रकाशमान होके (दिवि) प्रकाशरूप परमेश्वर में (रोचन्ते) आनन्द से प्रकाशित होते हैं। [इत्येकः]॥

जो मनुष्य (अरुषम्) रूप का प्रकाश करने, तथा अग्निरूप होने से लालगुणयुक्त (ब्रध्नम्) महान् सूर्य और अग्नि, जो (परितस्थुषः) चराचर जगत् में (चरन्तम्) सर्वत्र गमन करनेवाला है, उसको शिल्पविद्या में (युञ्जति) सब प्रकार से युक्त करते हैं, वे (रोचनाः) तेजस्वी होके

---

१. क. ग.कोशयोः 'वा' पदं नास्ति। तथा पदेनास्यार्थस्य संग्रहादनावश्यकः।

२. अन्वयोऽयमध्यात्माधिदैवोभयार्थपरः तद्द्वैत निर्दिष्टः। भूमिकायाम (पृष्ठ १८९-१९०) अपि त्रिविधोऽर्थो निर्दिष्टः।

३. अन्वस्य त्रिविधार्थनिर्देशादत्र श्लेषालङ्कारस्य निर्देश आवश्यकः।

४. अत्र भूमिकास्थः पूर्वत्र १९० तमे निर्दिष्टः 'परमेश्वरान्महान्' इत्यारभ्य 'प्रमाणार्हं नास्तीति' इत्यन्तः पाठोऽनुसन्धेयः। अयमेवाभिप्रायो ग्रन्थकृता स्वीये सत्यार्थप्रकाशस्यैकादशसमुल्लासस्यारम्भे (पृष्ठ ४१२, रा.ला.क.ट्र.सं.)ऽपि प्रकाशितः।

५. यहां वै० य० मुद्रित संस्करणों में भावार्थ में कई अर्थों का मिला-जुला निर्देश है। हमने सभी अर्थों का सरलता के लिये पृथक् पृथक् निर्देश कर दिया है।

(दिवि) सूर्यादि के गुणों के प्रकाश में (रोचन्ते) नित्य उत्तम-उत्तम आनन्द से प्रकाशित होते हैं। [इति द्वितीयः] ॥

जो मनुष्य ( अरुषम् ) अङ्ग-अङ्ग में व्याप्त होनेवाले, हिंसन स्वभाव से रहित अर्थात् शरीरावयवों को बढ़ानेवाले ( ब्रध्नम् ) महान् प्राण वायु को, ( परितस्थुषः ) सम्पूर्ण शरीर में (चरन्तम्) जो गति करनेवाला है उसको, प्राणायाम की रीति से (युञ्जन्ति) युक्त (=वश में) करते हैं, वे ( रोचनाः ) ज्ञान से प्रकाशमान होके ( दिवि ) प्रकाशरूप परमात्मा वा आत्मा में ( रोचन्ते ) आनन्द से प्रकाशित होते हैं [ इति तृतीयः ] ॥

[इस मन्त्र में श्लेषालंकार है।][1]

**भावार्थ**—ईश्वर उपदेश करता है—जो लोग विद्यासंपादन में निरन्तर उद्योग करनेवाले होते हैं, उन्हींको सब सुख प्राप्त होते हैं। इसलिये विद्वानों को उचित है कि पृथिवी आदि पदार्थों से उपयोग लेकर और उपयोग कराकर सब प्राणियों को सुख पहुंचावें ॥

जो यूरोपदेशवासी मोक्षमूलर साहब आदि ने इस मन्त्र का अर्थ घोड़े को रथ में जोड़ने का किया है, सो ठीक नहीं। इसका खण्डन भूमिका[2] में लिख दिया है, वहां देख लेना चाहिये ॥१॥



**उक्तार्थस्य कीदृशौ गुणौ स्व योक्तव्याविव्युपदिश्यते—**

**युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे। शोणा धृष्णू नृवाहसा ॥ २ ॥**

युञ्जन्ति। अस्य। काम्या। हरी इति। विऽपक्षसा। रथे॥ शोणा। धृष्णू इति। नृऽवाहसा ॥२॥

---

१. संस्कृतभाष्य तथा अजमेर-मुद्रित भाषार्थ में कोष्ठान्तर्गत पाठ नहीं है। परन्तु मन्त्र के दो आध्यात्मिक तथा एक आधिदैविक=तीन प्रकार के अर्थ दर्शाये गये हैं। ये तीन प्रकार के अर्थ विना श्लेषालंकार के उपपन्न नहीं होते, अतः यह पाठ आवश्यक है।

२. द्र०—भूमिका पूर्व पृष्ठ १९१ 'इन तीनों अर्थों में' से लेकर 'कपोल कल्पना की है' यहां तक का पाठ। इसका स्पष्टीकरण इस प्रकार जानें—

"यद्यपि यास्क के निघण्टु में 'ब्रध्न' और 'अरुष' ये दोनों नाम 'घोड़े' के भी पढ़े गये हैं, परन्तु इस अर्थ का प्रकृत मन्त्रार्थ में कोई भी उपयोग नहीं है। क्योंकि शतपथादि अनेक ग्रन्थों के व्याख्यान से, और मूल अर्थ से इसका विरोध है। एक शब्द के अनेक अर्थ हो सकते हैं, परन्तु उसका यह अभिप्राय नहीं कि सभी एक ही स्थान पर उपयुक्त हों। इसलिये भट्ट मोक्षमूलर साहिब ने इस मन्त्र के अंग्रेजी भाष्य में 'घोड़े' का जो अर्थ किया है, वह ठीक नहीं है। सायणाचार्य ने इस मन्त्र की व्याख्या में आदित्य का ग्रहण किया है, अतः एक अंश में उसकी व्याख्या ठीक है। परन्तु न जाने भट्ट मोक्षमूलर ने अपना अर्थ कहां से लिया है? उसकी केवल कल्पनामात्र है, अतः अप्रामाणिक है।"

इस मन्त्र के सम्बन्ध में यही बात ऋषि दयानन्द ने 'सत्यार्थप्रकाश' (पृष्ठ ४१२, रालाकट् सं०) में लिखी है—"मोक्षमूलर साहब ने······युञ्जति······इस मन्त्र का अर्थ घोड़ा किया है, इससे तो जो सायणाचार्य्य ने सूर्य अर्थ किया है, सो अच्छा है"।

पदार्थः—( युञ्जन्ति ) युञ्जन्तु। अत्र लोडर्थे लट्। ( अस्य ) सूर्य्यस्याग्नेः ( काम्या ) कामयितव्यौ। अत्र सर्वत्र सुपां सुलुग्० ( अ० ७।१।३९ ) इत्याकारादेशः। ( हरी ) हरणशीलावाकर्षणवेगगुणौ। पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी, ताभ्यामिदꣳ सर्वं हरतीति। षड्विंश ब्रा० प्रपा० १। खण्डः १। ( विपक्षसा ) विविधानि यन्त्रकलाजलचक्रभ्रमणयुक्तानि पक्षांसि पार्श्वे स्थितानि ययोस्तौ ( रथे ) रमणसाधने भूजलाकाशगमनार्थे याने। यज्ञसंयोगाद्राजा स्तुतिं लभेत, राजसंयोगाद्युद्धोपकरणानि। तेषां रथः प्रथमागामी भवति। रथो रंहतेर्गतिकर्मणः स्थिरतेर्वा स्याद्विपरीतस्य, रममाणोऽस्मिंस्तिष्ठतीति वा, रपतेर्वा रसतेर्वा। निरु० ९।११। रथ इति पदनामसु पठितम्। निघं० ५।३। आभ्यां प्रमाणाभ्यां रथशब्देन विशिष्टानि यानानि गृह्यन्ते। ( शोणा ) वर्णप्रकाशकौ गमनहेतू च ( धृष्णू ) दृढौ ( नृवाहसा ) सम्यग्योजितौ [ यौ ] नॄन् वहतस्तौ॥ २॥

अन्वयः—हे विद्वांसोऽस्य [काम्या] काम्यौ [शोणा] शोणौ धृष्णू [विपक्षसा] विपक्षसौ [ नृवाहसा ] नृवाहसौ हरी रथे युञ्जन्ति युञ्जन्तु॥ २॥

भावार्थः—ईश्वर उपदिशति—न यावन्मनुष्या भूजलाग्न्यादिपदार्थानां गुणज्ञानोपकारग्रहणाभ्यां भूजलाकाशगमनाय यानानि संपादयन्ति, नैव तावत्तेषां दृढे राज्यश्रियौ सुखे भवतः॥ २॥

शारमण्यदेशनिवासिना [मोक्षमूलरेणा]ऽस्य मन्त्रस्य विपरीतं व्याख्यानं कृतमस्ति। तद्यथा—'अस्येति सर्वनाम्नो निर्देशात् स्पष्टं गम्यत इन्द्रस्य ग्रहणम्। कुतः, रक्तगुणविशिष्टावश्वावस्यैव संबन्धिनौ भवतोऽतः। नात्र खलु सूर्य्याग्न्योर्ग्रहणम्। कुतः, प्रथममन्त्र एकस्याश्वस्याभिधानात्'[1] इति।

मोक्षमूलरकृतोऽर्थः सम्यङ् नास्तीति। कुतः, अस्येति पदेन भौतिकपदार्थयोः सूर्य्याग्न्योर्ग्रहणं, न कस्यचिद्देहधारिणः। हरी इति सूर्य्यस्य धारणाकर्षणगुणयोर्ग्रहणम्, शोणेति पदेनाग्ने रक्तज्वालागुणयोर्ग्रहणम्[2]। पूर्वमन्त्रे अध्नाभिधान[3] एकवचनं जात्यभिप्रायेण चास्त्यतः। इदं शब्दप्रयोगः खलु प्रत्यक्षार्थवाचित्वात् संनिहितार्थस्य सूर्य्यादेरेव[4] ग्रहणाच्च तत्कल्पितोऽर्थोऽन्यथैवास्तीति॥ २॥

उक्त सूर्य और अग्नि आदि के कैसे गुण हैं, और वे कहां-कहां उपयुक्त करने योग्य हैं, सो अगले मन्त्र में उपदेश किया है—

पदार्थान्वयभाषा—हे विद्वान् लोगो! (अस्य) सूर्य और अग्नि के (काम्या) सब के इच्छा करने योग्य, ( शोणा ) अपने-अपने वर्ण के प्रकाश करनेहारे वा गमन के हेतु, ( धृष्णू ) दृढ़,

---

१. नैवमूलरेण पूर्वमन्त्रे अध्न पदस्याश्वार्थं गृहीत्वेदमुक्तम्। मन्त्रे अध्नमेकवचनान्तं श्रूयते।

२. वै० य० मुद्रितेषु संस्करणेषु 'ग्रहणार्हेण' इत्यपपाठः।

३. वै० य० मुद्रितेषु संस्करणेषु 'ऽश्वाभिधानमित्यपपाठः। पूर्वमन्त्रे अध्नं श्रूयते नाश्वः। न च भाष्यकारेण ब्रध्नस्य तत्राश्वरूपोऽर्थो गृह्यते।

४. अध्नपदाभिधेयस्येत्यर्थः।

(विपक्षसा) विविध कला और जल के घूमनेवाले चक्र=पांखरूप यन्त्रों से युक्त, अच्छी प्रकार सवारियों में जुड़े हुए, (नृवाहसा) मनुष्यादिकों को देशदेशान्तर में पहुंचानेवाले (हरी) आकर्षण और वेग, तथा शुक्लपक्ष और कृष्णपक्षरूप दो घोड़े जिनसे सब का हरण किया जाता है, इत्यादि श्रेष्ठ गुणों को पृथिवी जल और आकाश में जाने-आने के लिये अपने-अपने [(रथे)] रथों में (युञ्जन्ति) जोड़ें ॥

**भावार्थ**—ईश्वर उपदेश करता है कि—मनुष्य लोग जब तक भू जल आदि पदार्थों के गुण-ज्ञान और उनके उपकार-[ग्रहण से] भू जल और आकाश में जाने-आने के लिये अच्छी सवारियों को नहीं बनाते, तब तक उनको दृढ़ राज्य और धन आदि उत्तम सुख नहीं मिल सकते ॥

जरमन देश के रहनेवाले **मोक्षमूलर** साहब ने इस मन्त्र का विपरीत व्याख्यान किया है। सो यह है कि—'(अस्य) सर्वनामवाची इस शब्द के निर्देश से स्पष्ट मालूम होता है कि इस मन्त्र में इन्द्र देवता का ग्रहण है। क्योंकि लाल रंग के घोड़े इन्द्र ही के हैं। और यहां सूर्य तथा उषा का ग्रहण नहीं। क्योंकि प्रथम मन्त्र में एक घोड़े' का ही ग्रहण किया है।'

यह उनका अर्थ ठीक नहीं। क्योंकि 'अस्य' इस पद से भौतिक जो सूर्य और अग्नि हैं, इन्हीं दोनों का ग्रहण है, किसी देहधारी का नहीं। 'हरी' इस पद से सूर्य के धारण और आकर्षण गुणों का ग्रहण, तथा 'शोणा' इस शब्द से अग्नि की लाल लपटों का ग्रहण होता है। और पूर्व मन्त्र में एक 'अध्न'[२] का ग्रहण जाति के अभिप्राय से अर्थात् एकवचन से अध्न[३] जाति का ग्रहण होता है। और 'अस्य' यह शब्द प्रत्यक्ष अर्थ का वाची होने से [पूर्वमन्त्र में अध्न पद से कहे गये] सूर्य्यादि प्रत्यक्ष पदार्थों का ग्राहक होता है, इत्यादि हेतुओं से मोक्षमूलर साहब का अर्थ सच्चा नहीं ॥ २ ॥



**येनेमे पदार्था उत्पादिताः स कीदृश इत्युपदिश्यते—**

**केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥३॥**

केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे ॥ सम् । उषत्ऽभिः । अजायथाः ॥३॥

**पदार्थः**—(**केतुम्**) प्रज्ञानम् । केतुरिति प्रज्ञानामसु पठितम् । निघं० ३ । ९ । (**कृण्वन्**) **कुर्वन् सन् । 'इवं कृवि हिंसाकरणयोश्च इत्यस्य रूपम् । (अकेतवे) अज्ञानान्धकारविनाशाय' (पेशः)**

---

१. मोक्षमूलर ने एकवचनान्त 'अध्न' का अर्थ अश्व किया है। इस दृष्टि से यहां एक 'अश्व' का निर्देश है।

२. वै० य० मुद्रित संस्करणों में 'अश्व' छपा है, वह अशुद्ध है। क्योंकि ऋ० द० ने पूर्व मन्त्र में अश्व अर्थ का खण्डन किया है।

३. इदमभिप्रायनिदर्शनमात्रम्, नार्थनिदर्शनपरम् । अर्थस्त्वस्य—'अविद्यमानप्रज्ञाय जनाय' इत्येवं ज्ञेयः । द्र०—ग्रन्थकारीयं यजुर्वेदभाष्ये २९।३७ मन्त्रव्याख्याने ।

हिरण्यादिधनं श्रेष्ठं रूपं वा। पेश इति हिरण्यनामसु पठितम्। निघं० १। २। रूपनामसु च। निघं० ३। ७। ( **मर्य्याः** ) **मरणधर्मशीला मनुष्याः, तत्संबोधने।** मर्य्या इति मनुष्यनामसु पठितम्। निघं० २। ३। ( **अपेशसे** ) **निर्धनतादारिद्र्यादिदोषविनाशाय**[1] ( **सम्** ) **सम्यगर्थे** ( **उषद्भिः** ) **ईश्वरादिपदार्थविद्याः कामयमानैर्विद्वद्भिः सह समागमं कृत्वा**[2] ( **अजायथाः** ) **एतद्विद्या-प्राप्त्या प्रकटो भव**[3]। **अत्र लोडर्थे लङ्** ॥ ३ ॥

**अन्वयः**—हे मर्य्याः ! यो **जगदीश्वरोऽकेतवे** केतुमपेशसे पेशः कृण्वन् सन् **वर्त्तते, तं सर्वा विद्याश्च समुषद्भिः सह समागमं कृत्वा यूयं यथावद्विजानीत। तथा हे जिज्ञासो मनुष्य ! त्वमपि तत्समागमेनाऽजायथा एतद्विद्याप्राप्त्या प्रसिद्धो भव**[3] ॥ ३ ॥

**भावार्थः—मनुष्यै रात्रेश्चतुर्थे प्रहर आलस्यं त्यक्त्वोत्थायाज्ञानदारिद्र्यविनाशाय नित्यं प्रयत्नवद्भिर्भूत्वा**[4] **परमेश्वरस्य ज्ञानं पदार्थेभ्य उपकारग्रहणं च कार्य्यमिति**[5] ॥ ३ ॥

'**यद्यपि** मर्य्या **इति विशेषतयाऽत्र कस्यापि नाम न दृश्यते, तदप्यत्रेन्द्रस्यैव ग्रहणमस्तीति निश्चीयते। हे इन्द्र ! त्वं प्रकाशं जनयसि, यत्र पूर्वं प्रकाशो नाभूत्।'** इति मोक्षमूलर**कृतोऽर्थो-ऽसङ्गतोऽस्ति। कुतः ? मर्य्या इति मनुष्यनामसु पठितत्वात्** (निघं० २। ३)। [6]**अजायथा इति लोडर्थे लङ् विधानेन मनुष्यकर्तृकत्वेन पुरुषव्यत्ययेन प्रथमार्थे मध्यमविधानादिति ॥ ३ ॥**

जिसने संसार के सब पदार्थ उत्पन्न किये हैं, वह कैसा है, यह बात अगले मन्त्र में प्रकाशित की है—

**पदार्थान्वयभाषा**—हे (मर्य्याः) मनुष्य लोगो ! जो परमात्मा ( अकेतवे ) अज्ञानरूपी

१. इदमप्यभिप्रायप्रदर्शनपरमेव। पदार्थस्त्वस्य—'अविद्यमानं पेशः सुवर्णं रूपो वा यस्य तस्मै। अत्राऽपि यजुर्भाष्यं (२९·३७) द्रष्टव्यम्।

२. 'सह समागमं कृत्वा' इत्यध्याहृतानि पदानि। वस्तुतस्त्वेतानि नात्रावश्यकानि, अन्वय एवैषामुप-योगस्थानम्। तत्र च पठ्यन्त एव।

३. अस्य मन्त्रस्य व्याख्यानान्ते मोक्षमूलरीयार्थप्रत्याख्याने 'पुरुषव्यत्ययेन प्रथमार्थे मध्यमविधानात्' इत्युक्तम्। अस्यैव सूक्तस्य पञ्चमन्त्रपदार्थे '(अविन्दः) लभते, पूर्ववदत्र पुरुषव्यत्ययः' इतिवचनाच्च प्रतीयते यदत्र प्रथमं 'प्रकटो भवति' इति पाठ आसीत्। स च शोधनावसरे परिमृज्य 'प्रकटो भव' इत्येवं रूपेण परिणीतः। पूर्वनिर्दिष्टयोर्द्वयोरपि स्थानयोः पाठशोधनं नाभूत्, इति कृत्वा विरोध इहापतति। अस्मन्मते तु पूर्वसङ्केतितावुल्लेखौ निष्प्रयोजनौ। 'पक्षान्तरैरपि परिहारा भवन्ति' इति तु नात्र शक्यं वक्तुम्। एकस्य प्रथमपुरुषरूपस्यार्थस्य भूतपूर्वत्वात्, विद्यमानार्थस्य च संशोध्य विहितत्वात्। पक्षान्तराश्रयणं तु तत्रैव भवति, यत्रोभौ पक्षौ समानबलौ भवतः।

४. वै० य० मुद्रिते 'प्रयत्नवन्तो भूत्वा' इत्यपपाठः। क. कोशे तु 'प्रयत्नो विधेयः' पाठ उपलभ्यते।

५. अत्रेदं मनुवचनमनुसन्धेयम्—

ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत्। कायक्लेशांश्च तन्मूलान् वेदतत्त्वार्थमेव च ॥४।९२॥

६. अस्मन्मते 'अजायथा इति ··विधानादिति' पंक्तिरत्र निष्प्रयोजना। सत्यां चास्यां पदार्थान्वयास्थां विरोधोऽप्यापतति। विशेषस्त्वास्मिन्नेव पृष्ठे यतीयटिप्पण्यां द्रष्टव्यः।

अन्धकार के विनाश के लिये ( केतुम् ) उत्तम ज्ञान, और ( अपेशसे ) निर्धनता दारिद्र्य तथा कुरूपता के विनाश के लिये ( पेशः ) सुवर्ण आदि धन और श्रेष्ठ रूप को ( कृण्वन् ) उत्पन्न करता है, उसको तथा सब विद्याओं को ( समुषद्भिः ) जो ईश्वर की आज्ञा के अनुकूल वर्त्तनेवाले हैं, उनसे मिलकर जानो। तथा हे जानने की इच्छा करनेवाले मनुष्य ! तू भी उस परमेश्वर के समागम से ( अजायथाः ) इस विद्या को यथावत् प्राप्त हो ॥ ३ ॥

**भावार्थ**—मनुष्यों को प्रति रात्रि के चौथे प्रहर में आलस्य छोड़कर फुरती से उठकर अज्ञान और दरिद्रता के विनाश के लिये प्रयत्नवाले होकर, तथा परमेश्वर के ज्ञान और संसारी पदार्थों से उपकार लेने के लिये उत्तम उपाय सदा करना चाहिये ॥ ३ ॥

'यद्यपि **मर्य्याः** इस पद से किसी का नाम नहीं मालूम होता, तो भी यह निश्चय करके जाना जाता है कि इस मन्त्र में 'इन्द्र' का ही ग्रहण है कि—हे इन्द्र ! तू वहां प्रकाश करनेवाला है, कि जहां पहिले प्रकाश नहीं था।' यह **मोक्षमूलरजी** का अर्थ असङ्गत है। क्योंकि 'मर्य्याः' यह शब्द मनुष्य के नामों में निघण्टु में पढ़ा है। तथा 'अजायथाः' यह प्रयोग पुरुषव्यत्यय से प्रथम पुरुष' के स्थान में मध्यम पुरुष का प्रयोग किया है ॥ ३ ॥



**अथ मरुतां कर्मोपदिश्यते—**

## आदह स्वधामनु पुनर्गर्भत्वमेरिरे। दधाना नाम यज्ञियम् ॥ ४ ॥

आत्। अह। स्वधाम्। अनु। पुनः। गर्भऽत्वम्। आऽईरिरे॥ दधानाः। नाम। यज्ञियम् ॥४॥

**पदार्थः**—( **आत्** ) आनन्तर्य्यार्थे ( **अह** ) **विनिग्रहार्थे**। अह इति विनिग्रहार्थीयः। निघं० १।५। ( **स्वधाम्** ) **उदकम्**। स्वधेत्युदकनामसु पठितम्। निघं० १।१२। ( **अनु** ) **वीप्सायाम्** ( **पुनः** ) **पश्चात्** ( **गर्भत्वम्** ) गर्भस्याधिकरणा **वाक्** **तस्या भावस्तत्** ( **एरिरे** ) **समन्तात् प्राप्नुवन्तः**। 'ईर गतौ कम्पने च' **इत्यस्यामन्त्रे**[2] **इति प्रतिषेधादामोऽभावे प्रयोगः**।

---

१. यह पाठ संस्कृत-पदार्थ अन्वय तथा भावार्थ से विरुद्ध है। क्योंकि वहां 'अजायथाः' का मध्यम पुरुष में ही **अर्थ** दर्शाया है। प्रतीत होता है पहले संस्कृत पदार्थ में 'अजायथाः' का अर्थ 'प्रकटो भवति'= **'प्रकट होता है'** ऐसा किया होगा। उसी के अनुसार यह पङ्क्ति तथा अगले पांचवें मन्त्र के पदार्थ में '(**अविन्दः**) लभते। पूर्ववदत्र पुरुषव्यत्ययः' लिखा है। उससे भी विदित होता है कि यहां 'अजायथाः' का **अर्थ** पहले 'प्रकटो भवति' किया गया था। यहां संशोधन-काल में पाठ बदल दिया, परन्तु प्रकृतपंक्ति और **पांचवें** मन्त्र की पंक्ति पूर्वपाठानुसार बनी रह गई। अतः यह पंक्ति यहां युक्त प्रतीत नहीं होती। विशेष संस्कृत टिप्पणी में **लिख दिया है**। द्र०—पृ० ५२१, टि० ३, ६।

२. **'कास्प्रत्ययादाममन्त्रे लिटि'** ( अ० ३।१।३५ ) सूत्रे इति शेषः। **'सुपश्यपश्यताहै पूजायाम्'** (अ० ८।१।३९) इति निघाताभावे इरचः चित्त्वादन्तोदात्तत्वे **'उदात्तगतिमता च तिङा'** (अ० २।२।१८ वा०) इत्यनेन आङा सह समासे **'तिङि चोदात्तवति'** (अ० ८।१।७१) इत्यनेन गतिरनुदात्तः।

( दधानाः ) सर्वधारकाः ( नाम ) उदकम् । नामेत्युदकनामसु पठितम् । निघं० १ । १२ । (यज्ञियम्) यज्ञकर्मार्हतीति यज्ञियो देशस्तम् । तत्कर्मार्हतीत्युपसंख्यानम् । अ० ५ । १ । ७२ इति वार्तिकेन घः प्रत्ययः ।। ४ ।।

**अन्वयः**—यथा मरुतो यज्ञियं नाम दधानाः सन्तो यदा स्वधामन्वप्सु पुनर्गर्भत्वमेरिरे, तथा आत् अनन्तरं वृष्टिं कृत्वा पुनर्जलानामहेति विनिग्रहं कुर्वन्ति ।। ४ ।।

**भावार्थः**—यज्जलं सूर्याग्निभ्यां लघुत्वं प्राप्य कणीभूतं जायते, तद्धारणं घनाकारं [च] कृत्वा मरुत एव वर्षयन्ति, तेन सर्वपालनं सुखं च जायते ।।

'तदनन्तरं मरुतः स्वस्वभावानुकूल्येन बालकाकृतयो जाताः । यैः स्वकीयं शुद्धं नाम रक्षितम् ।' इति मोक्षमूलरोक्तिः 'प्रणाय्यास्ति[1] । कस्मात् ? न[2] खल्वत्र बालकाकृतिशुद्धनामरक्षणयोरविद्यमानत्वेनेन्द्रसंज्ञिकानाम् मरुतां सकाशादन्यार्थस्य ग्रहणं संभवत्यतः ।। ४ ।।

अगले मन्त्र में वायु के कर्मों का उपदेश किया है—

**पदार्थान्वयभाषा**—जैसे ही वायु (यज्ञियम्) यज्ञकर्म के योग्य देश और (नाम) जल को ( दधानाः ) सर्वतः धारण किये हुए [ जब ] ( स्वधामनु ) जलों में ( पुनः ) फिर-फिर ( गर्भत्वम् ) उनके समूहरूपी गर्भ को ( एरिरे ) सब प्रकार से प्राप्त होते हैं, वैसे ही ( आत् ) उसके उपरान्त वर्षा करके वार-वार जलों को [ (अह) आकाश में] चढ़ाते और वर्षाते हैं ।।४।।

**भावार्थ**—जो जल सूर्य्य वा अग्नि के संयोग से छोटा-छोटा हो जाता है, उसको धारण कर और मेघ के आकार का बनाके वायु ही उसे फिर-फिर वर्षाता है । उसी से सब का पालन और सब को सुख होता है ।।

'इसके पीछे वायु अपने स्वभाव के अनुकूल बालक के स्वरूप में बन गये, और अपना नाम पवित्र रख लिया ।' देखिये **मोक्षमूलर** साहब का किया अर्थ मन्त्रार्थ से विरुद्ध है । क्योंकि इस मन्त्र में बालक बनना और अपना पवित्र नाम रखना, यह बात ही नहीं है । यहां इन्द्र नामवाले वायु का ही ग्रहण है, अन्य किसी का नहीं ।। ४ ।।



तैः सह सूर्य्यः किं करोतीत्युपदिश्यते—

वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः । अविन्द उस्रिया अनु ।। ५ ।।

वीळु । चित् । आरुजत्नुऽभिः । गुहा । चित् । इन्द्र । वह्निऽभिः ।। अविन्दः । उस्रियाः । अनु ।।५।।

**पदार्थः**—( वीळु ) दृढं बलम् । वीळु इति पदनामसु पठितम् । निघं० २ । ९ । (चित्) उपमार्थे । [चिदित्युपमार्थे ।] निरु० १ । ४ । (आरुजत्नुभिः) समन्ताद् भञ्जद्भिः । आङ्पूर्वाद् रुजो

१. असम्मतेत्यर्थः । द्र०—'प्रणाय्योऽसम्मतौ' (अ० ३।१।१२८) ।

२. अस्य 'न' पदस्य वाक्यान्ते वर्तमानया 'सम्भवति' क्रियया सह सम्बन्धः ।

भञ्जे इत्यस्माद्धातोरौणादिकः [1]कत्नुम् प्रत्ययः । ( गुहा ) गुहायामन्तरिक्षे । सुपां सुलुग्० [अ० ७ । १ । ३९] इति ङेर्लुक् । गुहा गूहतेः । निरु० १३ । ८ । (चित्) एवार्थे ।[2] (इन्द्र[3]) सूर्यः (वह्निभिः) वोढृभिर्मरुद्भिः सह । वहिश्रि[4]० । उ० ४ । ५१ इति वहेरौणादिको निः प्रत्ययः । ( अविन्दः ) लभते । [5]पूर्ववद् अत्र पुरुषव्यत्ययः, लडर्थे लङ्[6] च । ( उस्रियाः ) किरणाः । [7]अत्र इयाडियाजीकाराणामुपसंख्यानम् ( अ० ७।१।३९ वा० ) इत्यनेन शसः स्थाने डियाजादेशः । उस्रेति रश्मिनामसु पठितम् । निघं० १ । ५ । ( अनु ) पश्चादर्थे ॥ ५ ॥

अन्वयः—चिद् यथा मनुष्याः स्वसमीपस्थान् पदार्थानुपर्य्यधश्च नयन्ति, तथा [ चित् ] एव [ इन्द्र ] इन्द्रोऽयं सूर्य्यो वीळु बलेनोस्रियाः क्षेपयित्वा पदार्थान् [ अविन्दो ] विन्दते । अनु पश्चात्तान् भित्त्वाऽऽरुजत्नुभिर्वह्निभिर्मरुद्भिः सह [8]तमेतत्पदार्थसमूहं [ गुहा ] गुहायामन्तरिक्षे स्थापयति ॥ ५ ॥

अत्रोपमालङ्कारः ।

भावार्थः—यथा बलवन्तो मरुतो दृढेन स्ववेगेन दृढानपि वृक्षादीन् भञ्जन्ति, तथा सूर्य्यस्तान्[9] अहर्निशं किरणैश्छिनत्ति, मरुतश्च तानुपर्य्यधो नयन्ति, एवमेवेश्वरनियमेन सर्वे पदार्था उत्पत्ति-विनाशावपि प्राप्नुवन्ति ॥

'हे इन्द्र ! त्वया तीक्ष्णगतिभिर्वायुभिः सह गूढस्थानस्था गावः प्राप्ता' इति मोक्षमूलर-

---

१. वै० य० मुद्रितेषु संस्करणेषु 'क्तनुः' इत्यपपाठः, प्रयोगासिद्धेः । बाहुलकादत्रौणादिकः 'कत्नुच्' प्रत्यय ऊहनीयः । चित्त्वादन्तोदात्तः ।

२. इतोऽग्रे वै० य० मुद्रितेषु संस्करणेषु 'चिदिति पूजायाम् । निरु० १ । ४ ।' इत्यसम्बद्धः पाठ उपलभ्यते । इह भाष्यकारेण एवार्थो निर्दिष्टः ।

३. वै० य० मुद्रितेषु संस्करणेषु '(इन्द्रः)' सविसर्गोऽपपाठः ।

४. वै० य० मुद्रितेषु संस्करणेषु 'वहिश्रु' इत्यपपाठः ।

५. अत्र 'पूर्ववद्' इत्यसम्बद्धं पदम्, पूर्वत्र (मन्त्र ४) पुरुषव्यत्ययस्यानुक्तत्वात् (द्र०—५२१ पृष्ठस्था टि ३ ) । न चातिदूरस्थस्यातिदेशः सम्भवति बुद्धौ व्यवधानात् ।

६. वै०य० मुद्रितेषु संस्करणेषु 'लोट् च' इत्यपपाठः, 'अविन्दः' लङो रूपत्वात् ।

७. यथाऽत्र निर्देशस्तथा भाष्यकार 'उस्रा' शब्दाद् 'डियाच्' आदेशं विधाय 'उस्रियाः' पदस्य साधुत्वं प्रतिपादयतीति प्रतीयते । 'डियाच्' आदेशे 'उस्रिया' इति तु सिध्यति, परन्त्वत्र 'उस्रियाः' इस सविसर्जनीयः पाठो वर्तते ( एतादृश एवापलक्षणनिर्देशो भूमिकायाम् २३६ पृष्ठेऽप्युपलभ्यते, ४१७ पृष्ठे च पं० २३, डियाजादेशोद्धरणेऽपि दृश्यते ) । वस्तुतस्त्वत्र 'उस्रा' शब्दात् स्वार्थे घच् प्रत्यय उपसंख्येयः ( द्र०—भूमिका पृष्ठ २३६, टि० १ ) । यद्वा—'वस' धातोरौणादिको 'रियक्' प्रत्ययः कल्पनीयः । किस्त्वात् संप्रसारणम्, बाहुलकादेव षत्वाभावश्च ।

८. वै० य० मुद्रितेषु संस्करणेषु 'त्वामेतत्' इत्यपपाठः ।

९. तान् संसारस्थान् पदार्थानित्यर्थः ।

व्याख्याऽसङ्गतास्ति। कुतः? उस्रेति रश्मिनामसु। निघण्टौ (१।५) पठितत्वेनात्रैतस्यार्थस्यैव¹ योग्यत्वात्। गुहेत्यनेन सर्वावरकत्वादन्तरिक्षस्यैव ग्रहणार्हत्वाविति ॥ ५ ॥

इत्येकादशो वर्गः समाप्तः ॥

उन पवनों के साथ सूर्य्य क्या करता है, सो अगले मन्त्र में उपदेश किया है—

**पदार्थान्वयभाषा**—( चित् ) जैसे मनुष्य लोग अपने पास के पदार्थों को उठाते [ और ] धरते हैं, वैसे ( चित् ) ही [ (इन्द्र) ] सूर्य्य भी ( वीळु ) दृढ़ बल से ( उस्रियाः ) अपनी किरणों करके संसारी पदार्थों को (अविन्दः) प्राप्त होता है। ( अनु ) उसके अनन्तर सूर्य्य उन को छेदन करके ( आरुजत्नुभिः ) भङ्ग करने, और (वह्निभिः) आकाश आदि देशों में पहुंचाने- वाले [ ( मरुद्भिः ) ] पवन के साथ ऊपर नीचे करता हुआ इस पदार्थसमूह को ( गुहा ) अन्तरिक्ष अर्थात् पोल में सदा रखता है ॥ ५ ।

इस मन्त्र में उपमालङ्कार है।

**भावार्थ**—जैसे बलवान् पवन अपने [दृढ़] वेग से भारी-भारी दृढ़ वृक्षों को [भी] तोड़- फोड़ डालते, और उनको ऊपर-नीचे गिराते रहते हैं, वैसे ही सूर्य्य भी अपनी किरणों से उनका छेदन करता रहता है, और मरुत् उनको ऊपर-नीचे पहुंचाते हैं। इसी प्रकार ईश्वर के नियम से सब पदार्थ उत्पत्ति और विनाश को भी प्राप्त होते रहते हैं ॥

'हे इन्द्र ! तू शीघ्र चलनेवाले वायु के साथ अप्राप्त स्थान में रहनेवाली गौओं को प्राप्त हुआ।' यह भी **मोक्षमूलर** साहब की व्याख्या असङ्गत है। क्योंकि 'उस्रा' यह शब्द निघण्टु [ १।५ ] में रश्मिनाम में पढ़ा है। इससे सूर्य की किरणों का ही ग्रहण होना योग्य है। तथा 'गुहा' इस शब्द से सबको ढांपनेवाला होने से अन्तरिक्ष का ग्रहण है ॥ ५ ॥

[ यह ग्यारहवां वर्ग समाप्त हुआ ॥



पुनस्ते कीदृशा भवन्तीत्युपदिश्यते—

देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः। महामनूषत श्रुतम् ॥ ६ ॥

देवऽयन्तः। यथा। मतिम्। अच्छ। विदत्ऽवसुम्। गिरः ॥ महाम्। अनूषत। श्रुतम् ॥ ६ ॥

**पदार्थः**—( देवयन्तः )² प्रकाशयन्त³ आत्मनो⁴ देवमिच्छन्तो⁵ मनुष्याः ( यथा ) येन

१. इतोऽग्रे वै० य० मुद्रितेषु संस्करणेषु 'अर्थस्य' इत्यधिकः पाठः। पुनरुक्तत्वादनावश्यकः।

२. 'देवयन्तः' इति पदं द्विधा सिध्यति। दिवु धातोर्ण्यन्ताच्छतरि; देवशब्दात् 'सुप आत्मनः क्यच्' ( अ० ३।१।८ ) इति क्यचि शतरि च। तत्र क्यचि 'नच्छन्दस्यपुत्रस्य' (अ० ७।४।३५) इत्यनेन ईत्वदीर्घत्वयोः प्रतिषेधो भवति। स्वरस्तूभयथाऽपि समानः। ३. अयं प्रथमप्रक्रियायामर्थः।

४. यद्यपि व्याकरणशास्त्ररीत्या अयं पाठो युक्तस्तथाऽप्यर्थदृष्ट्या 'आत्मानं' पाठो युक्तः स्यात्। तथा सति क्यच् छान्दसो द्रष्टव्यः। ५. अयं द्वितीयप्रक्रियायामर्थः। रूपसिद्धिस्तु पूर्वमुक्ता।

प्रकारेण ( मतिम् ) बुद्धिम् ( अच्छ ) उत्तमरीत्या। निपातस्य च [अ० ६।३।१३५] इति दीर्घः। ( विवद्वसुम् ) विदद्भिः सुखज्ञापकैर्वसुभिर्युक्ताम् ( गिरः ) गृणन्ति ये ते गिरो विद्वांसः ( महाम् ) महतीम् ( अनूषत ) प्रशस्तां कुर्वन्ति। णू स्तवन इत्यस्य लुङ्प्रयोगः। 'संज्ञापूर्वको विधिरनित्यः'[1] इति गुणाभावः, लडर्थे लुङ् च। ( श्रुतम् ) सर्वशास्त्रश्रवणकथनम् ॥ ६ ॥

**अन्वयः**—यथा देवयन्तो गिरो विद्वांसो मनुष्या विदद्वसुं महां महतीं मतिं बुद्धिं श्रुतं वेदशास्त्रार्थयुक्तं श्रवणं कथनं चा[च्छा]नूषत प्रशस्तं[2] कुर्वन्ति, तथैव मरुतः स्ववेगादिगुणयुक्ताः सन्तो वाक्श्रोत्रचेष्टा महच्छिल्पकार्य्यं च प्रशस्तं साधयन्ति ॥ ६ ॥

**अत्रोपमालङ्कारः।**

**भावार्थः**—मनुष्यैर्मरुतां सकाशाल्लोकोपकारार्थं विद्यावृद्धयर्थं च सदा प्रयत्नः कार्यः। येन सर्वे व्यवहाराः सिद्धेयुरिति ॥ ६ ॥

'धर्मात्मभिर्गायनैर्मरुद्भिरिन्द्राय जयजयेति गिरः श्राविताः' इति मोक्षमूलरोक्तिरन्यथास्ति। कुतः ? 'देवयन्तः' इत्यात्मनो[3] देवं विद्वांसमिच्छन्त इत्यर्थान्मनुष्याणामेव ग्रहणम् ॥ ६ ॥

फिर वे पवन कैसे हैं, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—( यथा ) जैसे (देवयन्तः)[4] प्रकाश करनेवाले, या अपने को देव बनाने की इच्छावाले ( गिरः ) विद्वान् मनुष्य (विदद्वसुम्) सुखकारक पदार्थविद्या से युक्त ( महाम् ) अत्यन्त बड़ी (मतिम्) बुद्धि, ( श्रुतम् ) सब शास्त्रों के श्रवण और कथन को (अच्छ) अच्छी प्रकार ( अनूषत ) उत्तम बनाते हैं, वैसे ही [5]मरुत् भी अपने वेगादि गुणों से युक्त होकर वाणी, श्रोत्र, चेष्टा और महान् शिल्प-कार्य को अच्छे प्रकार सिद्ध करते हैं ॥ ६ ॥

इस मन्त्र में उपमालङ्कार है।

**भावार्थ**—मनुष्यों को वायु के उत्तम गुणों का ज्ञान, [तथा उससे] सबका उपकार और विद्या की वृद्धि के लिये प्रयत्न सदा करना चाहिये। जिससे सब व्यवहार सिद्ध हों ॥

'गान करनेवाले धर्मात्मा जो मरुत् हैं, उन्होंने इन्द्र को ऐसी वाणी सुनाई कि तू जीत जीत।' यह भी मोक्षमूलर का अर्थ अच्छा नहीं। क्योंकि 'देवयन्तः' इस शब्द का अर्थ यह है कि—'अपने आपको देव बनाने की इच्छावाले'। इस अर्थ से मनुष्यों का ही ग्रहण होता है ॥ ६ ॥



१. सीरदेवीयपरिभाषावृत्ति, सं० ७१।

२. वै० य० मुद्रितेषु संस्करणेषु 'प्रशस्ते' अपपाठः। द्रष्टव्योऽत्र पदार्थः।

३. अत्र ५२५ पृष्ठस्था टि० ४ द्रष्टव्या।

४. इस पद का भावार्थ वै० य० मुद्रित संस्करणों में संस्कृत पाठ से विपरीत था।

५. यहां से आगे का पाठ वै० य० मुद्रित सस्करणों में संस्कृत के अनुरूप नहीं था।

केन सहैते कार्य्यसाधका भवन्तीत्युपदिश्यते —

इन्द्रे॑ण॒ सं हि दृक्ष॑से संज॒ग्मा॒नो अबि॑भ्युषा । म॒न्दू स॑मा॒नव॑र्चसा ॥ ७ ॥

इन्द्रे॑ण । सम् । हि । दृक्ष॑से । स॒म्ऽज॒ग्मा॒नः । अबि॑भ्युषा ॥ म॒न्दू इति॑ । स॒मा॒नऽव॑र्चसा ॥ ७ ॥

**पदार्थः**—( इन्द्रेण ) परमेश्वरेण सूर्य्येण सह वा ( सम् ) सम्यक् ( हि ) निश्चये ( दृक्षसे ) दृश्यते । अत्र लडर्थे लेट्मध्यमैकवचनप्रयोगः । 'अनित्यमागमशासनम्'[1] इति वचनप्रामाण्यात् सृजिदृशोः० [ अ० ६ । १ । ५८ ] इत्यम् न भवति । ( सञ्जग्मानः ) सम्यक् सङ्गतः ( अबिभ्युषा ) भयनिवारणहेतुना किरणसमूहेन वायुगणेन सह वा ( मन्दू ) आनन्दितावानन्दकारकौ । मन्दू इति पदनामसु पठितम् । निघं० ४ । १ । ( समानवर्चसा ) समानं तुल्यं वर्चो दीप्तिर्ययोस्तौ ॥

यास्काचार्येणायं मन्त्र एवं व्याख्यातः—इन्द्रेण सं हि दृश्यसे सञ्जग्मानो अबिभ्युषा[2] [ ··· ] गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात् समानवर्चसेत्येतेन व्याख्यातम् । निरु० ४ । १२ ॥ ७ ॥

**अन्वयः**—अयं वायुरबिभ्युषेन्द्रेणैव सञ्जग्मानः सन् तथा वायुना सह सूर्य्यश्च सङ्गत्य संदृक्षसे दृश्यते दृष्टिपथमागच्छति, हि यतस्तौ [समानवर्चसा] समानवर्चसौ वर्त्तेते, तस्मात् सर्वेषां [जीवानां] मन्दू भवतः ॥ ७ ॥

**भावार्थः**—ईश्वरेणाभिव्याप्य स्वसत्तया सूर्य्यवाय्वादयः सर्वे पदार्था उत्पाद्य धारिता वर्त्तन्ते । एतेषां मध्ये खलु सूर्यवाय्वोर्धारणाकर्षणप्रकाशयोगेन सह वर्त्तमानाः सर्वे पदार्थाः शोभन्ते । मनुष्यैरेते विद्योपकारं ग्रहीतुं योजनीयाः ॥

'इदं महदाश्चर्यं यद् बहुवचनस्यैकवचने[3] प्रयोगः कृतोस्तीति । यच्च निरुक्तकारेण द्विवचनस्य स्थान एकवचनप्रयोगः[4] कृतोऽस्त्यतोऽसङ्गतोऽस्ति ।' इति च मोक्षमूलरकल्पना सम्यङ् न वर्त्तते । कुतः ? व्यत्ययो बहुलम्[5]; सुप्तिङुपग्रह०[6] इति वचनव्यत्ययविधायकस्य शास्त्रस्य विद्यमानत्वात् । तथा निरुक्तकारस्य व्याख्यानं समञ्जसमस्ति । कुतः ? 'मन्दू' इत्यत्र सुपां सुलु०[7] इति पूर्वसवर्णादेशविधायकस्य शास्त्रस्य विद्यमानत्वात् ॥ ७ ॥

---

१. सीरदेवीय परिभाषावृत्ति, सं० ६८ ।

२. अत्र पाठभेदो दृश्यते । निरुक्तपाठस्त्वेवमस्ति—'इन्द्रेण हि संदृश्यसे संगच्छमानोऽबिभ्युषा गणेन···।

३. मरुतां बहुत्वेऽपि 'दृक्षसे' इत्येकवचने प्रयोग इति भावः ।

४. 'मन्दू' इति द्विवचनस्य यास्केन अपि वा मन्दुना' इति पक्षान्तरे तृतीयैकवचनान्तेनार्थः प्रदर्शितः ।

५. अ० ३ । १ । ८५ ॥

६. सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि सिध्यति बाहुलकेन ॥ महा० ३।१।८५ ॥

७. सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः । अ० ७ । १ । ३९ ॥

उक्त पदार्थ किसके सहाय से कार्य्य के सिद्ध करनेवाले होते हैं, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—यह वायु ( अविभ्युषा ) भय दूर करनेवाली (इन्द्रेण) परमेश्वर की सत्ता, तथा [सूर्य की किरणों के] साथ (संजग्मानः) अच्छे प्रकार प्राप्त हुआ ( संदृक्षसे ) अच्छी प्रकार दृष्टि में आता है। ( हि ) जिस कारण ये दोनों ( समानवर्चसा ) पदार्थों में समान बलवाले हैं, इसी से वे सब जीवों को ( मन्दू ) आनन्द के देनेवाले होते हैं ॥ ७ ॥

**भावार्थ**—परमेश्वर ने अपनी व्याप्ति और सत्ता से सूर्य और वायु आदि समस्त पदार्थ उत्पन्न करके धारण किये हैं। इन सब पदार्थों में सूर्य और वायु के धारण, आकर्षण और प्रकाश के योग से सब पदार्थ सुशोभित होते हैं। मनुष्यों को चाहिये कि उन्हें पदार्थविद्या से उपकार लेने के लिये युक्त करें ॥

'यह बड़ा आश्चर्य है कि [ वेद में ] बहुवचन के स्थान में एकवचन का प्रयोग किया गया'[1], तथा निरुक्तकार ने द्विवचन के स्थान में एकवचन का प्रयोग माना है'[2], सो असंगत है'। यह भी **मोक्षमूलर** साहब की कल्पना ठीक नहीं। क्योंकि ( व्यत्ययो ब०[3] ) ( सुप्तिङुपग्रह०[4] ) व्याकरण के इस प्रमाण से वचनव्यत्यय होता है। तथा निरुक्तकार का व्याख्यान सत्य है। क्योंकि (सुपां सु०[5] ) इस सूत्र से 'मन्दू' इस शब्द में तृतीया के एकवचन को पूर्वसवर्ण उकारादेश होकर उसे दीर्घ एकादेश हो गया है ॥ ७ ॥



**कथं पूर्वोक्तो नित्यवर्त्तमानो व्यवहारोऽस्तीत्युपदिश्यते—**

**अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ॥ ८ ॥**

अनवद्यैः । अभिद्युऽभिः । मखः । सहस्वत् । अर्चति ॥ गणैः । इन्द्रस्य । काम्यैः ॥ ८ ॥

**पदार्थः**—( **अनवद्यैः** ) निर्दोषैः ( **अभिद्युभिः** ) **अभितः प्रकाशमानैः** ( **मखः** ) पालन-शिल्पाख्यो यज्ञः। मख इति यज्ञनामसु पठितम्। निघं० ३। १७। ( **सहस्वत्** ) सहोऽतिशयितं सहनं विद्यते यस्मिन् तद् 'यथा स्यात्तथा। अत्रातिशये[7] मतुप्। ( **अर्चति** ) सर्वान्

१. अर्थात् यहां मरुतों का प्रकरण है। अतः उनके बहुत होने से मन्त्र में बहुवचन का प्रयोग होना चाहिये। किन्तु मन्त्र में 'संदृक्षसे' एकवचनान्त प्रयोग है, यह मोक्षमूलर का भाव है।

२. यास्क ने निरुक्त ४।१२ में इस मन्त्र का अर्थ करते हुए 'मन्दू' का अर्थ 'मन्दुना' तृतीया के एकवचन में किया है। मोक्षमूलर 'मन्दू' को प्रथमा का द्विवचन मानता है।

३. व्यत्ययो बहुलम्। अ० ३।१।८५ ॥ ४. पूरा पाठ गत पृष्ठ पर संस्कृत की टिप्पणी ५ में देखें।

५. पूरा पाठ गत पृष्ठ टि० ७ में देखें।

६. अत्र 'यथा स्यात्तथा' पाठोऽनावश्यकः। अन्वये त्वावश्यकः।

७. तदुक्तम्—'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' ॥ महा० ५।२।९४ ॥

पदार्थान् सत्करोति ( गणैः ) किरणसमूहैर्मरुद्भिर्वा ( इन्द्रस्य ) सूर्य्यस्य ( काम्यैः ) कामयितव्यैरुत्तमैः सह मिलित्वा ॥ ८ ॥

अन्वयः—अयं मख इन्द्रस्यानवद्यैरभिद्युभिः काम्यैर्गणैः सह सर्वान् पदार्थान् सहस्वद् [ यथा स्यात् तथैव ] अर्चति ॥ ८ ॥

भावार्थः—अयं सुखरक्षणप्रदो यज्ञः शुद्धाना [ हव्यानां ] द्रव्याणामग्नौ कृतेन होमेन संपादितो हि वायुकिरणशोधनद्वारा रोगविनाशनात् सर्वान् प्राणिनः सुखयित्वा बलवतः करोति ॥ ८ ॥

अत्र मोक्षमूलरेण मखशब्देन यज्ञकर्त्ता गृहीतस्तदन्यथास्ति । कुतः ? मखशब्देन यज्ञस्याभिधानत्वेन कमनीयैर्वायुगुणैः सूर्य्यकिरणसहितैः सह हुतद्रव्यवहनेन वायुवृष्टिजलशुद्धिद्वारेष्टसुखसम्पादनेन सर्वेषां प्राणिनां सत्कारहेतुत्वात् । यच्चोक्तं—मखशब्देन देवानां शत्रुर्गृह्यते तदप्यन्यथास्ति । कुतः ? तत्र मखशब्दस्योपमावाचकत्वात्[1] ॥ ८ ॥

पूर्वोक्त नित्य वर्तमान व्यवहार किस प्रकार से है, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—जो यह (मखः) पालन और शिल्परूप यज्ञ है, वह (इन्द्रस्य) सूर्य्य की (अनवद्यैः) निर्दोष (अभिद्युभिः) सब ओर से प्रकाशमान, और (काम्यैः) प्राप्ति की इच्छा करने योग्य (गणैः) किरणों वा पवनों के साथ मिलकर सब पदार्थों को (सहस्वत्) जैसे दृढ़ होते हैं, वैसे ही (अर्चति) श्रेष्ठ गुणयुक्त करनेवाला होता है ॥ ८ ॥

भावार्थ—जो [यह सुख देने और रक्षा करनेवाला] शुद्ध अत्युत्तम होम के योग्य पदार्थों के अग्नि में किये हुए होम से सिद्ध किया हुआ यज्ञ है, वह वायु और सूर्य्य की किरणों की शुद्धि के द्वारा रोगनाश करने के हेतु से सब जीवों को सुख देकर बलवान् करता है ॥

'यहां मखशब्द से यज्ञ करनेवाले का ग्रहण है, तथा देवों के शत्रु का भी ग्रहण है।' यह भी **मोक्षमूलर** साहब का कहना ठीक नहीं; क्योंकि जो 'मख' शब्द यज्ञ का वाची है, वह सूर्य्य की किरणों के सहित अच्छे-अच्छे वायु के गणों से हवन किये हुए पदार्थों को सर्वत्र पहुंचाता है। तथा वायु और वृष्टिजल की शुद्धि का हेतु होने से सब प्राणियों को सुख देनेवाला होता है। और मख शब्द के उपमावाचक[2] होने से देवों के शत्रु का भी ग्रहण नहीं [हो सकता] ॥ ८ ॥



अथ मरुतां गमनशीलत्वमुपदिश्यते—

## अतः परिज्मन्ना गहि दिवो वा रोचनादधि । सम॑स्मिन्नृञ्जते गिरः ॥ ९ ॥

अतः । परिऽज्मन् । आ । गहि । दिवः । वा । रोचनात् । अधि ॥ सम् । अस्मिन् । ऋञ्जते । गिरः ॥ ९ ॥

---

१. अत्र कदाचित् 'मखशब्दस्य यज्ञवाचकत्वात्' पाठो युक्तः स्यात् ।

२. यहां 'मख शब्द के यज्ञवाचक होने से' पाठ युक्त प्रतीत होता है ।

**पदार्थः**—( अतः ) अस्मात् स्थानात् ( परिज्मन् ) परितः सर्वतो गच्छन्, उपर्य्यधः सर्वान् पदार्थानितस्ततः क्षेप्ता । अयमजधातोः प्रयोगः । श्वन्नुक्षन्०[1] । उ० १ । १५९ इति कनिन्प्रत्ययान्तो मुडागमेनाकारलोपेन च निपातितः । (आगहि) [2]गमयत्यागमयति वा । अत्र लडर्थे लोट्, पुरुषव्यत्ययेन गमेर्मध्यमपुरुषस्यैकवचने बहुलं छन्दसि [अ० २ । ४ । ७३] इति शपो लुक्, हेर्ङित्त्वाद् [3]अनुनासिकलोपश्च । ( दिवः ) प्रकाशात् ( वा ) पक्षान्तरे (रोचनात्) सूर्य्यप्रकाशाद् रुचिकरान्मेघमण्डलाद्वा ( अधि ) उपरि[4] ( सम् ) सम्यक् ( अस्मिन् ) बहिरन्तःस्थे मरुद्गणे ( ऋञ्जते ) प्रसाध्नुवन्ति । ऋञ्जतिः प्रसाधनकर्मा । निरु० ६ । २१ । (गिरः) वाचः ॥ ९ ॥

**अन्वयः**—यत्र गिरः समृञ्जते सोऽयं [परिज्मन्] परिज्मा वायुरतः पृथिवीस्थानाज्जलकणानध्यागह्युपरि गमयति । स पुनर्दिवो रोचनात् सूर्य्यप्रकाशान्मेघमण्डलाद्वा जलादिपदार्थानागह्यागमयति । अस्मिन् सर्वे पदार्थाः स्थितिं लभन्ते ॥ ९ ॥

**भावार्थः**—अयं बलवान् वायुर्गमनागमनशीलत्वात् सर्वपदार्थगमनागमनधारणशब्दोच्चारणश्रवणानां हेतुरस्तीति ॥ ९ ॥

सायणाचार्य्येण परिज्मन्शब्दमुणादिप्रसिद्धमविदित्वा मनिन्प्रत्ययान्तो व्याख्यातो[5]ऽयमस्य भ्रमोऽस्तीति बोध्यम् ।

'हे इतस्ततो भ्रमणशील मनुष्याकृतिदेव देहधारिन्निन्द्र ! त्वं सन्मुखात् पार्श्वतो वा परिष्टाद्वास्मत्समीपमागच्छ, इयं सर्वेषां गायनानामिच्छास्ति' इति मोक्षमूलरव्याख्या विपरीतास्ति । कुतः ? अस्मिन्मरुद्गण इन्द्रस्य सर्वा गिर ऋञ्जते इत्यनेन शब्दोच्चारणव्यवहारप्रसाधकत्वेनात्र प्राणवायोरेव[6] ग्रहणात् ॥ ९ ॥

अगले मन्त्र में पवन के गमनस्वभावत्व का प्रकाश किया है—

**पदार्थान्वयभाषा**—जिस वायु में [(गिरः)] वाणी का सब व्यवहार [(समृञ्जते)] सिद्ध होता है, वह (परिज्मन्) सर्वत्र गमन करता हुआ, सब पदार्थों को तले ऊपर पहुंचानेवाला पवन (अतः) इस पृथिवी-स्थान से जलकणों का ग्रहण करके (अध्यागहि) ऊपर पहुंचाता, और

---

१. भाष्यकारेण स्वीयोणादिकोशे 'परिज्वन्' पदं निपात्यते । अनेकासूणादिवृत्तिषु 'परिज्मन्' इत्यपि पठ्यते । २. 'गमयति' इत्ययं आकार पदपूरणो ज्ञेयः । अन्वये एकत्र गमयत्यर्थो गृहीतः, अपरत्र चागमयत्यर्थः । ३. 'अनुदात्तोपदेशवनति०' (अ० ६।४।३७) इत्यादिनेति शेषः । ४. वै. य. मु. 'उपरितः' पाठः ।

५. अपरा भ्रान्तिरपि सायणाचार्यस्यैतत्पदव्याख्याने द्रष्टव्या । स हि १।२०।३ मन्त्रव्याख्याने 'श्वन्नुक्षन्' सूत्रमद्धरन्नपि 'मन्प्रत्यये' निपातनमाह । अस्मिन् सूत्रे पूर्वस्मात् 'कनिन् युवृषि०' ( उ० १।५६ ) सूत्रात् कनिन् प्रत्यय एवानुवर्तते न मन् ( उ० १।१४० ), मका ( उ० १।१४५ ) कनिना च व्यवधानात् । अपि चात्र कथं चित् मनोऽनुवृत्तिः स्वीक्रियेत तर्ह्येतत् (=श्वन्नुक्षन्०) सूत्रस्थानामन्येषां शब्दानामन्वाख्यानं नोपपद्येत । तस्मात् ऋ० १ । २० । ३ मन्त्रव्याख्याने मन्प्रत्ययान्तनिपातनमपि भ्रान्तिमूलकमेव ।

६. अत्र गिरः पदस्य प्राणिमात्ररूपार्थं गृहीत्वेदं लिखितम् । पदार्थान्वययोस्तु शब्दमात्रार्थो गृहीतः ।

फिर (दिवः) सूर्य्य के प्रकाश से (वा) अथवा (रोचनात्) जोकि रुचि को बढ़ानेवाला मेघमण्डल है, उससे जल को गिराता हुआ पृथिवीतल पर पहुंचाता है। (अस्मिन्) इसी बाहिर और भीतर रहनेवाले पवन में सब पदार्थ स्थिति को प्राप्त होते हैं ॥ ९ ॥

**भावार्थ** - यह बलवान् वायु अपने गमन आगमन गुण से सब पदार्थों के गमन आगमन धारण तथा शब्दों के उच्चारण और श्रवण का हेतु है ॥ ९ ॥

इस मन्त्र में **सायणाचार्य्य** ने जो उणादिगण (१। १५६) में सिद्ध 'परिज्मन्' शब्द था उसे छोड़कर मनिन्प्रत्ययान्त कल्पना किया है, सो केवल उनकी भूल है।[1]

'हे इधर-उधर विचरनेवाले मनुष्यदेहधारी इन्द्र! तू आगे पीछे और ऊपर से हमारे समीप आ, यह सब गानेवालों की इच्छा है।' यह भी उन [**मोक्षमूलर साहब**] का अर्थ अत्यन्त विपरीत है, क्योंकि इस वायुसमूह में मनुष्यों की वाणीरूप शब्दों के उच्चारणव्यवहार के प्रसिद्ध होने से [यहां] प्राणरूप वायु का ग्रहण है॥ ९॥



**इदानीं सूर्य्यकर्मोपदिश्यते—**

## इतो वा सातिमीमहे दिवो वा पार्थिवादधि । इन्द्रं महो वा रजसः ॥ १० ॥

इतः। वा। सातिम्। ईमहे। दिवः। वा। पार्थिवात्। अधि॥ इन्द्रम्। महः। वा। रजसः ॥१०॥

**पदार्थः**—(**इतः**) **अस्मात्** (**वा**) **चार्थे** (**सातिम्**) **संविभागं कुर्वन्तम्। अत्र** ऊतियूतिजूतिसातिहेतिo। अ० ३। ३। ९७ **अनेनायं शब्दो निपातितः।** (**ईमहे**) **विजानीमः। अत्र** ईङ् गतौ, बहुलं छन्दसि [अ० २। ४। ७३] **इति शपो लुकि श्यनभावः**[2]। (**दिवः**) **प्रत्यक्षाग्नेः प्रकाशात्** (**वा**) **पक्षान्तरे, लोकलोकान्तरेभ्योऽपि** (**पार्थिवात्**) **पृथिवीसंयोगात्।** सर्वभूमिपृथिवीभ्याणञौ। अ० ५। १। ४० **इति सूत्रेण**[3] **पृथिवीशब्दादञ् प्रत्ययः।** (**अधि**) **अधिकार्थे** (**इन्द्रम्**) **सूर्य्यम्** (**महः**) **महान्तम् अतिविस्तीर्णम्** (**वा**) पक्षान्तरे (**रजसः**) **पृथिव्यादिलोकेभ्यः।** लोका रजांस्युच्यन्ते। निरु० ४। १९॥ १०॥

**अन्वयः**—**वयमितः** पार्थिवाद्वा दिवो वा सातिं **कुर्वन्तं** रजसोऽधि [महो] **महान्तं चेन्द्रमीमहे विजानीमः** ॥ १० ॥

**भावार्थः—सूर्य्यकिरणाः पृथिवीस्थान् जलादिपदार्थान् छित्त्वा लघून् संपादयन्ति। अतस्ते वायुना सहोपरि गच्छन्ति। किन्तु स**[4] **सूर्य्यलोकः सर्वेभ्यो लोकेभ्यो महत्तमोऽस्तीति ॥ १० ॥**

---

१. सायणाचार्य ने ऋ० १।२०।३ के भाष्य में एक और भूल की है। द्र० पृ० ५३० टि० ५।

२. अत्र षष्ठीसमासः—'श्यनोऽभावः' इति भावः। अत्र भूमिकायां (पृष्ठ ४०८) सूत्रस्यास्य व्याख्यानं द्रष्टव्यम्। ३. तस्य निमित्तं संयोगोत्पातौ (अ० ५। १। ३७) इत्यतः संयोगोत्पातयोरनुवृत्ताविह संयोगेऽर्थे प्रत्ययः। ४. अत्र 'सः' पदस्य श्रवणाद् यत्तदोर्नित्यसम्बन्धाद् 'यस्य सूर्यस्य किरणाः… सहोपरि गच्छन्ति स सूर्यलोकः' इत्येवं पाठः साधीयान् स्यात्।

'वयमाकाशात् पृथिव्या उपरि वा महदाकाशात् सहायार्थमिन्द्रं प्रार्थयामहे' इति मोक्षमूलर-व्याख्याऽशुद्धास्ति। कुत: ? अत्र परिमाणे सर्वेभ्यो महत्तमस्य सूर्य्यलोकस्यैवाभिधान इन्द्रमीमहे' विजानीम इत्युक्तप्रामाण्यात् ॥ १० ॥

इन्द्रमरुद्भ्यो यथा पुरुषार्थसिद्धि: कार्य्या, ते जगति कथं वर्त्तन्ते, कथं च तैरुपकारसिद्धिर्भवेदिति पञ्चमसूक्तेन सह षष्ठस्य सङ्गतिरस्तीति बोध्यम् ॥

अस्यापि सूक्तस्य मन्त्रार्था: सायणाचार्य्यादिभिर्यूरोपाख्यदेशनिवासिभिर्विलसनाख्य-मोक्षमूलरादिभिश्चान्यथैव वर्णिता इति वेदितव्यम् ॥

इति षष्ठं सूक्तं द्वादशश्च वर्ग: समाप्त: ॥

अगले मन्त्र में सूर्य्य के कर्म का उपदेश किया है –

**पदार्थान्वयभाषा**— हम लोग (इत:) इस (पार्थिवात्) पृथिवी के संयोग (वा) और (दिव:) इस अग्नि के प्रकाश (वा) लोकलोकान्तरों अर्थात् चन्द्र और नक्षत्रादि लोकों से भी (सातिम्) अच्छी प्रकार पदार्थों के विभाग [को] करते हुए (वा) अथवा (रजस:) पृथिवी आदि लोकों से [(अधि) अधिक] विस्तारयुक्त (इन्द्रम्) सूर्य्य को (ईमहे) जानते हैं ॥ १० ॥

**भावार्थ**—सूर्य्य की किरण पृथिवी में स्थित हुए जलादि पदार्थों को भिन्न-भिन्न करके बहुत छोटे-छोटे कर देती है, इसी से वे पदार्थ पवन के साथ ऊपर को चढ़ जाते हैं, किन्तु वह सूर्य्य सब लोकों से बड़ा है ॥ १० ॥

'हम लोग आकाश पृथिवी तथा बड़े आकाश से सहाय के लिये इन्द्र की प्रार्थना करते हैं' यह भी डाक्टर मोक्षमूलर साहब की व्याख्या अशुद्ध है, क्योंकि सूर्य्यलोक सब से बड़ा है, और उसका आना-जाना अपने स्थान को छोड़के नहीं होता, ऐसा हम लोग जानते हैं ॥ १० ॥

सूर्य्य और पवन से जैसे पुरुषार्थ की सिद्धि करनी चाहिये, तथा वे लोक जगत् में किस प्रकार से वर्त्तते रहते हैं और कैसे उनसे उपकार की सिद्धि होती है, इन प्रयोजनों से पांचवें सूक्त के अर्थ के साथ इस छठे सूक्तार्थ की सङ्गति जाननी चाहिये।

और सायणाचार्य्य आदि तथा यूरोपदेशवासी अङ्गरेज विलसन आदि लोगों ने भी इस सूक्त के मन्त्रों के अर्थ अशुद्ध वर्णन किये हैं।

यह छठा सूक्त और बारहवां वर्ग समाप्त हुआ ॥



अथ दशर्चस्य सप्तमस्य सूक्तस्य मधुच्छन्दा ऋषि:। इन्द्रो देवता। १, ३ ५–७ गायत्री; २, ४ निचृद्गायत्री; ८, १० पिपीलकामध्यानिचृद्गायत्री; ९ पादनिचृद्गायत्री च छन्द:। षड्ज: स्वर: ॥

१. वै० य० मुद्रितेषु संस्करणेषु 'सूर्यलोकस्यैवभिधानेनेन्द्रमीमहे' इत्ययुक्त: पाठ:।

अथेन्द्रशब्देनार्थत्रयम्[1] उपदिश्यते—

इन्द्रमिद् गाथिनो बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत ॥ १ ॥

इन्द्रम्। इत्। गाथिनः। बृहत्। इन्द्रम्। अर्केभिः। अर्किणः॥ इन्द्रम्। वाणीः। अनूषत ॥ १ ॥

पदार्थः—(इन्द्रम्) परमेश्वरम् (इत्) एव (गाथिनः) गानकर्त्तारः (बृहत्) महान्तम्। अत्र सुपां सुलुग्० [अ० ७।१।३९] इत्यमो लुक्। (इन्द्रम्) सूर्य्यम् (अर्कभिः) अर्चनसाधकैः सत्यभाषणादिभिः शिल्पविद्यासाधकैः कर्मभिर्मन्त्रैश्च। अर्क इति पदनामसु पठितम्। निघं० ४।२, अनेन प्राप्तिसाधनानि गृह्यन्ते। अर्को मन्त्रो भवति यदनेनार्चन्ति। निरु० ५।४। अत्र बहुलं छन्दसि [अ० ७।१।१०] इति भिस ऐसादेशाभावः। (अर्किणः) विद्वांसः (इन्द्रम्) महाबलवन्तं वायुम् (वाणीः) वेदचतुष्टयीः (अनूषत) स्तुवन्तु। अत्र लोडर्थे लुङ्। 'संज्ञापूर्वको विधिरनित्यः'[2] इति गुणादेशाभावः ॥ १ ॥

अन्वयः—ये गाथिनोऽर्किणो विद्वांसस्ते अर्कैभिर्बृहत् महान्तमिन्द्रं परमेश्वरमिन्द्रं सूर्य्यमिन्द्रं वायुं वाणीश्च इद् एवानूषत यथावत् स्तुवन्तु ॥ १ ॥

भावार्थः—ईश्वर उपदिशति—मनुष्यैर्वेदमन्त्राणां विचारेणेश्वरसूर्य्यवाय्वादिपदार्थगुणान् सम्यग्विदित्वा सर्वसुखाय प्रयत्नेन उपकारो नित्यं ग्राह्य इति ॥ १ ॥

अब सातवें सूक्त का आरम्भ है। इसमें प्रथम मन्त्र करके इन्द्र शब्द से तीन अर्थों का प्रकाश किया है—

पदार्थान्वयभाषा—जो (गाथिनः) गान करनेवाले और (अर्किणः) विचारशील विद्वान् हैं, वे (अर्कभिः) सत्कार करने के पदार्थ सत्यभाषण शिल्पविद्या के सिद्ध करनेवाले कर्म और मन्त्र=विचार से (बृहत्) सबसे बड़े (इन्द्रम्) परमेश्वर (इन्द्रम्) सूर्य्य और (इन्द्रम्) महाबलवान् वायु और (वाणीः) चारों वेदों की वाणियों को (अनूषत) यथावत् स्तुति करें ॥१॥

भावार्थ—ईश्वर उपदेश करता है कि मनुष्यों के वेदमन्त्रों के विचार से परमेश्वर सूर्य्य और वायु आदि पदार्थों के गुणों को अच्छी प्रकार जानकर सब के सुख के लिये उनसे प्रयत्न के साथ उपकार लेना चाहिये ॥ १ ॥



[3]उक्तेषु त्रिषु प्रथमतो वायुसूर्य्यावुपदिश्येते—

इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा। इन्द्रो वज्री हिरण्ययः ॥ २ ॥

इन्द्रः। इत्। हर्य्योः। सचा। सम्ऽमिश्लः। आ। वचःऽयुजा॥ इन्द्रः। वज्री। हिरण्ययः ॥ २ ॥

१. अभ्यासे भूयांसमर्थं मन्यन्ते (निरु० १०।४२) इति वचनात् पुनरुक्तिदोषपरिहाराय चाऽत्र त्रयाणामिन्द्रपदानां त्रिविधोऽर्थः प्रदर्शितः। २. सीरदेवीय परिभाषावृत्ति मं० ७१।

३. प्रथममन्त्रोक्तेषु त्रिष्वर्थेषु द्वयमिप्रायः।

**पदार्थः**—(**इन्द्रः**) वायुः (**इत्**) एव (**हर्य्योः**) हरणाहरणगुणयोः (**सचा**) समवेतयोः (**संमिश्लः**) पदार्थेषु सम्यक् मिश्रो मिलितः सन्। संज्ञाछन्दसोर्वा कपिलकादीनामिति वक्तव्यम्। अ० ८। २। १८ अनेन [वार्तिकेन] रेफस्य लत्वादेशः। (**आ**) समन्तात् (**वचोयुजा**) वाणीर्योजयतोः[1]। अत्र सुपां सुलुग्० [अ० ७। १। ३९] इति षष्ठीद्विवचनस्याकारादेशः। (**इन्द्रः**) सूर्य्यः (**वज्री**) वज्रः संवत्सरस्तापो वाऽस्यास्तीति सः। संवत्सरो हि वज्रः। श० ३। ३। ५। १५।[2] (**हिरण्ययः**) ज्योतिर्मयः। ऋत्व्यवास्त्व्य०। अ० ६। ४। १७५ अनेन हिरण्यमयशब्दस्य[3] मलोपो निपात्यते। ज्योतिर्हि हिरण्यम्। श० ४। ३। १। २१[4]॥ २॥

**अन्वयः**—यथाऽयं संमिश्ल इन्द्रो वायुः सचा सचयोर्वचोयुजा वचांसि 'योजयतोर्हर्य्योः[5] गमनागमनानि[6] [आ] युनक्ति, तथा इत् एव वज्री हिरण्यय इन्द्रः सूर्य्यलोकश्च॥ २॥

**अत्र लुप्तोपमालङ्कारः।**

**भावार्थः**—यथा वायुयोगेनैव वचनश्रवणव्यवहारसर्वपदार्थगमनागमनधारणस्पर्शाः सम्भवन्ति तथैव सूर्य्ययोगेन पदार्थप्रकाशनछेदने च[7]॥

'संमिश्लः' इत्यत्र सायणाचार्य्येण 'लत्वं छान्दसम्' इति वार्तिकमविदित्वा[8] व्याख्यातम्, तदशुद्धम्॥ २॥

पूर्व मन्त्र में इन्द्रशब्द से कहे हुए तीन अर्थों में से वायु और सूर्य्य का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—जिस प्रकार यह (संमिश्लः) पदार्थों के साथ मिलकर (इन्द्रः)

---

१. 'योजयतोः' युजेर्ण्यन्तात् शतृप्रत्ययान्तस्य षष्ठी द्विवचने रूपम्। अर्थप्रदर्शनपरोऽयं निर्देशः। णिजप्यत्र स्वार्थे द्रष्टव्यः। अन्यथा योजयतेः क्विपि णिलोपेऽपि प्रत्ययलक्षणेन गुणे 'युक्' इति न सिध्येत। विग्रहस्तु 'वचांसि यो युङ्क्तस्तौ वचोयुजौ, तयोः। ओस आकारादेशे वचोयुजा। वै० य० मुद्रिते 'योजयितोः' इत्यपपाठः। २. अध्यायानुसारं श० ३।४।४।१५॥

३. हिरण्यशब्दात् प्राचुर्ये (अ० ५।४।२१)ऽर्थे उत्पन्नस्य मयटो मकारलोप इति भावः। मकार-लोपे शिष्टस्य प्रत्ययस्याजादित्वाद् भसंज्ञायां हिरण्यस्यान्त्यस्याकारस्य लोपे रूपं सिध्यति।

४. अध्यायानुसारं श० ४। ३। ४। २१॥

५. वै०य० मुद्रितेषु संस्करणेषु 'हर्योर्यो' इति पाठः। वाक्यादौ 'अयं' पदस्य निर्देशाद् 'यः' पदमत्र व्यर्थमनन्वितं च।

६. हरणाहरणयोरत्र गमनागमनशब्दाभ्यां निर्देशः। अस्यायं भावः—सर्वपदार्थेभ्यो योऽयं शब्द-उत्पद्यते तं वायुरेव ततो वीचितरङ्गन्यायेन हृत्वा श्रोतुः कर्णगह्वरं प्रापयति।

७. 'संभवतः' इत्यनुषङ्गो ज्ञेयः।

८. प्रत्यक्षे पूर्वनिर्दिष्टे वार्तिके विद्यमाने तदननुलिख्य 'लत्वं छान्दसम्' इति लेखनं वार्तिकस्याननु-स्मरणमूलकमज्ञानमत्राभिप्रेतम्। संयोगविभागाभ्यां वायौ वीचय उत्पद्यन्ते। ताश्चोत्तरोत्तरमन्या अन्या वीची-

ऐश्वर्य का हेतु स्पर्शगुणवाला वायु, अपने हरण और प्रापण[1] (सचा) सब में मिलनेवाले और (वचोयुजा) वाणी के व्यवहार को वर्त्तनेवाले (हर्य्योः) गुणों को (आ) युक्त करता है, वैसे [(इत्)] ही (वज्री) संवत्सर वा तापवाला (हिरण्ययः) प्रकाशस्वरूप (इन्द्रः) सूर्य्य भी अपने हरण और आहरण गुणों को सब पदार्थों में युक्त करता है ॥ २ ॥

इस मन्त्र में लुप्तोपमालङ्कार है।

**भावार्थ**—जैसे वायु के योग से वचन श्रवण आदि व्यवहार तथा सब पदार्थों के गमन आगमन धारण और स्पर्श होते हैं, वैसे ही सूर्य्य के योग से पदार्थों के प्रकाश और छेदन भी होते हैं ॥ २ ॥

**'संमिश्लः'** इस शब्द में सायणाचार्य्य ने 'लकार का होना छान्दस' माना है, सो उनकी भूल है, क्योंकि **'संज्ञाछन्द०'**[2] इस वार्त्तिक से लकारादेश सिद्ध ही है ॥ २ ॥



**अथ केन किमर्थः सूर्य्यलोको रचित इत्युपदिश्यते—**

**इन्द्रो॑ दी॒र्घाय॒ चक्ष॑स॒ आ सूर्यं॑ रोहयद् दि॒वि । वि गोभि॒रद्रि॑मैरयत् ॥ ३ ॥**

**इन्द्रः॑ । दी॒र्घाय॑ । चक्ष॑से । आ । सूर्य्य॑म् । रो॒ह॒य॒त् । दि॒वि ॥ वि । गोभिः॑ । अद्रि॑म् । ऐ॒र॒य॒त् ॥३॥**

**पदार्थः**—**(इन्द्रः) सर्वजगत्स्रष्टेश्वरः (दीर्घाय) महते निरन्तराय**[3] **(चक्षसे) दर्शनाय (आ) क्रियार्थे (सूर्य्यम्) प्रत्यक्षं सूर्य्यलोकम् (रोहयत्) उपरि स्थापितवान् (दिवि) प्रकाशनिमित्ते**[4] **(वि) विविधार्थे (गोभिः) रश्मिभिः। गाव इति रश्मिनामसु पठितम्। निघं० १।५। (अद्रिम्)**[5]

रुत्पादयन्ति। यथा ह्रदे प्रक्षिप्ताल्लोष्ठात् प्रथमोत्पन्ना वीचिरन्यामुत्पादयति साप्यन्याम्, इत्येवं क्रमेण वीचयो ह्रदतटं प्राप्नुवन्ति।

१. इसका भाव यह है कि किसी भी पदार्थ से जो शब्द उत्पन्न होता है, उसको वायु ही वहां से हरण करके श्रोता के कान तक पहुंचाता है। बिना वायु के यह कार्य सम्भव नहीं होता।

२. महा० ८।२।१८ ॥

३. दीर्घायार्थान्निरन्तराय।

४. वै० य० मुद्रितेषु संस्करणेषु 'प्रकाशनिमित्ते' अपपाठः। 'दिवि' इत्यत्र निमित्तार्थे सप्तमी। 'निमित्तात् कर्मसंयोगे सप्तमी वक्तव्या।' अ० २।३।३६ वा०। यथा 'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्' इति। चर्मनिमित्तं द्वीपिनं दन्तनिमित्तं च हस्तिनं हन्तीत्यर्थः। एवं मन्त्रेऽपि 'दिवि सूर्यम् आरोहयत्' प्रकाशनिमित्तं सूर्यं [लोकानां मध्ये] स्थापितवान् इत्यर्थः।

५. यद्यत्र प्रकृतौ विकृतिशब्दो (यथा—सुवर्णं धारयति=सुवर्णविकारं कुण्डलादिकं धारयति) विज्ञायेत, तर्हि 'अद्रि' शब्दस्यार्थो जलं ग्रहीतुं शक्यते। तथा सत्यस्य मन्त्रस्यार्थः स्पष्टतरो जायते। सूर्य एव स्वकिरणैर्जलमुपरि नयति, वर्षाकाले च पुनः पातयति। तथा च मन्त्रवर्णः—'कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति। त आववृत्रन् सदनादृतस्यादिद् घृतेन पृथिवी व्युद्यते॥' ऋ० १।१६४।४७॥ अयमेवार्थो निरुक्तकृता व्याख्यातः—ते (हरणा आदित्यरश्मयः) यदामुतोऽर्वाञ्चः पर्यावर्तन्ते सहस्थानाद् उदकस्यादित्याद् अथ घृतेनोदकेन पृथिवी व्युद्यते। निरुक्त ७।२४॥

मेघम्। अद्रिरिति मेघनामसु पठितम्। निघं० १। १०। (ऐरयत्) [1]व्यैरयत् वीरयत्यूर्ध्वमधो गमयति। अत्र लडर्थे [2]लङ्॥ ३॥

**अन्वयः**—इन्द्रः सृष्टिकर्त्ता जगदीश्वरो दीर्घाय चक्षसे यं सूर्य्यलोकं दिव्यारोहयत्, सोऽयं गोभिरद्रिं [व्यैरयत्] वीरयति॥ ३॥

**भावार्थः**—सृष्टिमिच्छतेश्वरेण सर्वेषां लोकानां मध्ये दर्शनधारणाकर्षणप्रकाशप्रयोजनाय प्रकाशरूपः सूर्य्यलोकः स्थापितः। एवमेवायं प्रतिब्रह्माण्डं नियमो वेदितव्यः। स प्रतिक्षणं जलमूर्ध्वमाकृष्य वायुद्वारोपरि स्थापयित्वा पुनः पुनरधः प्रापयति, इदमेव वृष्टेर्निमित्तमिति॥३॥

इसके अनन्तर किसने किसलिये सूर्य्यलोक बनाया है, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—जो (इन्द्रः) सब संसार का बनानेवाला परमेश्वर है, उसने (दीर्घाय) निरन्तर अच्छी प्रकार (चक्षसे) दर्शन के लिये (दिवि) सब पदार्थों के प्रकाश होने के निमित्त लोकों के बीच में जिस (सूर्य्यम्) प्रसिद्ध सूर्यलोक को आरोहयत् स्थापित किया है, वह अपनी (गोभिः) किरणों के द्वारा (अद्रिम्) मेघ को वर्षा होने के लिये (व्यैरयत्) अनेक प्रकार से से ऊपर नीचे करता है॥ ३॥

**भावार्थ**—रचने की इच्छा करनेवाले ईश्वर ने सब लोकों [के मध्य] में दर्शन धारण आकर्षण [प्रकाश] आदि प्रयोजनों के लिये प्रकाशरूप सूर्य्यलोक को स्थापित किया है, इसी प्रकार यह हर एक ब्रह्माण्ड का नियम है। वह क्षण-क्षण में जल को ऊपर खींच करके पवन के द्वारा ऊपर स्थापन करके बार-बार संसार में वर्षाता है, इसी से यह वर्षा का कारण है॥३॥



इन्द्रशब्देन व्यावहारिकमर्थमुक्त्वाऽथेश्वरार्थमुपदिश्यते—

**इन्द्र॒ वाजे॑षु नोऽव स॒हस्र॑प्रधनेषु च। उ॒ग्र उ॒ग्राभि॑रू॒तिभिः॥ ४॥**

इन्द्र॑। वाजे॑षु। नः॒। अ॒व॒। स॒हस्र॑ऽप्रधनेषु। च॒॥ उ॒ग्रः। उ॒ग्राभिः॑। ऊ॒तिऽभिः॑॥ ४॥

**पदार्थः**—(**इन्द्र**) परमैश्वर्य्यप्रदेश्वर! (**वाजेषु**) संग्रामेषु। वाज इति संग्रामनामसु पठितम्। निघं० २। १७। (नः) **अस्मान्** (**अव**) रक्ष (**सहस्रप्रधनेषु**) **सहस्राण्यसंख्यातानि प्रकृष्टानि धनानि प्राप्नुवन्ति येषु तेषु चक्रवर्तिराज्यसाधकेषु महायुद्धेषु**। सहस्रमिति बहुनामसु पठितम्। निघं० ३। १। (च) **आवृत्यर्थे** (**उग्रः**) **सर्वोत्कृष्टः**। ऋज्रेन्द्राग्र०। उ० २। २९ निपातनम्। (**उग्राभिः**) **अत्यन्तोत्कृष्टाभिः** (**ऊतिभिः**) **रक्षाप्राप्तिविज्ञानसुखप्रवेशनैः**॥ ४॥

---

१. वै० य० मुद्रितेषु संस्करणेषु 'वीरयत्' इत्यपपाठः। 'व्यैरयत्' इत्यत्र मन्त्रपठितं 'वि' पदं संयोज्य पदं निदर्शितम्। २. वै० य० मुद्रितेषु संस्करणेषु 'लुङ्' इत्यपपाठः, लुङि 'ऐरयत्' प्रयोगस्यासंभवात्।

**अन्वयः**—हे [इन्द्र] जगदीश्वर! उग्रो भवान् [सन्] सहस्रप्रधनेषु वाजेषूग्राभिरूतिभिर्नो [ऽव] रक्ष, सततं विजयं च प्रापय ॥ ४ ॥

**भावार्थः**—परमेश्वरो धार्मिकेषु योद्धृषु कृपां धत्ते, नेतरेषु। ये मनुष्या जितेन्द्रिया विद्वांसः पक्षपातरहिताः शरीरात्मबलोत्कृष्टा अनलसाः सन्तो धर्मेण महायुद्धानि विजित्य राज्यं नित्यं रक्षन्ति, त एव महाभाग्यशालिनो भूत्वा सुखिनो भवन्ति ॥ ४ ॥

इन्द्र शब्द से व्यवहार [सम्बन्धी अर्थ] को दिखलाकर, अब प्रार्थनारूप से अगले मन्त्र में परमेश्वरार्थ का प्रकाश किया है—

**पदार्थान्वयभाषा**—हे (इन्द्र) परमैश्वर्य्य देनेवाले जगदीश्वर! आप (उग्रः) सब प्रकार से अनन्त पराक्रमवान् होने से (सहस्रप्रधनेषु) असंख्यात धन को देनेवाले चक्रवर्त्ति राज्य को सिद्ध करानेवाले (वाजेषु) महायुद्धों में (उग्राभिः) अत्यन्त सुख देनेवाली (ऊतिभिः) उत्तम-उत्तम पदार्थों की प्राप्ति, तथा पदार्थों के विज्ञान और आनन्द में प्रवेश कराने [वाली नीतियों] से [(नः)] हम लोगों की (अव) रक्षा कीजिये, [(च) और सतत विजय को प्राप्त कराइये] ॥ ४ ॥

**भावार्थ**—परमेश्वर का यह स्वभाव है कि युद्ध करनेवाले धर्मात्मा पुरुषों पर अपनी कृपा करता है, और अधर्मात्माओं पर नहीं। इसी से जो मनुष्य जितेन्द्रिय विद्वान् पक्षपात को छोड़नेवाले शरीर और आत्मा के बल से अत्यन्त पुरुषार्थी, तथा आलस्य को छोड़े हुए, धर्म से बड़े-बड़े युद्धों को जीतके प्रजा का निरन्तर पालन करते हैं, वे ही महाभाग्य को प्राप्त होके सुखी रहते हैं ॥ ४ ॥



पुनरीश्वरसूर्यवायुगुणा[1] उपदिश्यन्ते—

**इन्द्रं॑ व॒यं म॑हाध॒न इन्द्र॒मर्भे॑ हवामहे। युजं॑ वृ॒त्रेषु॑ व॒ज्रिण॑म् ॥ ५ ॥**

इन्द्र॑म्। व॒यम्। म॒हा॒ऽध॒ने। इन्द्र॑म्। अर्भे॑। ह॒वा॒म॒हे॒॥ युज॑म्। वृ॒त्रेषु॑। व॒ज्रिण॑म् ॥ ५ ॥

**पदार्थः**—(इन्द्रम्) सर्वज्ञं सर्वशक्तिमन्तमीश्वरम् (वयम्) मनुष्याः (महाधने) महान्ति धनानि यस्मात्तस्मिन् संग्रामे। महाधन इति संग्रामनामसु पठितम्। निघं० २। १७। (इन्द्रम्) सूर्य्यं वायुं वा (अर्भे) स्वल्पे युद्धे (हवामहे) आह्वयामहे स्पर्धामहे वा। ह्वेञ्धातोरिदं लेटो रूपम्। बहुलं छन्दसि। अ० ६। १। ३४ अनेन सम्प्रसारणम्। (युजम्) युनक्तीति युक्, तम् (वृत्रेषु) मेघावयवेषु[2]। वृत्र इति मेघनामसु पठितम्। निघं० १। १०। (वज्रिणम्) किरणवन्तं जलवन्तं वा। वज्रो वै भ्रान्तः। श० ८। २। ४। १०[3]। अनेन प्रकाशरूपाः किरणा गृह्यन्ते। वज्रो वा आपः। श० ७। ४। २। ४१[4] ॥ ५ ॥

---

१. द्वितीयचरणे पठितेनेन्द्रशब्देन वायुसूर्यौ गृह्येते। अतोऽत्र सामान्येन त्रयाणां निर्देशः कृतः।

२. लौकिके युद्धे वृत्रशब्देन शत्रवो ग्राह्याः। ३. अध्यायानुसारं श० ८। ४। १। १० ॥

४. अध्यायानुसारं श० ७। ५। २। ४१ ॥

**अन्वयः**—वयं महाधने इन्द्रं परमेश्वरं हवामहे, अर्भेऽल्पे चाप्येवं वज्रिणं वृत्रेषु युजमिन्द्रं सूर्य्यं वायुं च हवामहे स्पर्धामहे ॥ ५ ॥

**अत्र श्लेषालङ्कारः ।**[1]

**भावार्थः—यत्रान्महदल्पं वा युद्धं प्रवर्त्तते, तत्र तत्र सर्वतः स्थितं परमेश्वरं रक्षकं मत्वा दुष्टैः सह धर्मेणोत्साहेन च युद्धं आचरिते सति मनुष्याणां ध्रुवो विजयो जायते । तथा "सूर्य्यवायु-निमित्तेनापि खल्वेतत्सिद्धिर्जायते । यथेश्वरेणैताभ्यां[3] निमित्तीकृताभ्यां वृष्टिद्वारा संसारस्य महत्सुखं साध्यते, एवं मनुष्यैरेतन्निमित्तैरेव कार्य्यसिद्धिः सम्पादनीयेति ॥ ५ ॥**

**इति त्रयोदशो वर्गः ॥**

फिर भी उक्त (=ईश्वर) अर्थ और सूर्य्य तथा वायु के गुणों का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—[(वयम्)] हम लोग (महाधने) बड़े-बड़े भारी संग्रामों में (इन्द्रम्) परमेश्वर का (हवामहे) आह्वान अर्थात् स्मरण करते रहते हैं, और (अर्भे) छोटे-छोटे संग्रामों में भी इसी प्रकार [परमेश्वर का स्मरण करते हैं।] और (वज्रिणम्) किरणवाले वा जलवाले वायु का, जो कि (वृत्रेषु) मेघ के अङ्गों में (युजम्) युक्त होनेवाले (इन्द्रम्) सूर्य वा वायु की स्पर्धा करते हैं, अर्थात् इनके प्रकाश और सब में गमनागमनादि गुणों के समान विद्या न्याय प्रकाश और दूतों के द्वारा सब राज्य का वर्त्तमान विदित करना आदि गुणों का धारण सब दिन करते रहें ॥ ५ ॥

इस मन्त्र में श्लेषालङ्कार है।

**भावार्थ**—जो बड़े-बड़े भारी और छोटे-छोटे संग्रामों में ईश्वर को सर्वव्यापक, और रक्षा करनेवाला, मानके धर्म और उत्साह के साथ युद्ध करें, तो मनुष्यों का अचल विजय होता है।

१. भाष्यकृता प्रथमस्येन्द्रशब्दस्य परमेश्वरार्थ उक्तः, अपरस्य च वायुसूर्यौ । तथा सति द्वितीये इन्द्र-शब्द एव श्लेषालंकारो विज्ञायते । परन्त्वेवं कृते मन्त्रस्यैको भागोऽध्यात्मपरोऽपरोऽधिदैवतपरो व्याख्यातो भवति । वयं तु सर्वस्य मन्त्रस्याध्यात्मपरत्वेऽधिदैवतपरत्वे च भाष्यकृतस्तात्पर्यमित्येकदेशव्याख्यानादनुमिमीमहे । तथा सति सम्पूर्णस्यान्वयस्य द्वैविध्यमेवं द्रष्टव्यम्—

**अध्यात्मम्**—वयं महाधने संग्रामे इन्द्रं परमेश्वरं हवामहेऽर्भेऽल्पे च । तथा वज्रिणं सर्वजगतः शासन-कर्त्तारम् (वज्रो वै शासः । शत० ३।८।१।५॥ शासः=शासनं, तदस्यास्ति) इन्द्रं परमशक्तिमन्तं वृत्रेषु शत्रुषु युजं योक्तारं (=अभियोक्तारं) हवामहे शत्रूणां क्षयार्थं प्रार्थयामहे ।

**अधिदैवतम्**—वयं महाधने संग्रामे इन्द्रं बलवन्तं सूर्यं वायुं वा हवामहे स्पर्धामहेऽर्भेऽल्पे च, अर्थाद् यथा वायुसूर्यौ महत्यल्पे च वर्षकर्मणि स्पर्धेते, तथैव वयं संग्रामजयार्थं स्पर्धामहे । तथा वज्रिणमिन्द्रं प्रकाशयुक्तं सूर्यं गतिमन्तं वायुं च वृत्रेषु मेघावयवेषु युजं युक्तं हवामहे स्पर्धामहे । अर्थात् यथा वायुसूर्यौ मेघान् विच्छिद्य भूमौ पातयतः, तथा वयमपि शत्रूणामङ्गानि निकृत्य भूमौ पातयामः ॥

२. सूर्यस्याभ्यर्हितत्वमाश्रित्यात्र पूर्वनिपातो ज्ञेयः । वाक्यस्य त्वयं भावः—सूर्यवाय्वोर्गुणान् विज्ञाय सद्-गुणैरस्त्राणि निर्माय्यापि युद्धे जयस्य सिद्धिर्भवति ।

३. वै० य० मुद्रितयोः प्रथमद्वितीयसंस्करणयोः 'यथेश्वरोऽप्येताभ्यां' इत्यपपाठः ।

तथा [ सूर्य और वायु के निमित्त[1] से भी इसकी ( =विजय की ) सिद्धि होती है ] । जैसे ईश्वर भी सूर्य्य और पवन के निमित्त से वर्षा आदि के द्वारा संसार का अत्यन्त सुख सिद्ध किया करता है, वैसे मनुष्य लोगों को भी पदार्थों को निमित्त करके कार्य्यसिद्धि करनी चाहिये ॥ ५ ॥

यह तेरहवां वर्ग समाप्त हुआ ॥

**मनुष्यैः सः ईश्वरः किमर्थः प्रार्थनीयः, सूर्य्यश्च किंनिमित्त इत्युपदिश्यते—**

## स नो वृषन्नमुं चरुं सत्रादावन्नपावृधि । अस्मभ्यमप्रतिष्कुतः ॥ ६ ॥

सः । नः । वृषन् । अमुम् । चरुम् । सत्राऽदावन् । अप । वृधि ॥ अस्मभ्यम् । अप्रतिऽस्कुतः ॥ ६ ॥

**पदार्थः**—(सः) **ईश्वरः सूर्य्यो वा** (नः) **अस्माकम्** (वृषन्) **वर्षति सुखानि तत्संबुद्धौ, वर्षयति जलं वा स वा** । कनिन्युवृषि० । उ० १ । १५६ **अनेन 'वृष' धातोः कनिन्प्रत्ययः** । (**अमुम्**) **मोक्षद्वारमागाम्यानन्दं चान्तरिक्षस्थम्** (**चरुम्**) **ज्ञानलाभं मेघं वा** । चरुरिति मेघनामसु पठितम् । निघं० १ । १० । (**सत्रादावन्**) [**सत्रा =**] **सत्यं ददातीति तत्संबुद्धौ,** [2]**सत्रं वृष्टयाख्यं यज्ञं समन्ताद् ददातीति स वा** । सत्रेति सत्यनामसु पठितम् । निघं० ३ । १० । **अत्र** [**दा धातोः**] आतो मनिन्क्वनिब्वनिपश्च । अ० ३ । २ । ७४ **अनेन वनिप् प्रत्ययः** । ( **अप** ) **निवारणे** । निपातस्य च । अ० ६ । ३ । १३५ **इति दीर्घः** । (**वृधि**) [3]**उद्घाटय, उद्घाटयति वा** । **'वृञ्' धातोः प्रयोगः** । बहुलं छन्दसि । अ० २ । ४ । ७३ **अनेन श्नोर्लुक्**[4] । श्रुशृणुपॄकृवृभ्यश्छन्दसि । अ० ६ । ४ । १०२ **अनेन हेर्धिः** । (**अस्मभ्यम्**) **त्वदाज्ञायां पुरुषार्थे च वर्त्तमानेभ्यः** (**अप्रतिष्कुतः**) **असञ्चलितोऽविस्मृतो वा** । यास्काचार्य्योऽस्यार्थमेवमाह—अप्रतिष्कुतो[5]ऽप्रतिष्कृतोऽप्रतिस्खलितो वेति । निरु० [ ६ । १६ ][6] ॥

**अन्वयः**—**हे** वृषन् सत्रादावन् **परमेश्वर** ! स **त्वमस्मभ्यमप्रतिष्कुतः** सन्नोऽ**स्माकममुं** चरुं **मोक्षद्वारमपावृधि उद्घाटय, इत्याद्यः** ॥

**तथा भवद्रचितोऽयं** [सत्रादावन्] **सत्रादावा** [वृषन्] **वृषाऽप्रतिष्कुतः सूर्य्यो**[नो]**ऽस्मभ्यममुं** चरुं **मेघम्** [अपावृधि] **अपावृणोत्युद्घाटयति, इत्यपरः** ॥ ६ ॥

१. अर्थात् सूर्य और वायु के गुणों को जानकर और तन्निमित्तक अस्त्रों को बनाकर ।

२. सत्रशब्दो यज्ञविशेषे प्रसिद्धो वैदिकेषु । अस्मिन्नर्थे 'अन्येषामपि दृश्यते' (अ० ६।३।१३६) इत्यनेन दीर्घत्वं द्रष्टव्यम् ।

३. अपोपसर्गसहितस्यायमर्थो निर्दिष्टः ।

४. शपो लुकि यः श्नोरभावः प्राप्तः स एवात्र निमित्तिनि निमित्तोपचारेणोक्तः । द्र०—पूर्वत्र पृष्ठ ४०८, अ० २ । ४ । ७३ सूत्रव्याख्यानम् ।

५. वै० य० मुद्रितेषु १, २, ३ संस्करणेषु 'ऽप्रतिष्कुतः' इत्यपपाठः । चतुर्थसंस्करणे 'कु' स्थाने 'कृ' यथावत् संशोधने विहितेऽपि 'अप्रतिष्कुतो अप्रतिष्कृतो०' इत्येव सन्धिविषयकाऽपराशुद्धिः कृता ।

६. वै० य० मुद्रितयोः १, २ संस्करणयोर्नास्ति ।

**भावार्थः**—यो मनुष्यो दृढतया सत्यं विद्यां [1]चेश्वराज्ञामुपतिष्ठति, तस्यात्मन्यन्तर्यामीश्वरोऽविद्यान्धकारं नाशयति । यतो नैव स पुरुषार्थाद्धर्माच्च कदाचिद्विचलति ॥६॥

मनुष्यों को परमेश्वर की प्रार्थना किस प्रयोजन के लिये करनी चाहिये, वा सूर्य्य किसका निमित्त है, इस विषय को अगले मन्त्र में कहा है—

**पदार्थान्वयभाषा**—हे ( वृषन् ) सुखों के वर्षाने और ( सत्रादावन् ) सत्यज्ञान के देनेवाले परमेश्वर ! ( सः ) आप ( अस्मभ्यम् ) हम लोग, जो कि आपकी आज्ञा वा अपने पुरुषार्थ में वर्तमान हैं, उनके लिये ( अप्रतिष्कुतः ) निश्चय करनेहारे होकर ( नः ) हमारे ( अमुम् ) उस आनन्द करानेहारे ( चरुम् ) ज्ञानरूपी मोक्ष द्वार को ( अपावृधि ) खोल दीजिये [ इत्येकः ] ॥

हे परमेश्वर ! यह आपका बनाया हुआ ( वृषन् ) जल को वर्षाने, और ( सत्रादावन् ) वृष्टिरूप यज्ञ को सब ओर देनेवाला ( अप्रतिष्कुतः ) अपनी कक्षा ही में स्थिर रहता हुआ सूर्य ( अस्मभ्यम् ) हम लोगों के लिये ( अमुम् ) आकाश में रहनेवाले इस [ ( चरुम्[2] ) ] मेघ को (अपावृधि) [खोल देता है, अर्थात् जल के रूप में] भूमि में गिरा देता है [इति द्वितीयः] ॥ ६ ॥

**भावार्थ**—जो मनुष्य अपनी दृढ़ता से सत्य विद्या और ईश्वर की आज्ञा का अनुष्ठान=पालन करता है, अन्तर्यामी परमेश्वर उसके आत्मा में से अविद्यारूपी अन्धकार का नाश कर देता है, जिससे वह पुरुष धर्म और पुरुषार्थ को कभी नहीं छोड़ता ॥ ६ ॥



[3]इन्द्रशब्देनेश्वर उपदिश्यते—

तुञ्जेतु॑ञ्जे॒ य उत्त॑रे॒ स्तोमा॒ इन्द्र॑स्य व॒ज्रिणः॑ । न वि॑न्धे अस्य सुष्टु॒तिम् ॥ ७ ॥

तुञ्जेऽतु॑ञ्जे । ये । उत्ऽत॑रे । स्तोमाः॑ । इन्द्र॑स्य । व॒ज्रिणः॑ ॥ न । वि॒न्धे॒ । अ॒स्य॒ । सु॒ऽस्तु॒तिम् ॥७॥

**पदार्थः**—(तुञ्जेतुञ्जे) दातव्ये दातव्ये (ये) (उत्तरे) सिद्धान्तसिद्धाः (स्तोमाः) स्तुतिसमूहाः (इन्द्रस्य) सर्वदुःखविनाशकस्य (वज्रिणः) वज्रोऽनन्तं प्रशस्तं वीर्य्यमस्यास्तीति तस्य । अत्र भूमार्थे प्रशंसार्थे[4] च मतुप् । वीर्य्यं वै वज्रः । श० ७ । ४ । २ । २४ ।[5] ( नः ) निषेधार्थे

1. चकारस्य संबन्धः 'विद्यामीश्वराज्ञां चोपतिष्ठति' इत्येवं प्रकारेण द्रष्टव्यः ।

2. वै० य० मुद्रित संस्करण ४ में परिवर्धित ।　　3. वै० य० मुद्रिते 'पुनरिन्द्रशब्देन' इत्यपपाठः । यतः क. ग. हस्तलेखयोर्मन्त्रभूमिकायां पदार्थे च सूर्यव्याख्यानपराणि पदानि पूर्वमन्त्रव्याख्याने नासन् । अतोऽत्र 'पुनः' पदं युक्तमासीत् । मुद्रणकाले तेषां परिवर्धनादत्र 'पुनः' पदमकिञ्चित्करं संजातम् ।

4. द्र०—भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ महा० ५ । २ । ९४ ॥　　5. अध्यायानुसारं श० ७ । ५ । २ । २४ ॥

(विन्धे) विन्दामि। अत्र वर्णव्यत्ययेन दकारस्य धकारः। (अस्य) परमेश्वरस्य [1] (सुष्टुतिम्) शोभनां स्तुतिम्॥

यास्कमुनिरिमं मन्त्रमेवं व्याख्यातवान्—तुञ्जस्तुञ्जतेर्दानकर्मणः। दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं स्तुतेः। निरु० ६। १८॥ ७॥

अन्वयः—[2]नाहं ये तुञ्जेतुञ्जे उत्तरे स्तोमाः सन्ति, तैर् [अस्य] वज्रिण इन्द्रस्य परमेश्वरस्य सुष्टुतिं विन्धे विन्दामि॥ ७॥

भावार्थः—ईश्वरेणास्मिन् जगति जीवानां सुखायैतेषु पदार्थेषु स्वशक्तेर्यावन्तो दृष्टान्ता यादृशं रचनं यादृशा गुणा उपकारार्थं रक्षिता वर्त्तन्ते, तावतः सम्पूर्णान् वेत्तुं[3] नाहं समर्थोऽस्मि। नैव कश्चिदीश्वरगुणानां समाप्तिं वेत्तुमर्हति। कुतः? तस्यैतेषामनन्तत्वात्। परन्तु मनुष्यैरेतेभ्यः पदार्थेभ्यो यावानुपकारो ग्रहीतुं शक्योऽस्ति, तावान् प्रयत्नेन ग्राह्य इति॥ ७॥

[4]अगले मन्त्र में इन्द्र शब्द से परमेश्वर का प्रकाश किया है—

पदार्थान्वयभाषा—(ये) जो (तुञ्जेतुञ्जे) पदार्थ-पदार्थ के देने में (उत्तरे) सिद्धान्त-रूप से निश्चित (स्तोमाः) स्तुतियों के समूह हैं, उनसे (वज्रिणः) अनन्त पराक्रमवान्, (इन्द्रस्य) सब दुःखों के विनाश करनेहारे (अस्य) [इस] परमेश्वर की (सुष्टुतिम्) शोभायमान स्तुति का पार मैं जीव ([5]न) नहीं (विन्धे) पा सकता हूं॥ ७॥

भावार्थ—ईश्वर ने इस संसार में प्राणियों के सुख के लिये इन पदार्थों में अपनी शक्ति से जितने दृष्टान्त, वा उनमें जिस प्रकार की रचना, और उनके अलग-अलग गुण उनसे उपकार लेने के लिए रक्खे हैं, उन सब के जानने को मैं अल्पबुद्धि पुरुष होने से समर्थ कभी नहीं हो सकता, और न कोई मनुष्य ईश्वर के गुणों की समाप्ति जानने को समर्थ है। क्योंकि जगदीश्वर अनन्त गुण और अनन्त सामर्थ्यवाला है। परन्तु मनुष्य इन पदार्थों से जितना उपकार लेने को समर्थ हों, उतना सब प्रकार से ले लेना चाहिये॥ ७॥



---

१. वै० य० मुद्रितेषु संस्करणेषु '(सुष्टुतिम्)' पदमस्थाने पठ्यते।

२. 'न' पदस्य सम्बन्धोऽन्ते क्रियया सह ज्ञेयः।

३. यद्यपि 'विद ज्ञाने' धातुरुदात्तः पठ्यते, तेनात्रेटा भाव्यम्, तथापि शिष्टप्रयोगेष्वस्यानिट्त्वमपि दृश्यते। तथाहि—वेत्तासि वेद्यं च परं च धाम (गीता ११।३८), यथा खरश्चन्दनभारवाही भारस्य वेत्ता न तु चन्दनस्य (सुभाषितम्) इति। तथा चाहुर्वैयाकरणाः—अनित्यमागमशास्त्रम् (सीरदेव परि० १०१) आगमशास्त्रमनित्यम् (परिभाषेन्दुशेखर ९४) इति वा। भाष्यकर्त्रा स्वामिदयानन्देन बहुत्र विदधातोरनिटो-रूपाणि प्रयुज्यन्ते।

४. वै० य० मुद्रित में 'फिर भी' अपपाठ है। द्र०—पृ० ५४०, टि० ३।

५. संस्कृत अन्वय में 'नाहं' पद प्रारम्भ में पढ़े हैं, फिर भी भाषा के अनुरोध से यहाँ युक्त हैं। वै० य० मुद्रित संस्करण १, २, ३ में '(न) नहीं मैं' पद भावार्थ में भी प्रारम्भ में हैं। सं० ४ में यथा-स्थान छापे गये।

ईश्वरो मनुष्यान् कथं प्राप्नो[[1]ति सूर्यश्च किं करो]तीत्युपदिश्यते—

वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा । ईशानो अप्रतिष्कुतः ॥ ८ ॥

वृषा । यूथाऽइव । वंसगः । कृष्टीः । इयर्ति । ओजसा ॥ ईशानः । अप्रतिऽस्कुतः ॥ ८ ॥

पदार्थः—(वृषा) शुभगुणवर्षणकर्त्ता[2] (यूथेव) गोसमूहान् वृषभ इव । तिथपृष्ठ० । उ० १ । १२ । [इत्यत्र यूथपदं निपातितम्] (वंसगः) वंसं धर्मसेविनं संविभक्तपदार्थान् [वा] गच्छतीति । (कृष्टीः) मनुष्यानाकर्षणादिव्यवहारान् वा (इयर्ति) प्राप्नोति (ओजसा) [स्वसामर्थ्येन] बलेन (ईशानः) ऐश्वर्यवान् ऐश्वर्यहेतुः सृष्टेः कर्त्ता, प्रकाशको वा (अप्रतिष्कुतः) सत्यभावनिश्चयाभ्यां याचितोऽनुग्रहीता स्वकक्षां विहायेतस्ततो ह्यचलितो वा ॥ ८ ॥

अन्वयः—वंसगो वृषा [ओजसा यूथेव] यूथानीवाप्रतिष्कुत ईशानो [वंसगो] वृषेश्वरः सूर्य्यश्चौजसा बलेन कृष्टीर्धर्मात्मनो मनुष्यान् आकर्षणादिव्यवहारान् वेयर्त्ति प्राप्नोति ॥ ८ ॥

अत्र [3]श्लेषोपमालङ्कारौ ।

भावार्थः—मनुष्या एवेश्वरं प्राप्तुं समर्थास्तेषां ज्ञानोन्नतिकरणस्वभाववत्वात् । धर्मात्मनो मनुष्यानेव प्राप्तुमीश्वरस्य स्वभाववत्त्वाद् यथैत एतं प्राप्नुवन्ति तथेश्वरेण नियोजितत्वादयं सूर्य्योऽपि स्वसंनिहितान् लोकानाकर्षितु[4] समर्थोऽस्तीति ॥ ८ ॥

परमेश्वर मनुष्यों को कैसे प्राप्त होता है, [और सूर्य क्या करता है,] सो अर्थ अगले मन्त्र में प्रकाशित किया है—

पदार्थान्वयभाषा—[5](इव) जैसे (वंसगः) यथायोग्य गायों का विभागपूर्वक सेवन करनेहारा, (वृषा) वीर्यसेचन करनेहारा सांड (ओजसा) अपने बल से (यूथा) गाय के समूहों को प्राप्त होता है, वैसे ही (अप्रतिष्कुतः) सत्य स्वभाव और निश्चय से याचना किया हुआ (ईशानः) ऐश्वर्यवान्, जगत् का रचनेवाला ([6]वंसगः) धर्म का सेवन करनेवालों को

१. प्रथमं भाष्यकृतायं मन्त्र ईश्वरपर एव व्याख्यात आसीत् । पश्चात् श्लेषालंकारेण सूर्यपरोऽपि व्याख्यातः । अतोऽत्रास्माभिः कोष्ठान्तर्गतः पाठो वर्धितः ।

२. शुभगुणानां वर्षकः, वृष्टेश्च कर्त्ता इत्युभावर्थाविह ज्ञेयौ ।

३. वै० य० मुद्रितेषु संस्करणेषु 'श्लेषालङ्कारः' इत्येवमपपाठः, मन्त्रे साक्षादुपमार्थकस्येवपदस्य प्रयोगात् । भाषायां तु सम्यक् पाठ उपलभ्यते ।

४. कृषधातोरनुदात्तत्वादिण्न प्राप्नोति, तथापि पतधातोः सनि इटो विकल्पनात् (अ० ७।२।४९ वा०) 'यस्य विभाषा' (अ० ७।२।१५) इति नियमान्निष्ठायां नित्येड्भावे प्राप्ते पाणिनिः 'द्वितीया श्रितातीतपतित०' (अ० २।१।२४) सूत्रे पतितशब्दं प्रयुङ्क्ते, तेनेड्भावविधायकानां नियमानामनित्यत्वं द्योत्यते । अत्र अष्टा० ७।२।१५, १६ सूत्रयोः काशिकावृत्तिरनुसंधेया ।

५. वै० य० मुद्रित संस्करणों में भाषा-पदार्थ दोनों प्रकार के अर्थों का मिला हुआ अधूरा छपा है । हमने ग्रन्थकार की शैली के अनुसार दोनों अर्थों को पृथक्-पृथक् दर्शा दिया है ।

६. उपमा को स्पष्ट करने के लिये मन्त्रगत कुछ शब्द दुबारा पढ़ दिये हैं ।

प्राप्त होनेवाला ( वृषा ) शुभ गुणों की वर्षा करनेवाला ईश्वर ( ओजसा ) स्वसामर्थ्य से ( कृष्टीः ) मनुष्यों को ( इयर्ति ) प्राप्त होता है, इत्येकः ।।

तथा ( इव ) जैसे ( वंसगः ) यथायोग्य गायों का विभाग पूर्वक सेवन करनेहारा (वृषा) वीर्यसिंचन करनेहारा सांड ( ओजसा ) अपने बल से ( यूथा ) गायों के समूहों को प्राप्त होता है, वैसे ही ( अप्रतिष्कुतः ) स्वयं अनुगृहीत स्वकक्षा को छोड़कर चलायमान न होनेवाला ( ईशानः ) ऐश्वर्य के हेतु सृष्टि का प्रकाशक ( वंसगः ) अलग-अलग हुए सभी पदार्थों को स्वकिरणों से प्राप्त होनेवाला ( वृषा ) वर्षा करनेवाला ( ओजसा ) अपने बल से ( कृष्टीः ) आकर्षण आदि व्यवहारों को ( इयर्ति ) प्राप्त होता है, इति द्वितीयः ।। ८ ।।

इस मन्त्र में उपमा और श्लेषालङ्कार है ।

**भावार्थ**—मनुष्य ही परमेश्वर को प्राप्त हो सकते हैं, क्योंकि वे ज्ञान की वृद्धि करने के स्वभाववाले होते हैं। और धर्मात्मा ज्ञानवाले मनुष्यों को [ ही ] प्राप्त होने का परमेश्वर का स्वभाव है। तथा जो ईश्वर ने रचकर [ स्व ]कक्षा में स्थापन किया हुआ सूर्य है, वह [ भी ] अपने सामने अर्थात् समीप के लोकों को [ [1]लोहे को चुम्बक पत्थर के समान ] खींचने को समर्थ होता है ।। ८ ।।



**ईश्वर एव सर्वथा सहायकार्य्यस्तीत्युपदिश्यते—**

**य एकश्चर्षणीनां वसूनामिरज्यति । इन्द्रः पञ्च क्षितीनाम् ।। ९ ।।**

यः । एकः । चर्षणीनाम् । वसूनाम् । इरज्यति ।। इन्द्रः । पञ्च । क्षितीनाम् ।। ९ ।।

**पदार्थः**—(यः) परमेश्वरः (एकः) अद्वितीयः (चर्षणीनाम्) मनुष्याणाम् । चर्षणय इति मनुष्यनामसु पठितम् । निघं० २ । ३ । ( वसूनाम् ) अग्न्याद्यष्टानां वासहेतूनां लोकानाम् (इरज्यति) ऐश्वर्य्यं दातुं सेवितुं च योग्योऽस्ति । इरज्यतीत्यैश्वर्य्यकर्मसु पठितम् । निघं० २ । २१ । परिचरणकर्मसु च । निघं० ३ । ५ । (इन्द्रः) दुष्टानां शत्रूणां विनाशकः (पञ्च) निकृष्टमध्यमोत्तमोत्तमतरोत्तमतमानां पञ्चविधानाम् ( क्षितीनाम् ) पृथिवीलोकानां मध्ये । क्षितिरिति पृथिवीनामसु पठितम् । निघं० १ । १ ।। ९ ।।

**अन्वयः**—य इन्द्रश्चर्षणीनां वसूनां [पञ्च] पञ्चानां क्षितीनामिरज्यति स एकोऽस्ति ।।९।।

**भावार्थः—यः सर्वाधिष्ठाता सर्वान्तर्यामी व्यापकः सर्वैश्वर्यप्रदोऽद्वितीयोऽसहायो जगदीश्वरः सर्वजगतो रक्षको धारक आकर्षणकर्त्ताऽस्ति, स एव सर्वैर्मनुष्यैरिष्टत्वेन सेवनीयोऽस्ति । यः कश्चित्तं विहायान्यमीश्वरभावेनेष्टं मन्यते, स भाग्यहीनः सदा दुःखमेव प्राप्नोति ।। ९ ।।**

---

१. कोष्ठान्तर्गत पाठ वै० य० मुद्रित संस्करणों में है, परन्तु संस्कृत-भाग में नहीं है ।

सब प्रकार से सब का सहायकारी परमेश्वर ही है, इस विषय को अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—( यः ) जो ( इन्द्रः ) दुष्ट शत्रुओं का विनाश करनेवाला परमेश्वर ( चर्षणीनाम् ) मनुष्य [ तथा ] ( वसूनाम् ) अग्नि आदि आठ निवास के स्थान, और (पञ्च) जो नीच मध्यम उत्तम उत्तमतर और उत्तमतम गुणवाले पांच प्रकार के ( क्षितीनाम् ) पृथिवी लोक हैं, उन्होंके बीच ( इरज्यति ) ऐश्वर्य के देने और सब के सेवा करने योग्य वह (एकः) अद्वितीय [ और सब का सहाय करनेवाला ] है ॥ ९ ॥

**भावार्थ**—जो सब का स्वामी अन्तर्यामी व्यापक और सब ऐश्वर्य का देनेवाला, जिससे भिन्न कोई दूसरा ईश्वर और जिसको किसी दूसरे की सहाय की आवश्यकता नहीं है, [ ऐसा सब जगत् की रचना धारण और आकर्षण (=नियम में चलाना) करनेवाला जगदीश्वर है,] वही सब मनुष्यों को इष्ट बुद्धि से सेवा करने योग्य है। जो मनुष्य उस परमेश्वर को छोड़कर दूसरों को इष्ट देव मानता है, वह भाग्यहीन बड़े-बड़े घोर दुःखों को सदा प्राप्त होता है ॥ ९ ॥



**अयमेव सर्वोपरि वर्त्तत इत्युपदिश्यते —**

**इन्द्रं॑ वो वि॒श्वत॒स्परि॒ हवा॑महे॒ जने॑भ्यः । अ॒स्माक॑मस्तु॒ केव॑लः ॥ १० ॥**

इन्द्र॑म् । वः॒ । वि॒श्वतः॑ । परि॑ । हवा॑महे । जने॑भ्यः ॥ अ॒स्माक॑म् । अ॒स्तु॒ । केव॑लः ॥ १० ॥

**पदार्थः**—( **इन्द्रम्** ) पृथिव्यां राज्यप्रदम् (**वः**) युष्माकम् ( **विश्वतः** ) सर्वेभ्यः ( **परि** ) सर्वतोभावे । परीति सर्वतोभावं प्राह । निरु० १ । ३ । ( **हवामहे** ) स्तुवीमः ( **जनेभ्यः** ) प्रादुर्भूतेभ्यः ( **अस्माकम्** ) मनुष्याणाम् ( **अस्तु** ) भवतु ( **केवलः** ) एकश्चेतनमात्रस्वरूप एवेष्टदेवः ॥ १० ॥

**अन्वयः**—हे मनुष्याः ! य वयं विश्वतो जनेभ्यः सर्वगुणैरुत्कृष्टमिन्द्रं परमेश्वरं परिहवामहे, स एव वो युष्माकमस्माकं च केवलः पूज्य इष्टोऽस्तु[1] ॥ १० ॥

**भावार्थः**—ईश्वरोऽस्मिन् मन्त्रे सर्वजनहितायोपदिशति—हे मनुष्या ! युष्माभिर्नैव कदाचिन्मां विहायान्य उपास्यदेवो मन्तव्यः। कुतः ? नैव मत्तोऽन्यः कश्चिदीश्वरो वर्त्तते । एवं सति यः कश्चिदीश्वरत्वेऽनेकत्वमाश्रयति स मूढ एव मन्तव्य इति ॥ १० ॥

अत्र सप्तमे सूक्ते येनेश्वरेण रचयित्वाऽन्तरिक्षे कार्योपकरणार्थौ वायुसूर्यौ स्थापितौ स एवैकः सर्वशक्तिमान् सर्वदोषरहितः सर्वमनुष्यपूज्योऽस्तीति व्याख्यातमित्येतत्सूक्तार्थेन सहास्य षष्ठसूक्तार्थस्य सङ्गतिरिति बोध्यम् ।

इदमपि सूक्तं सायणाचार्यादिभिर्यूरोपाख्यदेशनिवासिभिश्चासदर्थं व्याख्यातमिति सर्वैर्मन्तव्यम् ॥ १० ॥

**इति द्वितीयोऽनुवाकस्सप्तमं सूक्तं वर्गश्च चतुर्दशः समाप्तः ॥**

१. वै० य० मुद्रितेषु संस्करणेषु 'इष्टोऽस्ति' इत्यपपाठः ।

उक्त परमेश्वर ही सर्वोपरि विराजमान है, इस विषय का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—[हे मनुष्य लोगो ! ]हम लोग (विश्वतः) सब पदार्थों वा(जनेभ्यः)सब प्राणियों से ( परि ) उत्तम-उत्तम गुणों करके श्रेष्ठतर ( इन्द्रम् ) पृथिवी में राज्य देनेवाले जिस परमेश्वर का (हवामहे)वार-वार अपने हृदय में स्मरण करते हैं, वही परमेश्वर (वः) तुम्हारे और [ (अस्माकम्) ] हमारे पूजा करने योग्य इष्टदेव (केवलः) चेतनमात्र स्वरूप एक ही होवे ॥१०॥

**भावार्थ**—ईश्वर इस मन्त्र में सब मनुष्यों के हित के लिये उपदेश करता है—हे मनुष्यो ! तुमको अत्यन्त उचित है कि मुझे छोड़कर उपासना करने योग्य किसी दूसरे देव को कभी मत मानो। क्योंकि एक मुझको छोड़कर कोई दूसरा ईश्वर नहीं है। जब वेद में ऐसा उपदेश है, तो जो मनुष्य अनेक ईश्वर वा उसके अवतार मानता है, वह सबसे बड़ा मूढ़ है ॥ १० ॥

इस सप्तम सूक्त में जिस ईश्वर ने अपनी रचना से कार्य और उपकार के लिये अन्तरिक्ष में सूर्य्य और वायु स्थापन किये हैं, वही एक सर्वशक्तिमान् सर्वदोषरहित और सब मनुष्यों का पूज्य है। इस व्याख्यान से इस सप्तम सूक्त के अर्थ के साथ छठे सूक्त के अर्थ की सङ्गति जाननी चाहिये ॥

इस सूक्त के मन्त्रों के अर्थ **सायणाचार्य्य** आदि आर्य्यावर्त्तवासियों और **विलसन** आदि अंगरेज् लोगों ने भी उलटे किये हैं ॥ १० ॥

यह दूसरा अनुवाक, सातवां सूक्त, और चौदहवां वर्ग समाप्त हुआ ॥



अथास्य दशर्चस्याष्टमसूक्तस्य मधुच्छन्दा ऋषिः । इन्द्रो देवता । १, ५, ८ निचृद्गायत्री; २ विराड्गायत्री[1]; ३, ४, ६, ७, ९ गायत्री; १० वर्धमाना गायत्री च छन्दः । षड्जः स्वरः ॥

**तत्र कीदृशं धनमीश्वराऽनुग्रहेण स्वपुरुषार्थेन च प्रापणीयमित्युपदिश्यते—**

एन्द्र॑ सान॒सिं र॒यिं स॒जित्वा॑नं सदा॒सह॑म् । वर्षि॑ष्ठमू॒तये॑ भर ॥ १ ॥

आ । इ॒न्द्र॒ । सा॒न॒सिम् । र॒यिम् । स॒ऽजित्वा॑नम् । स॒दा॒ऽसह॑म् ॥ वर्षि॑ष्ठम् । ऊ॒तये॑ । भ॒र ॥ १ ॥

**पदार्थः**—( आ ) समन्तात् ( इन्द्र ) परमधनप्रदेश्वर ! ( सानसिम् ) संभजनीयम् । सानसिवर्णसि० । उ० ४ । १०७ अनेनायं 'सन' धातोरसिप्रत्ययान्तो निपातितः । ( रयिम् ) धनम् (सजित्वानम्) समानानां शत्रूणां विजयकारकम् । अत्र अन्येभ्योऽपि दृश्यन्ते । अ० ३ । २ । ७५ अनेन 'जि' धातोः क्वनिप्प्रत्ययः । (सदासहम्) सर्वदा दुष्टानां शत्रूणां हानिकारकं दुःखानां च सहनहेतुम् (वर्षिष्ठम्) अतिशयेन वृद्धं वृद्धिकारकम् । अत्र वृद्धशब्दादिष्ठन् वर्षिरादेशश्च[2] । (ऊतये) रक्षणाद्याय पुष्टये (भर) धारय ॥ १ ॥

---

१. वै० य० मुद्रितेषु संस्करणेषु 'प्रतिष्ठागायत्री' इत्यपपाठो द्वाविंशत्यक्षरत्वात् ।

२. 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्ध०' (अ० ६ । ४ । १५७ ) इत्यादिना वर्षिरादेशः ।

**अन्वयः**—हे इन्द्र ! कृपयाऽस्माकमूतये[1] वर्षिष्ठं सानसिं सदासहं सजित्वानं रयिमाभर ॥ १ ॥

**भावार्थः—मनुष्यैः सर्वशक्तिमन्तमन्तर्यामिनमीश्वरमाश्रित्य परमपुरुषार्थेन च सर्वोपकाराय चक्रवर्त्तिराज्यानन्दकारकं विद्याबलं सर्वोत्कृष्टं सुवर्णसेनादिकं बलं च सर्वथा संपादनीयम् । यतः स्वस्य सर्वेषां च सुखं स्यादिति ॥ १ ॥**

अब अष्टमसूक्त के प्रथम मन्त्र में यह उपदेश है कि ईश्वर के अनुग्रह और अपने पुरुषार्थ से कैसा धन प्राप्त करना चाहिये—

**पदार्थान्वयभाषा**—हे ( इन्द्र ) परमेश्वर ! आप कृपा करके हमारी ( ऊतये ) रक्षा पुष्टि और सब सुखों की प्राप्ति के लिये, ( वर्षिष्ठम् ) जो अच्छी प्रकार वृद्धि करनेवाला, ( सानसिम् ) निरन्तर सेवने के योग्य, ( सदासहम् ) दुष्ट शत्रुओं की हानि वा दुःखों के सहने के मुख्य हेतु, और ( सजित्वानम् ) तुल्य शत्रुओं का जितानेवाला ( रयिम् ) धन है, उसको ( आभर ) अच्छी प्रकार दीजिये ॥ १ ॥

**भावार्थ**—सब मनुष्यों को सर्वशक्तिमान् अन्तर्यामी ईश्वर का आश्रय लेकर अपने पूर्ण पुरुषार्थ के साथ [ सब के उपकार के लिये ] चक्रवर्त्ति राज्य के आनन्द को बढ़ानेवाली विद्या [ और बल, सर्वोत्कृष्ट ] सुवर्ण आदि धन, और सेना आदि बल सब प्रकार से रखना चाहिये । जिससे अपने आपको और सब प्राणियों को सुख हो ॥ १ ॥



कीदृशेन धनेन [ परमं सुखं भवति, ] इत्युपदिश्यते—

नि येन॑ मुष्टिह॒त्यया॒ नि वृ॒त्रा रु॒णधा॑महै । त्वोता॑सो॒ न्यर्व॑ता ॥ २ ॥

नि । येन॑ । मु॒ष्टि॒ऽह॒त्यया॑ । नि । वृ॒त्रा । रु॒णधा॑महै ॥ त्वाऽऊ॑तासः । नि । अर्व॑ता ॥ २ ॥

**पदार्थः—(नि) नितरां क्रियायोगे (येन) पूर्वोक्तेन धनेन (मुष्टिहत्यया) हननं हत्या मुष्टिभिर्हत्या[2] मुष्टिहत्या तया (नि) निश्चयार्थे (वृत्रा) मेघवत् सुखावरकान् शत्रून् । अत्र सुपां सुलुग्० [ अ० ७ । १ । ३९ ] इति शसः स्थाने आजादेशः । ( रुणधामहै[3] ) निरुन्ध्याम**

१. वै० य० मुद्रितेषु संस्करणेषु 'कृपयाऽस्मदूतये' इत्यपपाठः । नह्यध्याहृतेन मन्त्रपदस्य समास उचितः ।

२. अर्थनिदर्शनपरमिदं वाक्यम् । विग्रहस्तु मुष्टिभिर्हननं मुष्टिहत्या इत्येव । यत्त्वत्र सायणेन 'कृदुत्तरपदप्रकृतिस्वरे प्राप्ते परादिश्छन्दसि बहुलम् (अ० ६।२।१९९) इति बहुलग्रहणेन त्रिचक्रादीनां छन्दस्यन्तोदात्तत्वम्' इत्युक्तं, तच्चिन्त्यम् । हनस्त च ( अ० ३।१।१०८ ) सूत्रभाष्य एव 'हनश्चित् स्त्रियां छन्दसि' इति प्रत्यक्षपठितेन वार्तिकेन चित्त्वस्य विधानात् ।

३. अस्योदात्तत्वसिद्धये सायणेन 'चादिलोपे विभाषा' ( अ० ८ । १ । ६३ ) सूत्रमुपन्यस्य द्वितीयतिङ्विभक्तिसमर्थनाय यत् किञ्चित् प्रलपितं, तत्सर्वं चिन्त्यमेव । यतो ह्यत्र प्रत्यक्षं 'येन' पदं श्रूयते, तद्योगे च 'यद्वृत्तान्नित्यम्' ( अ० ८।१।६६ ) इत्यनेन निघातप्रतिषेधः स्पष्ट एव । यदुच्येत पञ्चमीनिर्देशाद् अव्यवहितस्य निघाताभावेन भाव्यम्, तदपि न । छन्दसि व्यवहितेऽपि निघाताभाव इष्यते (द्र०—काशिका ८।१।६६)।

(त्वोतासः[1]) त्वया जगदीश्वरेण रक्षिताः सन्तः (नि) निश्चयार्थे (अर्वता) अश्वादिभिः सेनाङ्गैः । अर्वेत्यश्वनामसु पठितम् । निघं० १ । १४ ॥ २ ॥

**अन्वयः**—हे जगदीश्वर ! त्वं त्वोतासस्त्वया रक्षिता सन्तो वयं येन धनेन मुष्टि-हत्यया [न्य]र्वता निवृत्रा निश्चितान् शत्रून् निरुणधामहै, तेषां सर्वदा निरोधं करवामहै, तदस्मभ्यं देहि ॥ २ ॥

**भावार्थः**—ईश्वरेष्टैर्मनुष्यैः शरीरात्मबलैः सर्वसामर्थ्येन श्रेष्ठानां पालनं दुष्टानां निग्रहः सर्वदा कार्य्यः । यतो मुष्टिप्रहारमसहमानाः शत्रवो विलीयेरन् ॥ २ ॥

कैसे धन से परम सुख होता है, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—हे जगदीश्वर ! [आप] (त्वोतासः) आपके सकाश से रक्षा को प्राप्त हुए हम लोग ( येन ) जिस पूर्वोक्त धन से ( मुष्टिहत्यया ) बाहुयुद्ध और ( न्यर्वता ) निश्चित अश्व आदि सेना की सामग्री से ( निवृत्रा ) निश्चित शत्रुओं को ( निरुणधामहै ) रोकें, अर्थात् उनको निर्बल कर सकें, ऐसे उत्तम धन का दान हम लोगों के लिये कृपा से दीजिये ॥ २ ॥

**भावार्थ**—ईश्वर के सेवक मनुष्यों को उचित है कि अपने शरीर और आत्मा के बल को बहुत बढ़ावें । जिससे श्रेष्ठों का पालन और दुष्टों का अपमान सदा होता रहे । और जिससे शत्रु-जन उनके मुष्टिप्रहार को न सह सकें, इधर-उधर छिपते-भागते फिरें ॥ २ ॥



मनुष्याः किं धृत्वा शत्रून् जयन्तीत्युपदिश्यते—

इन्द्र॒ त्वोता॑स॒ आ व॒यं वज्रं॑ घ॒ना द॑दीमहि । जये॑म॒ सं यु॒धि स्पृधः॑ ॥ ३ ॥

इन्द्र॑ । त्वाऽऊ॑तासः । आ । व॒यम् । वज्र॑म् । घ॒ना । द॒दी॒म॒हि॒ ॥ जये॑म । सम् । यु॒धि । स्पृधः॑ ॥३॥

**पदार्थः**—( इन्द्रः ) अनन्तबलेश्वर ! ( त्वोतासः ) त्वया बलं प्रापिताः ( आ ) क्रियार्थे (वयम्) बलवन्तो धार्मिका शूराः (वज्रम्) शत्रूणां बलच्छेदकमाग्नेयादिशस्त्रास्त्रसमूहम् (घना) शतघ्नीभुसुण्डचसिचापबाणादीनि दृढानि युद्धसाधनानि । शेश्छन्दसि बहुलम् [अ० ६ । १ । ६८] इति [शेर्]लुक् । (ददीमहि) गृह्णीमः । अत्र लडर्थे लिङ् । (जयेम) (सम्) क्रियार्थे[2] (युधि) संग्रामे (स्पृधः) स्पर्धमानान् शत्रून् । 'स्पर्ध सङ्घर्षे' इत्यस्य क्विबन्तस्य रूपम् । बहुलं छन्दसि । अ० ६ । १ । ३३ अनेन[3] संप्रसारणमल्लोपश्च ॥ ३ ॥

---

१. प्रत्ययोत्तरपदयोश्च (अ० ७।२।९८) इत्यादिना मपर्यन्तस्य त्वादेशे दकारलोपश्छान्दसो वर्णलोपो वा (द्र०—८ । २ । २५ भा०) इत्यनेन विज्ञेयः । पदकारस्तु 'त्वा' आदेशं मनुते—'त्वाऽउतासः' इत्येवमवग्रह-निर्देशाज्ज्ञायते ।

२. 'जयेम' क्रियाया योऽर्थस्तस्मिन्नेव । यद्वाऽत्र 'क्रियायोगे' पाठो द्रष्टव्यः ।

३. यद्यप्यत्र वृत्तिकाराः पूर्वसूत्राद् 'ह्वः' पदमनुवर्तयन्ति, तथापि बहुलग्रहणादन्यतोऽपि संप्रसारणं

अन्वयः—हे इन्द्र ! त्वोतासो वयं स्वविजयार्थं वज्रं घना आददीमहि । यतो वयं युधि स्पृधो [सं][1] जयेम ॥ ३ ॥

भावार्थः—मनुष्यैर्धर्मेश्वरावाश्रित्य शरीरपुष्टिं विद्यात्मबलं पूर्णां युद्धसामग्रीं परस्परमविरोधमुत्साहमित्यादिसद्गुणान् गृहीत्वा सदैव दुष्टानां शत्रूणां पराजयकरणेन सुखयितव्यम् ॥ ३ ॥

मनुष्य किसको धारण करने से शत्रुओं को जीत सकते हैं, सो अगले मन्त्र में प्रकाश किया है—

पदार्थान्वयभाषा—हे ( इन्द्र ) अनन्तबलवान् ईश्वर ! ( त्वोतासः ) आपके सकाश से रक्षा आदि और बल को प्राप्त हुए (वयम्)हम लोग[बलवान्]धार्मिक और शूरवीर होकर अपने विजय के लिये ( वज्रम् ) शत्रुओं के बल को नाश करने का हेतु आग्नेयास्त्रादि अस्त्र, और ( घना ) सुदृढ़ श्रेष्ठ शस्त्रों के समूह, जिनको कि भाषा में तोप बन्दूक तलवार और धनुष् बाण आदि कहते हैं, जो युद्ध की सिद्धि में हेतु हैं, उनको ( आददीमहि ) ग्रहण करते हैं। जिससे हम लोग आपके बल का आश्रय और सेना की पूर्ण सामग्री करके ( युधि ) संग्राम में ( स्पृधः ) ईर्ष्या करनेवाले शत्रुओं को ( [सं] जयेम) [अच्छे प्रकार] जीतें ॥ ३ ॥

भावार्थ—मनुष्यों को उचित है कि धर्म और ईश्वर के आश्रय से शरीर की पुष्टि, और विद्या करके आत्मा का बल, तथा युद्ध की पूर्ण सामग्री, परस्पर अविरोध और उत्साह आदि श्रेष्ठ गुणों को ग्रहण करके दुष्ट शत्रुओं के पराजय करने से अपने, और सब प्राणियों के लिये सुख सदा बढ़ाते रहें ॥ ३ ॥



कस्य कस्य सहायेनैतत् सिध्यतीत्युपदिश्यते—

वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम् । सासह्याम पृतन्यतः ॥ ४ ॥

वयम् । शूरेभिः । अस्तृऽभिः । इन्द्र । त्वया । युजा । वयम् ॥ ससह्याम । पृतन्यतः ॥ ४ ॥

पदार्थः—( वयम् ) सभाध्यक्षाः सेनापतिवराः ( शूरेभिः ) सर्वोत्कृष्टशूरवीरैः । अत्र बहुलं छन्दसि [अ० ७ । १ । १०] इति भिस ऐसादेशो न । ( अस्तृभिः ) सर्वशस्त्रास्त्रप्रक्षेपणदक्षैः सह ( इन्द्र ) युद्धोत्साहप्रदेश्वर ! ( त्वया ) अन्तर्यामिणेष्टेन ( युजा ) कृपया धार्मिकेषु स्वसामर्थ्यसंयोजकेन ( वयम् ) योद्धारः ( सासह्याम ) पुनः पुनः सहेमहि । अत्र व्यत्ययेन परस्मैपदं लिङर्थे लोट् च । ( पृतन्यतः ) आत्मनः पृतनामिच्छतः शत्रून् ससेनान् । पृतनाशब्दात् क्यच् । कव्यध्वरपृतनस्यर्चि लोपः । अ० ७ । ४ । ३९ अनेन ऋचि ऋग्वेद एवाकारलोपः ॥ ४ ॥

भवतीत्याश्रित्य ग्रन्थकृता सूत्रमिदमुपन्यस्तम् । अकारलोपश्चात्र छान्दस एव । यद्वा—'अपस्पृधेथामानृचु०' (अ० ६।१।३५) सूत्रे अपस्पृधेथामित्यस्य निदर्शनार्थत्वमाश्रयणीयम् ।

1. वै० य० मुद्रिते चतुर्थसंस्करणे परिवर्धितः ।

**अन्वयः**—हे इन्द्र ! युजा त्वया [युक्ता] वयमस्तृभिः शूरेभिर्योद्धृभिः सह पृतन्यतः शत्रून् सासह्यामैवंप्रकारेण [वयं] चक्रवर्तिराजानो भूत्वा नित्यं प्रजाः पालयेम ॥ ४ ॥

**भावार्थः**—शौर्य्यं द्विविधं पुष्टिजन्यं शरीरस्थं विद्याधर्मजन्यमात्मस्थं च, एताभ्यां सह वर्त्तमानैर्मनुष्यैः परमेश्वरस्य सृष्टिरचनाक्रमान् ज्ञात्वा न्यायधैर्य्यसौजन्योद्योगादीन् सद्गुणान् समाश्रित्य सभाप्रबन्धेन राज्यपालनं दुष्टशत्रुनिरोधश्च सदा कर्त्तव्य इति ॥ ४ ॥

किस-किस के सहाय से उक्त सुख सिद्ध होता है, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—हे (इन्द्र) युद्ध में उत्साह देनेवाले परमेश्वर ! अपनी (युजा) कृपा से धर्मयुक्त व्यवहारों में अपने सामर्थ्य का योग करानेवाले (त्वया) आपको अन्तर्यामी इष्टदेव मानकर (वयम्) युद्ध के करनेवाले हम लोग (अस्तृभिः) सब अस्त्र-शस्त्र चलाने में चतुर, (शूरेभिः) उत्तमों में उत्तम (=सर्वोत्तम) शूरवीरों के साथ होकर (पृतन्यन्तः) सेना आदि बल से युक्त होकर लड़नेवाले शत्रुओं को (सासह्याम) वार-वार सहें, अर्थात् उनको निर्बल करें। इस प्रकार शत्रुओं को जीतकर न्याय के साथ चक्रवर्ती राज्य का पालन करें ॥ ४ ॥

**भावार्थ**—शूरता दो प्रकार की होती है—एक तो शरीर की पुष्टि, और दूसरी विद्या तथा धर्म से संयुक्त आत्मा की पुष्टि। इन दोनों से परमेश्वर की रचना के क्रमों को जानकर न्याय, धीरज[1], उत्तम स्वभाव, और उद्योग आदि से उत्तम-उत्तम गुणों से युक्त होकर सभाप्रबन्ध के साथ राज्य का पालन और दुष्ट शत्रुओं का निरोध अर्थात् उनको सदा निर्बल करना चाहिये ॥४॥



पुनः स कीदृशोऽस्तीत्युपदिश्यते—

## म॒हाँ इन्द्रः॑ प॒रश्च॒ नु म॑हि॒त्वम॑स्तु व॒ज्रिणे॑ । द्यौर्न प्र॑थि॒ना शवः॑ ॥ ५ ॥

म॒हान् । इन्द्रः॑ । प॒रः । च॒ । नु । म॒हि॒ऽत्वम् । अ॒स्तु॒ । व॒ज्रिणे॑ ॥ द्यौः । न । प्र॒थि॒ना । शवः॑ ॥ ५ ॥

**पदार्थः**—(महान्) सर्वथाऽनन्तगुणस्वभावसामर्थ्येन युक्तः (इन्द्रः) सर्वजगद्राजः (परः) अत्यन्तोत्कृष्टः (च) पुनरर्थे (नु) हेत्वपदेशे। निरु० १।४। (महित्वम्) मह्यते पूज्यते सर्वैर्जनैरिति महिः, तस्य भावः। अत्रौणादिकः सर्वधातुभ्य इन् [उ० ४।११८] इतीन् प्रत्ययः। (अस्तु) भवतु (वज्रिणे) वज्रो न्यायाख्यो दण्डोऽस्यास्तीति तस्मै। वज्रं वै दण्डः। श० ३।१।५।३२।[2] (द्यौः) विशालः सूर्य्यप्रकाशः (न) उपमार्थे। [3]उपरिष्टादुपाचारस्तस्य येनोपमिमीते। निरु० १।४। यत्र कारकात् पूर्वं नकारस्य प्रयोगस्तत्र प्रतिषेधार्थीयः, यत्र च परस्तत्रोपमार्थीयः।

१. वै० य० मुद्रित १-३ संस्करणों में 'धीरजमन' अपपाठ।

२. अध्यायानुसारं शत० ३।२।१।३२ ॥

३. वै० य० मुद्रितेषु १-३ संस्करणेषु 'उपसृष्टादु०' इत्यपपाठः।

(**प्रथिना**) पृथोर्भावस्तेन। पृथुशब्दादिमनिच्[1]। छान्दसो वर्णलोपो वा [महा० ८।२।२५] इति मकारलोपः[2]। (**शवः**) **बलम्**। शव इति बलनामसु पठितम्। निघं० २।९॥ ५॥

**अन्वयः**—यो मूर्त्तिमतः संसारस्य [3]द्यौः सूर्य्यः प्रथिना न सुविस्तृतेन स्वप्रकाशेनेव महान् पर इन्द्रः परमेश्वरोऽस्ति, तस्मै वज्रिणे इन्द्रायेश्वराय न्वस्मत्कृतस्य विजयस्य महित्वं शवश्चास्तु॥ ५॥

**अत्रोपमालङ्कारोऽस्ति।**

**भावार्थः**—धार्मिकैर्युद्धशीलैः शूरैर्योद्धृभिर्मनुष्यैः स्वनिष्पादितस्य दुष्टशत्रुविजयस्य धन्यवादा अनन्तशक्तिमते जगदीश्वरायैव देयाः। यतो मनुष्याणां निरभिमानतया राज्योन्नतिः सदैव वर्धेतेति॥ ५॥

**इति पञ्चदशो वर्गः समाप्तः॥**

उक्त कार्य्य [ में ] सहाय करनेहारा जगदीश्वर किस प्रकार का है, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—मूर्त्तिमान् संसार को प्रकाशयुक्त करने के लिये ( द्यौः न ) जैसे सूर्य्य-प्रकाश ( प्रथिना ) विस्तार से प्राप्त होता है, वैसे ही जो ( महान् ) सब प्रकार से अनन्तगुण अत्युत्तम स्वभाव, अतुल सामर्थ्ययुक्त, और ( परः ) अत्यन्त श्रेष्ठ ( इन्द्रः ) सब जगत् का स्वामी परमेश्वर है, उस ( वज्रिणे ) न्याय की रीति से दण्ड देनेवाले परमेश्वर [ के लिये ] ( नु ) जो कि अपने सहायरूपी हेतु से हमको विजय देता है, उसी की यह ( महित्वम् ) महिमा ( च ) तथा [ (शवः) ] बल [ (अस्तु) ] हो॥ ५॥

इस मन्त्र में उपमालङ्कार है।

**भावार्थ**—धार्मिक युद्ध करनेवाले मनुष्यों को उचित है कि—जो शूरवीर, युद्ध में अति धीर मनुष्यों के साथ होकर दुष्ट शत्रुओं पर अपना विजय हुआ है, उसका धन्यवाद अनन्त शक्ति-मान् जगदीश्वर को देना चाहिये, कि जिससे निरभिमान होकर मनुष्यों को राज्य की सदैव बढ़ती होती रहै॥ ५॥

यह पन्द्रहवां वर्ग समाप्त हुआ॥



---

१. पृथ्वादिभ्य इमनिज्वा ( अ० ५।१।१२१ ) इत्यनेनेमनिच्, र ऋतो हलादेर्लघोः ( अ० ६।४।१६१ ) इति ऋकारस्य रेफादेशः।

२. 'प्रथिमन् आ' इत्यवस्थायाम् 'अल्लोपोऽनः' ( अ० ६।४।१३४ ) इत्यकारलोपः, मकारलोपश्छान्दसः।

३. अत्रान्वये न पदमस्थाने पठ्यते। पदार्थानुसारं 'द्यौः' पदात् परत्वमाश्रित्य तस्योपमार्थीयत्वमुक्तम्। अतोऽत्रान्वयेनेत्थं भाव्यम्—'द्यौर्न सूर्य इव प्रथिना सुविस्तृतेन प्रकाशेन महान्…'। भाषा पदार्थोऽप्यत्रैवानुकूलः।

मनुष्यैः कीदृशैर्भूत्वा[1] युद्धं कर्त्तव्यमित्युपदिश्यते—

स॒मो॒हे वा॒ य आश॑त॒ नर॑स्तो॒कस्य॒ सनि॑तौ । विप्रा॑सो वा धिया॒यवः॑ ॥ ६ ॥

स॒म्ऽओ॒हे । वा॒ । ये । आश॑त । नरः॑ । तो॒कस्य॑ । सनि॑तौ ॥ विप्रा॑सः । वा॒ । धि॒या॒ऽयवः॑ ॥ ६ ॥

**पदार्थः**—(समोहे) संग्रामे । समोहे इति संग्रामनामसु पठितम् । निघं० २ । १७ । (वा) पक्षान्तरे (ये) [2]योद्धारः (आशत) युद्धम् व्याप्तवन्तो भवेयुः । 'अशूङ् व्याप्तौ' इत्यस्माल्लिङर्थे लुङ्प्रयोगः । वा छन्दसि सर्वे विधयो भवन्ति [महा० १ । ४ । ९] इति च्लेरभावः । (नरः) मनुष्याः (तोकस्य) सन्तानस्य (सनितौ) भोगसंविभागलाभे । तितुत्र० । अ० ७ । २ । ९ [इत्यत्र] [3]अग्रहादीनामिति वक्तव्यमिति वार्त्तिकेनेडागमः । (विप्रासः) मेधाविनः । विप्र इति मेधाविनामसु पठितम् । निघं० ३ । १५ । आज्जसेरसुक् । अ० ७ । १ । ५० अनेन जसोऽसुगागमः । (वा) व्यवहारान्तरे (धियायवः) ये [आत्मनो] धियं विज्ञानमिच्छन्ति[4] [ते], धीयते धार्य्यते श्रुतमनया सा धिया, तामात्मन इच्छन्ति ते, 'धि धारणे' इत्यस्य कप्रत्ययान्तः प्रयोगः[5] ॥ ६ ॥

**अन्वयः**—ये विप्रासो नरस्ते समोहे शत्रूनाशत, वा ये धियायवस्ते तोकस्य सनिता-वाशत ॥ ६ ॥

**भावार्थः**—[6]इन्द्र ईश्वरः सर्वान् मनुष्यानाज्ञापयति—संसारेऽस्मिन् मनुष्यैः कार्य्यद्वयं कर्त्तव्यम् । ये विद्वांसस्तैर्विद्याशरीरबले संपाद्यैताभ्यां शत्रूणां बलान्यभिव्याप्य सदैव तिरस्-कर्त्तव्यानि । मनुष्यैर्यदा यदा शत्रुभिः सह युयुत्सा भवेत्, तदा तदा सावधानतया शत्रूणां बला-न्न्यूनान्न्यूनं द्विगुणं स्वबलं संपाद्यैव तेषां कृतेन पराजयेन प्रजाः सततं रक्षणीयाः । ये च विद्यावानं चिकीर्षवस्ते कन्यानां पुत्राणां च विद्याशिक्षाकरणे प्रयतेरन् । यतः शत्रूणां पराभवेन [अज्ञाननाशेन च][7] सुराज्यविद्यावृद्धी सदैव भवेताम् ॥ ६ ॥

मनुष्यों को कैसे होकर युद्ध करना चाहिये, यह विषय अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—[(ये)] जो (विप्रासः) अत्यन्त बुद्धिमान् (नरः) मनुष्य हैं, वे (समोहे) संग्राम में शत्रुओं को जीतने के लिये (आशत) तत्पर हों । (वा) अथवा (धियायवः) जो कि [अपना] विज्ञान देने की इच्छा करनेवाले हैं, वे (तोकस्य) सन्तानों

---

१. वै० य० मुद्रितेषु संस्करणेषु 'मनुष्यैः कीदृशा भूत्वा' इत्यपपाठः ।

२. वै० य० मुद्रितेषु संस्करणेषु '(ये) योद्धारो युद्धम् (आशत) व्याप्तवन्तो भवेयुः' इति पाठः । अत्र 'युद्धम्' पदमस्थाने पठ्यते ।

३. वै० य० मुद्रितयोः ३, ४ संस्करणयोः 'आग्रहादीनाम्' इत्यपपाठः ।

४. वै०य० मुद्रितेषु संस्करणेषु 'इच्छन्तः' इत्यपपाठः । अग्रे यथावत् पठ्यते ।

५. सुप आत्मनः क्यच् (अ० ३।१।८) इति क्यच्, तदन्तात् क्याच्छन्दसि (अ० ३।२।१७०) इत्युः प्रत्ययः ।

६. वै० य० मुद्रितेषु संस्करणेषु 'इन्द्रे श्वरः' इत्यपपाठः ।

७. उत्तरत्र विद्यावृद्धेर्निर्देशात् प्रतीयते लिपिकरप्रमादान्मुद्रणप्रमादाद्वाऽयं पाठोऽत्र भ्रष्टः ।

के ( सनितौ ) [भोगों के संविभाग तथा लाभ के लिये] विद्या की शिक्षा में ( आशत ) उद्योग करते रहें ॥ ६ ॥

**भावार्थ**—ईश्वर सब मनुष्यों को आज्ञा देता है—कि इस संसार में मनुष्यों को दो प्रकार का काम करना चाहिये। इनमें से जो विद्वान् हैं, वे अपने शरीर और सेना का बल बढ़ावें। और दूसरे उत्तमविद्या की वृद्धि करके शत्रुओं के बल का सदैव तिरस्कार करते रहें। मनुष्यों को जब-जब शत्रुओं के साथ युद्ध करने की इच्छा हो, तब-तब सावधान होके प्रथम शत्रुओं की सेना आदि पदार्थों से कम से कम अपना दोगुना बल करके उनके पराजय से प्रजा की रक्षा करनी चाहिये। तथा जो विद्याओं के पढ़ाने की इच्छा करनेवाले है, वे शिक्षा देने योग्य पुत्र वा कन्याओं को यथायोग्य विद्वान् करने में अच्छे प्रकार यत्न करें। जिससे शत्रुओं के पराजय और अज्ञान के विनाश से चक्रवर्ति राज्य और विद्या की वृद्धि सदैव होवें ॥ ६ ॥



**अथेन्द्रशब्देन सूर्य्यलोकगुणा उपदिश्यन्ते—**

य॑: कु॒क्षिः सो॑म॒पात॑मः समु॒द्रइ॑व॒ पिन्व॑ते । उ॒र्वीराप॒ो न का॒कुद॑: ॥ ७ ॥

य: । कु॒क्षिः । सो॒म॒ऽपात॑मः । स॒मु॒द्रःऽइ॑व । पिन्व॑ते ॥ उ॒र्वीः । आप॑: । न । का॒कुद॑: ॥ ७ ॥

**पदार्थः**—(यः) सूर्यलोकः (कुक्षिः) कुष्णाति निष्कर्षति सर्वपदार्थेभ्यो रसं यः। अत्र प्लुषिकुषिशुषिभ्यः क्सिः। उ० ३। १५५ अनेन 'कुष' धातोः क्सिः प्रत्ययः। (सोमपातमः) यः सोमान् पदार्थान् किरणैः पाति, सोऽतिशयितः ( समुद्रइव ) समुद्रवन्त्यापो यस्मिंस्तद्वत् (पिन्वते) सिञ्चति सेवते वा ( उर्वीः ) बह्वीः पृथिवीः। उर्वीति पृथिवीनामसु पठितम्। निघं० १। १। ( आपः ) जलानि, वाऽऽप्नुवन्ति शब्दोच्चारणादिव्यवहारान् याभिस्ता आपः प्राणाः[1]। आप इत्युदकनामसु पठितम्। निघं० १। १२। आप इति पदनामसु पठितम्। निघं० ५। ३ आभ्यां प्रमाणाभ्यामप्शब्देनात्रोदकानि सर्वचेष्टाप्राप्तिनिमित्तत्वात् प्राणाश्च गृह्यन्ते। ( न ) उपमार्थे ( काकुदः ) वाचः शब्दसमूहः। काकुदिति वाङ्नामसु पठितम्। निघं० १। ११॥ ७ ॥

**अन्वयः**—यः कुक्षिः सोमपातमः सूर्य्यलोकः समुद्र इव जलानीवापः काकुदो न प्राणा वायवो वाचः शब्दसमूहमिवोर्वीः पृथिवीः पिन्वते ॥ ७ ॥

**अत्रोपमालङ्कारौ स्तः।**

**भावार्थः**—इन्द्रेणेश्वरेण यथा जलस्थितिवृद्धिहेतुः समुद्रो वाग्व्यवहारहेतुः प्राणश्च रचितस्तथैव पृथिव्याः प्रकाशाकर्षणादे रसविभागस्य च हेतुः सूर्य्यलोको निर्मितः। एताभ्यां सर्वप्राणिनामनेके व्यवहाराः सिध्यन्तीति ॥ ७ ॥

---

[1]. वै० य० मुद्रितेषु संस्करणेषु 'प्राणः' इत्यपपाठः।

अगले मन्त्र में इन्द्र शब्द से सूर्य्यलोक के गुणों का व्याख्यान किया है—

**पदार्थान्वयभाषा**—[ (यः) ] जो सूर्य्य लोक ( कुक्षिः ) सब पदार्थों से रस को खींचनेवाला, तथा ( सोमपातमः ) सोम अर्थात् संसार के पदार्थों का रक्षक है, वह ( समुद्र इव ) जैसे समुद्र को जल, तथा ( आपो न काकुदः ) शब्दों के उच्चारण आदि व्यवहारों के करानेवाले प्राण [ जैसे ] वाणी को सेवन करते हैं, वैसे ( उर्वीः ) सब पृथिवी को [ (पिन्वते) ] सेचन वा सेवन करता है ॥ ७ ॥

इस मन्त्र में दो उपमालङ्कार हैं ।

**भावार्थ**—ईश्वर ने जैसे जल की स्थिति और वृष्टि का हेतु समुद्र, तथा वाणी के व्यवहार का हेतु प्राण बनाया है, वैसे ही सूर्य्यलोक वर्षा होने, पृथिवी के आकर्षण-प्रकाश आदि, और रस-विभाग करने का हेतु बनाया है । इन से सब प्राणियों के अनेक व्यवहार सिद्ध होते हैं ॥ ७ ॥



पुनस्तन्निमित्तकार्य्यमुपदिश्यते—

एवा ह्यस्य सूनृता विरप्शी गोमती मही । पक्वा शाखा न दाशुषे ॥ ८ ॥

एव । हि । अस्य । सूनृता । विऽरप्शी । गोऽमती । मही ॥ पक्वा । शाखा । न । दाशुषे ॥ ८ ॥

**पदार्थः**—(एव) **अवधारणार्थे** (हि) हीत्यनेककर्मा । निरु० १ । ५ । (**अस्य**) **परमेश्वरस्य सूर्य्यलोकस्य वा प्रकाशनात्** ( **सूनृता** )[1] **प्रियसत्यप्रकाशिका वाक्, अन्नादिपदार्थवती वा** । सूनृतेत्यन्ननामसु पठितम् । निघं० २ । ७ । [2]**सुष्ठु ऋतं=यथार्थं ज्ञानं यस्यां सा, अन्नवती**[3] **वा** । ( **विरप्शी** ) **महाविद्यायुक्ता** । विरप्शी इति महन्नामसु पठितम् । निघं० ३ । ३ । ( **गोमती** ) **गावो भूयांसः स्तोतारो विद्यन्ते यस्यां सा** । गौरिति स्तोतृनामसु पठितम् । निघं० ३ । १६ । (**मही**) **सर्वपूज्या वाङ्मयी वेदचतुष्टयी, पृथिवी वा** । महीति वाङ्नामसु पठितम् । निघं० १।११; पृथिवीनामसु च । निघं० १ । १ । ( **पक्वा** ) **पक्वफलयुक्ता** (**शाखा**) **वृक्षावयवः**[4] । शाखाः खशयाः शक्नोतेर्वा । निरु० १ । ४ । (**न**) **इव** ( **दाशुषे** ) **अध्ययनार्थं तद्राज्यप्राप्त्यर्थं च ध्यानं दत्तवते मनुष्याय** ॥ ८ ॥

१. सुतरामूनमत्यप्रियमिति सूनृ प्रियमुच्यते । द्र०—पूर्वत्र ऋ० १।३।११ सूनृतावतीपदस्यार्थः । सूनृ = प्रियम् ऋतं यस्यां सा सूनृता=प्रियत्वगुणोपेता सत्या वाक् । तदुक्तम्—सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम् । मनु० ४।१३८ ॥

२. अयमन्यो विग्रहः—'सु सुष्ठु ऋतं यथार्थज्ञानमस्यां सा' । अस्मिन् विग्रहे पृषोदरादित्वात् सुपदस्य दीर्घत्वं नुडागमश्च । द्र०—उत्तरत्र ऋ० १।३०।५ मन्त्रे सूनृतापदव्याख्यानम् ।

३. अन्नवतीत्यर्थे सूनृताऽन्नं विद्यते यस्यां सा, अत्र मतुपो लोपो द्रष्टव्यः । अथवा 'अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति' ( निरु० २।५ ) इति वचनात् तद्धिताभावेऽपि तद्धितार्थो व्याख्येयः ।

४. वै० य० मुद्रितेषु संस्करणेषु 'वृक्षावयवाः' इत्यपपाठः, शाखापदस्यैकवचनान्तत्वात् ।

**अन्वयः**—'पक्वा शाखा न इवास्य हि गोमती सूनृता विरप्शी मही दाशुषे [एव] सुखं पिन्वते ॥ ८ ॥

**अत्रोपमाश्लेषालङ्कारौ**[2] ।

**भावार्थः**—यथा विविधपुष्पफलवन्त[3] आम्रपनसादयो वृक्षा विविधफलप्रदाः सन्ति, तथैवेश्वरेण प्रकाशिता विविधविद्यानन्दप्रदा वेदाः, अनेकसुखभोगप्रदाः पृथिव्यादयश्च प्रसिद्धीकृताः सन्ति । एतेषां प्रकाशो राज्यं च विद्वद्भिरेव कर्त्तुं शक्यते ॥ ८ ॥

[4]फिर इन्द्र (=परमेश्वर वा सूर्य) निमित्तक कार्य्य का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—( पक्वा शाखा न ) जैसे आम और कटहर आदि वृक्ष, पकी डाली और फलयुक्त होने से प्राणियों को सुख देनेहारे होते हैं, वैसे ( अस्य हि ) इस परमेश्वर की ही ( गोमती ) जिसको बहुत से विद्वान् सेवन करनेवाले हैं, जो ( सूनृता ) प्रिय और सत्यवचन प्रकाश करनेवाली, ( विरप्शी ) महाविद्यायुक्त, और ( मही ) सब को सत्कार करने योग्य चारों वेद की वाणी है, सो ( दाशुषे ) पढ़ने में मन लगानेवालों को [ (एव) ही ] सब विद्याओं का प्रकाश करनेवाली है ॥

तथा [ (पक्वा शाखा न) जैसे आम आदि वृक्षों की पके फलों से युक्त शाखायें प्राणियों को सुख देनेवाली होती है, वैसे ] ( अस्य हि ) इस सूर्य्यलोक की ( गोमती ) उत्तम मनुष्यों के सेवन करने योग्य, ( सूनृता ) अन्नादि पदार्थों का प्रकाश करनेवाली, ( विरप्शी ) बड़ी से बड़ी दीप्ति, और ( मही ) बड़े-बड़े गुणयुक्त पृथिवी है, वह ( दाशुषे ) राज्य की प्राप्ति के लिये राज्यकर्मों में चित्त देनेवालों को [ (एव) ही ] सुख देनेवाली होती है ॥ ८ ॥

इस मन्त्र में उपमालङ्कार और श्लेषालङ्कार है[5] ।

**भावार्थ**—जैसे विविध प्रकार से फलफूलों से युक्त आम और कटहर आदि वृक्ष नाना प्रकार के फलों के देनेवाले होके सुख देनेहारे होते हैं, वैसे ही ईश्वर से प्रकाश की हुई, बहुत प्रकार की विद्याओं तथा आनन्द को देनेहारी वेदवाणी, तथा सब मनुष्यों को अनेक प्रकार

१. वै० य० मुद्रितेषु संस्करणेषु 'हि' पक्वा शाखा न' इत्येवं पठ्यते । अत्र 'हि' पदमस्थाने पठितम् । द्र०—भाषा-पदार्थः ।

२. वै० य० मुद्रितेषु संस्करणेषु 'उपमालङ्कारः' इत्येव निर्दिश्यते । मन्त्र-पदार्थे 'अस्य सूनृता गोमती दाशुषे' पदानां द्विविधार्थनिर्देशाद् अत्र श्लेषालङ्कारोऽपि द्रष्टव्यः । अत एव भाषायां मन्त्रो द्विधा व्याख्यायते

३. वै० य० मुद्रितयोः १-२ संस्करणयोः 'विविधपुष्पफलवाना आम्रपनसादयो' इत्यपपाठः । तृतीये संस्करणे पाठः शोधितः ।

४. वै० य० मुद्रित संस्करणों में 'उक्त अर्थों के निमित्त और कार्य' अपपाठ है ।

५. वै० य० मुद्रित संस्करणों में उपमालङ्कार का ही निर्देश है । परन्तु संस्कृत-पदार्थ तथा भाषा-पदार्थ में दो किस्म का अर्थ होने से यहां 'श्लेषालङ्कार' भी जानना चाहिये ।

के सुख और भोगों के देनेहारे पृथिव्यादि रचे हैं। जो विद्वान् लोग हैं, वे ही वेदों का प्रकाश और पृथिवी में राज्य करने को समर्थ होते हैं॥ ८॥



य एवं कुर्वन्ति, तेषां किं भवतीत्युपदिश्यते—

एवा हि ते विभूतय ऊतय इन्द्र मावते। सद्यश्चित् सन्ति दाशुषे॥ ९॥

एव। हि। ते। विऽभूतयः। ऊतयः। इन्द्र। माऽवते॥ सद्यः। चित्। सन्ति। दाशुषे॥ ९॥

**पदार्थः**—(एव) निश्चयार्थे (हि) हेत्वर्थे (ते) तव (विभूतयः) विविधा भूतय ऐश्वर्याणि यासु ताः (ऊतयः) रक्षाविज्ञानसुखप्राप्त्यादयः (इन्द्र) सर्वतो रक्षयितरीश्वर! (मावते) मत्सदृशाय। वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्। अ० ५।२।३९ [वा०] अनेनास्मच्छब्दात् सादृश्यार्थे वतुप्। आ सर्वनाम्नः। अ० ६। ३। ९१ इत्याकारादेशश्च। (सद्यः) शीघ्रमेव। सद्यः परुत्परार्य्यैषमः। अ० ५। ३। २२। समानेऽहनि इति सद्यः, इति भाष्यवचनात् समाने अहन्येतस्मिन्नर्थे सद्य इति शब्दो निपातितः। (चित्) पूजार्थे। चिदिति पूजायाम्। निरु० १। ४। (सन्ति) भवन्तु [वा]। अत्र लोडर्थे लट् वा[१]। (दाशुषे) सर्वोपकारधर्मं आत्मानं दत्तवते॥ ९॥

**अन्वयः**—हे इन्द्र जगदीश्वर! भवत्कृपया यथा ते तव विभूतय ऊतयो मह्यं प्राप्ताः सन्ति भवन्ति, तथैवैता मावते दाशुषे चिदेव हि सद्यः प्राप्नुवन्तु[१]॥ ९॥

अत्र लुप्तोपमालङ्कारः।

**भावार्थः**—ईश्वरस्याज्ञास्ति[३]—ये जनाः पुरुषार्थिनो भूत्वा धार्मिकाः परोपकारिणो भवन्ति, त एव पूर्णमैश्वर्य्यरक्षणं कृत्वा सर्वत्र सत्कृता जायन्ते॥ ९॥

जो मनुष्य ऐसा करते हैं, उनको क्या सिद्ध होता है, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—हे (इन्द्र) जगदीश्वर! आपकी कृपा से जैसे (ते) आपके जो-जो (विभूतयः) उत्तम ऐश्वर्य, और (ऊतयः) रक्षा विज्ञान आदि गुण मुझको (सन्ति) प्राप्त हैं, वैसे [ही वे] (मावते) मेरे तुल्य (दाशुषे चित्) सब प्रकार के उपकार और धर्म में मन को देनेवाले पुरुष को (सद्य एव) शीघ्र ही प्राप्त हों॥ ९॥

इस मन्त्र में लुप्तोपमालङ्कार है।

**भावार्थ**—ईश्वर की आज्ञा का प्रकाश इस रीति से किया है कि[४]—जो मनुष्य पुरुषार्थी

१. अन्वये 'सद्यः प्राप्ता भवन्तु=प्राप्नुवन्तु' इत्यत्रानुषङ्गाय लोडर्थोऽपि स्वीकृतः।

२. अत्र 'सन्तु' पदार्थविषयका प्रथमा टिप्पणी द्रष्टव्या।

३. अत्र 'ईश्वरस्योपदेशोऽस्ति' इति पाठः साधुतरः स्यात्।

४. यहां 'ईश्वर का उपदेश है कि' पाठ अच्छा प्रतीत होता है।

होके सब का उपकार करनेवाले और धार्मिक होते हैं, वे ही पूर्ण ऐश्वर्य और[1] ईश्वर की यथायोग्य रक्षा आदि को प्राप्त होके सर्वत्र सत्कृत होते हैं ॥ ९ ॥



**इयं सर्वा प्रशंसा कस्यास्तीत्युपदिश्यते—**

**एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या । इन्द्राय सोमपीतये ॥ १० ॥**

एव । हि । अस्य । काम्या । स्तोमः । उक्थम् । च । शंस्या ॥ इन्द्राय । सोमऽपीतये ॥ १० ॥

**पदार्थः**—( एव ) अवधारणार्थे ( हि ) हेत्वपदेशे ( अस्य ) वेदचतुष्टयस्य ( काम्या ) कमनीये । अत्र सुपां सुलुग्० [अ० ७ । १ । ३९] इति [2]द्विवचनस्याकारादेशः । (स्तोमः) सामगानविशेषः स्तुतिसमूहः ( उक्थम् ) उच्यन्त ईश्वरगुणा येन [3]तदृक्समूहम्[4] ( च ) समुच्चयार्थे । अनेन यजुरथर्वणोर्ग्रहणम् । (शंस्या) प्रशंसनीये कर्मणी । अत्रापि सुपां सुलुग्० [अ० ७।१।३९] इत्याकारादेशः । (इन्द्राय) परमैश्वर्य्यवते परमात्मने (सोमपीतये) सोमानां सर्वेषां पदार्थानां पीतिः पानं यस्य तस्मै । सह सुपा । अ० २ । १ । ४ इति सामान्यतः [5]समासः ॥ १० ॥

**अन्वयः**—ये अस्य वेदचतुष्टयस्य [काम्या] काम्ये [शंस्या] शंस्ये स्तोम उक्थं च स्तः, ते सोमपीतये इन्द्राय [एव] हि भजतः ॥ १० ॥

**भावार्थः**—यथास्मिन् जगति केनचिन्निर्मितान् पदार्थान् दृष्ट्वा तद्रचयितुः प्रशंसा भवति, तथैव सर्वैः प्रत्यक्षाप्रत्यक्षैर्जगत्स्थैः सूर्य्यादिभिरुत्तमैः पदार्थैस्तद्रचनया च वेदेष्वीश्वरस्यैव धन्यवादाः सन्ति । नैतस्य समाधिका वा कस्यचित् स्तुतिर्भवितुमर्हतीति ॥ १० ॥

एवं य ईश्वरस्योपासकाः क्रियावन्तस्तदाश्रिता विद्ययात्मसुखं क्रियया च शरीरसुखं [6]प्राप्य ते-

---

१. 'ऐश्वर्यरक्षणं कृत्वा' के भाषा में दो भाव व्यक्त किये हैं । एक—ऐश्वर्य की रक्षा करके, दूसरा—ईश्वर से की गई (=ईश्वरस्येदमैश्वर्यम्, ऐश्वर्यं च तद्रक्षणं च) रक्षा ।

२. 'स्तोम उक्थं च' इत्यनयोर्द्वित्वमाश्रित्येदं व्याख्यानम् । प्रतिपदमन्वये तु एकवचनस्याकारादेशो ज्ञेयः ।

३. वै० य० मुद्रितेषु संस्करणेषु 'तादृक्समूहम्' इत्यपपाठः । अस्मिन् पाठे कस्य समूह इत्यर्थो न ज्ञायते । पूर्वत्र साम्न उत्तरत्र च यजुरथर्वणोर्निर्देशादत्र 'तदृक्समूहम्' इत्येव युक्तः पाठः ।

४. यद्यपि 'समूह' शब्दः प्रायेण पुल्लिगः प्रयुज्यते, तथापि 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' ( १ । १ । ३ ) इतिभाष्यवचनानुसारं नपुंसकलिङ्गोऽपि साधुः । तथा च महाभाष्ये 'सम्बन्धमनुवर्तिष्यते' (१।१।३) इत्यत्र पुंल्लिङ्गो नपुंसके; 'कोऽसावनुमानः' (१।३।१) इत्यत्र नपुंसकलिङ्गः पुंल्लिङ्गे प्रयुज्यते ।

५. अत्र विग्रहो बहुव्रीहेर्निदिश्यते—सोमानां पीतिर्यस्य । तच्चेन्द्रस्य विशेषणम् । स्वरोऽप्यत्र बहुव्रीहेरेवोपलभ्यते । तथा सति 'सह सुपा' इत्यनेनात्र कथं समास इति न ज्ञायते ? प्रतीयते भाष्यकृता प्रथमं सोमपीतये पदमन्यथा व्याख्यातं स्यात्, तस्मिंश्च व्याख्याने अन्यसमासलक्षणभावे 'सह सुपा' इत्यनेन समासो निर्दिष्टः स्यात् । उत्तरकाले पदार्थव्याख्यानं परिवर्तितं, समासविधायकं सूत्रं नापमृष्टम्, अर्थात् पूर्ववद् स्थितम् । वर्तमानार्थे नास्योपयोगः ।

६. व० य० मुद्रितयोः १-२ संस्करणयोः 'प्राप्यतेऽस्यैव' इत्येवमपपाठः । अत्रत्यस्य 'ते' पदस्य सम्बन्धः पूर्वत्र 'तदाश्रितास्ते विद्ययात्मसुखं' इत्येवं द्रष्टव्यः ।

**सदा प्रशंसां कुर्य्युरित्यस्याष्टमस्य सूक्तोक्तार्थस्य सप्तमसूक्तोक्तार्थेन सह सङ्गतिरस्तीति ज्ञयम् ॥**

**अस्यापि सूक्तस्य मन्त्रार्थाः** सायणाचार्य्यादिभिर्यूरोपाख्यदेशस्थैर्विलासनाख्यादिभिश्चा-**थावद्वर्णिता इति वेदितव्यम् ॥ १० ॥**

**इत्यष्टमं सूक्तं षोडशश्च वर्गः समाप्तः ॥**

उक्त सब प्रशंसा किसकी है, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—[1]जो ( अस्य ) इन चार वेदों के ( काम्या ) अत्यन्त मनोहर शंस्या) प्रशंसा करने योग्य गुण कर्म, वा (स्तोमः) सामगान तथा (उक्थम्) जिससे परमेश्वर गुणों का कीर्तन किया जाता है वह ऋक्समूह, ( च ) और यजुर्वेद तथा अथर्ववेद के जो मन्त्र वे ( सोमपीतये ) अपनी व्याप्ति से सब पदार्थों के अंश-अंश का पान करनेवाले ( इन्द्राय ) रमेश्वर की ( एव हि ) हीं स्तुति करते हैं ॥ १० ॥

**भावार्थ**– जैसे इस संसार में अच्छे-अच्छे पदार्थों की रचना-विशेष देखकर उसके रचनेवाले प्रशंसा होती है, वैसे ही संसार के प्रत्यक्ष और अप्रत्यक्ष अत्युत्तम सूर्यादि पदार्थों तथा उनकी शेष रचना से वेदों में[2] ईश्वर ही को धन्यवाद दिये जाते हैं। इस कारण से परमेश्वर की स्तुति समान वा उससे अधिक किसी की स्तुति नहीं हो सकती ॥ १० ॥

इस प्रकार जो मनुष्य ईश्वर की उपासना और वेदोक्त कर्मों के करनेवाले हैं, वे ईश्वर आश्रित होके वेदविद्या से आत्मा के सुख, और उत्तम क्रियाओं से शरीर के सुख को प्राप्त कर सदा परमेश्वर ही की प्रशंसा करते रहें। इस अभिप्राय से इस आठवें सूक्त के अर्थ की क्ति सातवें सूक्त के अर्थ के साथ सङ्गति जाननी चाहिये ॥

इस सूक्त के मन्त्रों के भी अर्थ **सायणाचार्य्य** आदि, और यूरोपदेशवासी अध्यापक **विलसन** दि अङ्गरेज लोगों ने उलटे वर्णन किये हैं ॥ १० ॥

यह आठवां सूक्त और सोलहवां वर्ग समाप्त हुआ ॥



अथ नवमस्य दशर्चस्य सूक्तस्य मधुच्छन्दा ऋषिः। इन्द्रो देवता।
१, ३, ७, १० निचृद्गायत्री; २, ४, ८, ९ गायत्री;
५, ६ पिपीलिकामध्यानिचृद्गायत्री च छन्दः।
षड्जः स्वरः ॥

---

१. वै० य० मुद्रित संस्करणों में भाषा-पदार्थ सम्भवतः पुराने संस्कृत-पदार्थ और अन्वय का है। पदार्थ में पीछे से परिवर्तन हुआ है। इसका संकेत पूर्व पृष्ठ ५५६ टि० ५ में किया है। संस्कृत-पदार्थ और के बदल जाने से हमने भाषापदार्थ को वर्तमान संस्कृत-पदार्थ वा अन्वयानुसारी बनाया है।

२. इसका भाव यह है कि—वेदों में प्रत्यक्षाप्रत्यक्ष सूर्य्यादि पदार्थों का, और उनकी रचना का जो वर्णन या है, उसके द्वारा रचयिता ईश्वर की ही प्रशंसा की गई है।

तत्रेन्द्रशब्देनोभावर्थावुपदिश्येते—

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ अभिष्टिरोजसा ॥ १ ॥

इन्द्र । आ । इहि । मत्सि । अन्धसः । विश्वेभिः । सोमपर्वऽभिः ॥ महान् । अभिष्टिः । ओजसा ॥ १ ॥

**पदार्थः**—( इन्द्र ) सर्वव्यापकेश्वर ! सूर्य्यलोको वा ( आ ) क्रियार्थे ( इहि ) प्राप्नुहि प्रापयति वा । अत्र [पक्षे] पुरुषव्यत्ययः लडर्थे लोट् च । ( मत्सि ) हर्षयितासि भवति वा । अत्र बहुलं छन्दसि [अ० २ । ४ । ७३] इति श्यनो लुक्[1], पक्षे पुरुषव्यत्ययश्च । ( अन्धसः ) अन्नानि पृथिव्यादीनि । अन्ध इत्यन्ननामसु पठितम् । निघं० २ । ७ । ( विश्वेभिः ) सर्वैः । अत्र बहुलं छन्दसि [अ० ७ । १ । १०] इति भिस ऐसादेशाभावः । ( सोमपर्वभिः ) सोमानां पदार्थानां पर्वाण्यवयवास्तैः सह[2] ( महान् ) सर्वोत्कृष्ट ईश्वरः सूर्य्यलोको वा परिमाणेन महत्तमः ( अभिष्टिः ) अभितः सर्वतो ज्ञाता ज्ञापयिता मूर्त्तद्रव्यप्रकाशको वा । अत्राभिपूर्वाद् 'इष गतौ' इत्यस्माद्धातोर्मन्त्रे वृषेष० । अ० ३ । ३ । ९६ अनेन क्तिन् । एमन्नादिषु छन्दसि पररूपं वक्तव्यम् । एङि पररूपम् [अ० ६ । १ । ९१] इत्यस्योपरिस्थवार्त्तिकेनाभेरिकारस्य [ इष्टेरिकारस्य च स्थाने ] पररूपेणेदं सिध्यति । ( ओजसा ) बलेन । ओज इति बलनामसु पठितम् । निघं० २ । ९ ॥ १ ॥

**अन्वयः**—[3]यथाऽयमिन्द्र सूर्य्यलोक ओजसा महानभिष्टिर्विश्वेभिः सोमपर्वभिः सहान्धसोऽन्नानां पृथिव्यादीनां प्रकाशेनेहि [प्रापयति]मत्सि हर्षहेतुर्भवति, [3]तथैव हे इन्द्र ! त्वं महानभिष्टिर्विश्वेभिः सोमपर्वभिः सह वर्त्तमानः सन् [4]ओजसोऽन्धस एहि प्रापयसि मत्सि हर्षयितासि ॥१॥

**अत्र श्लेषलुप्तोपमालङ्कारौ**[5] ।

**भावार्थः**—यथेश्वरोऽस्मिन् जगति प्रतिपरमाण्वभिव्याप्य सततं सर्वान् लोकान् नियतान्

---

१. स्थानिनः शपो लुक आदेशेऽत्रोपचारो द्रष्टव्यः । तेन शपो लुकि श्यनोऽभाव इति भावः । अग्रेऽपि सर्वत्रेत्थमेव ज्ञेयम् ।

२. सहार्थे तृतीया । यथा 'वृद्धो यूना तल्लक्षणश्चेदेव विशेष.' ( अ० १ । २ । ६५ ) इत्यत्र ।

३. अत्रान्वये यथा तथा प्रयोगेऽपि नात्रोपमालंकारः, अपितु सूर्यपर ईश्वरपरश्च द्वौ स्वतन्त्रार्थौ । लुप्तोपमायां कैश्चिदेव पदैः सोऽर्थो द्योत्यते । इह तु मन्त्रार्थभूमिकायां द्वयोरर्थयोः निर्देशात्, पदार्थे च कांश्चिदेव पदान् परित्यज्य सर्वेषामर्थद्वयस्य निर्देशाच्च भाष्यकृतः श्लेषालङ्कार एव तात्पर्यम् । न तु लुप्तोपमायामपीति स्पष्टम् । इदमत्र सम्भाव्यते—पूर्वं भाष्यकृता लुप्तोपमालंकारेणायं मन्त्रो व्याख्यातः स्यात्, तदनु श्लेषालंकारेण द्वौ स्वतन्त्रावर्थौ निर्दिष्टौ स्याताम्, अन्वयेऽत्र यथावत् शोधनं न संजातं स्यात् । अपि च यथाऽन्वयस्तथा सूर्य उपमारूपेण ईश्वरश्चोपमेयरूपेण निर्दिश्येते । भावार्थे तु विपर्ययेण निर्देशः क्रियते । वै० य० मुद्रितेषु संस्करणेषु भाषापदार्थेऽन्यथान्वयदर्शनमप्युक्तसंभावनायां हेतुः सम्भवति । लुप्तोपमायामुभयत्रैकरूप्येण भाव्यम् । एवमेवालंकारनिर्देशेऽपि द्वयोरलङ्कारयोर्गतिश्चिन्तनीया ।

४. अत्रत्यमोजसापदं प्रथमान्वय इव द्वितीयान्वयेऽपि 'हे इन्द्र त्वं' इत्यस्मात् परमुचितम् ।

५. अत्रान्वयस्य टिप्पणी ३ द्रष्टव्या ।

**रक्षति, तथा सूर्य्योऽपि सर्वेभ्यो लोकेभ्यो महत्त्वादभिमुखस्थान्[1] पदार्थानाकृष्य प्रकाश्य व्यवस्थापयति ।। १ ।।**

अब नवम सूक्त के आरम्भ के मन्त्र में इन्द्र शब्द से परमेश्वर और सूर्य्य का प्रकाश किया है—

**पदार्थान्वयभाषा**—[2]जिस प्रकार से यह ( इन्द्र ) सूर्य्यलोक ( ओजसा ) बल से (महान्) पृथिवी आदि से बहुत बड़ा, और ( अभिष्टिः ) मूर्तद्रव्यों का प्रकाशक ( विश्वेभिः ) सब ( सोमपर्वभिः ) पदार्थों के अवयवों के साथ ( अन्धसः ) पृथिवी और अन्नादि पदार्थों को प्रकाश से ( एहि ) व्याप्त होता, और प्राणियों को ( मत्सि ) आनन्द देता है, वैसे ही हे (इन्द्र) सर्वव्यापक ईश्वर ! ( महान् ) सबसे उत्तम, ( अभिष्टिः ) सर्वज्ञ, और सब ज्ञान के देनेवाले आप ( विश्वेभिः सोमपर्वभिः ) सब पदार्थों के अंशों के साथ वर्त्तमान होकर ( ओजसा ) [सर्वशक्तिमत्त्वादि] बल से ( अन्धसः ) भूमि आदि तथा अन्नादि उत्तम पदार्थों को ( एहि ) प्राप्त कराते हो, और ( मत्सि ) सुख देते हो ।। १ ।।

इस मन्त्र में श्लेष और लुप्तोपमालङ्कार हैं ।

**भावार्थ**—जैसे ईश्वर इस संसार के परमाणु-परमाणु में व्याप्त होकर सब की रक्षा निरन्तर करता है, वैसे ही सूर्य्य भी सब लोकों से बड़ा होने से अपने सम्मुख हुए पदार्थों को आकर्षण वा प्रकाश करके अच्छे प्रकार व्यवस्थित करता है ।। १ ।।



**अथ शिल्पविद्यानुषङ्गिणी अग्निजले उपदिश्येते—**

**एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने । चक्रिं विश्वानि चक्रये ।। २ ।।**

आ । ईम् । एनम् । सृजत । सुते । मन्दिम् । इन्द्राय । मन्दिने ।। चक्रिम् । विश्वानि । चक्रये ।।२।।

**पदार्थः**—( **आ** ) **क्रियार्थे** ( **ईम्** ) **जलमग्निं वा ।** ईमित्युदकनामसु पठितम् । निघं० १ । १२; ईर्मिति पदनामसु च । निघं० ४ । २ । **अनेन शिल्पविद्यासाधकतमावेतौ गृह्येते । (एनम्) [पूर्वोक्तम्] अर्थद्वयम् (सृजत) विविधतया प्रकाशयत संपादयत वा (सुते) उत्पन्नेऽस्मिन् पदार्थसमूहे जगति (मन्दिम्) मन्दन्ति हर्षन्त्यस्मिँस्तम् (इन्द्राय) ऐश्वर्य्यमिच्छवे जीवाय (मन्दिने) मन्दितुं मन्दयितुं [वा] शीलवते ( चक्रिम् ) शिल्पविद्याक्रियासाधनेषु यानानां शीघ्र-**

---

१. वै० य० मुद्रितेषु संस्करणेषु 'अभिमुख्यस्थान्' इत्यपपाठः ।

२. वै० य० मुद्रित संस्करणों में भाषार्थ में मन्त्रपद और उनके अर्थ आगे-पीछे छपे हैं । हमने उन्हें वर्तमान संस्कृत-अन्वय के अनुसार यथास्थान रख दिया है । और स्वल्प-सा पाठ शोधा है । **विशेष**—संस्कृत-पदार्थ के अनुसार यहां सूर्यपरक और ईश्वरपरक दो स्वतन्त्र अर्थ जानने चाहियें ।

**चालनस्वभावम्** ( **विश्वानि** ) **सर्वाणि वस्तूनि** निष्पादयितुम्[1] ।( **चक्रये** ) **पुरुषार्थकरणशीलाय** ।। २ ।।

**अन्वयः**—हे विद्वांसः सुत उत्पन्नेऽस्मिन् पदार्थसमूहे जगति विश्वानि कार्य्याणि कर्त्तुं मन्दिन इन्द्राय **जीवाय** मन्दिं चक्रये चक्रि[मेनमी]मासृजत ।। २ ।।

**भावार्थः**—**विद्वद्भिरस्मिन् जगति पृथिवीमारभ्येश्वरपर्य्यन्तानां पदार्थानां विज्ञानप्रचारेण**[2] **सर्वान् मनुष्यान् विद्यया क्रियावतः संपाद्य सर्वाणि सुखानि सदा संपादनीयानि** ।। २ ।।

शिल्पविद्या के उत्तम साधन जल और अग्नि का वर्णन अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे विद्वानो ! (सुते) उत्पन्न हुए पदार्थ-समूहरूपी संसार में (विश्वानि) सब वस्तुओं को बनाने, वा सब कार्यों के करने के लिये ( मन्दिने ) हर्षित करने या कराने के स्वभाववाले, तथा ( इन्द्राय ) परमैश्वर्य की इच्छा करनेवाले जीव के लिये ( मन्दिम् ) आनन्द बढ़ानेवाले, और ( चक्रये ) पुरुषार्थ करने के स्वभाववाले के लिये ( चक्रिम् ) शिल्पविद्या से सिद्ध किये हुए साधनों में यानों को शीघ्र चलाने के स्वभाववाले (एनम्) इन ( ईम् ) जल और अग्नि को ( आसृजत ) अत्यन्त प्रकाशित करो ।। २ ।।

**भावार्थ**—विद्वानों को इस संसार में पृथिवी से लेके ईश्वरपर्यन्त पदार्थों के विशेष ज्ञान के प्रचार से, वा उत्तम शिल्पविद्या से सब मनुष्यों को उत्तम-उत्तम क्रिया सिखाकर सब सुखों का प्रकाश करना चाहिये ।। २ ।।



**[3]अथेन्द्रशब्देनेश्वर उपदिश्यते—**

**मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे । सचैषु सवनेष्वा ।। ३ ।।**

**मत्स्व । सुऽशिप्र । मन्दिऽभिः । स्तोमेभिः । विश्वऽचर्षणे । सचा । एषु । सवनेषु । आ ॥ ३ ।।**

**पदार्थः**—( **मत्स्व** ) **अस्माभिः स्तुतः सन् सदा हर्षय** । द्व्यचोऽतस्तिङः [अ० ६ । ३ । १३४] **इति दीर्घः** । बहुलं छन्दसि [अ० २ । ४ । ७३] **इति श्यनो लुक्**[4] **च** । (**सुशिप्र**) **शोभनं शिप्रं ज्ञानं प्रापणं वा यस्य तत्संबुद्धौ** ( **मन्दिभिः** ) **तज्ज्ञापकैर्हर्षकरैश्च गुणैः** ( **स्तोमेभिः** ) **वेदस्थैः स्तुतियुक्तैस्त्वद्गुणप्रकाशकैः स्तोत्रैः** । बहुलं छन्दसि [अ० ७ । १ । १०] **इति भिस ऐस् न** । ( **विश्वचर्षणे** ) **विश्वस्य सर्वस्य जतगस्चर्षणिर्द्रष्टा तत्संबुद्धौ** । विश्वचर्षणिरिति

१. पदार्थ-सगतयेऽध्याहृतमिदं पदम् ।

२. 'पदार्थानां विज्ञानस्य प्रचारेण' इत्येवं वाक्ये विज्ञानपदस्य सापेक्षत्वादसमर्थत्वम् । तथापि 'यथा देवदत्तस्य गुरोः कुलम्' इत्यत्र 'देवदत्तस्य गुरुकुलम्' इत्येव समासो भवति, तथैवात्रापि ज्ञेयम् । अत एवोक्तं महाभाष्यकृता—'भवति वै प्रधानस्य सापेक्षस्यापि समासः, यथा देवदत्तस्य गुरुकुलम्' । अ० २।१।१ ।।

३. अस्मिन् मन्त्रे साक्षादिन्द्रपदस्यापाठेऽपि सूक्तस्यैन्द्रत्वादिह 'इन्द्रपदेन' इत्युक्तम् ।

४. द्र०—पूर्वत्र पृष्ठ ५५८, टि० १ ।

पश्यतिकर्मसु[1] पठितम्। निघं० ३। ११। (सचा) सचन्ति ये ते [2]सचास्तान् सचानस्मान् विदुषः। अत्र शसः स्थाने सुपां सुलुग्० [अ० ७। १। ३९] इत्याकारादेशः। सचेति पदनामसु पठितम्। निघं० ४। २ अनेन ज्ञानप्राप्त्यर्थौ गृह्यते। (एषु) प्रत्यक्षेषु (सवनेषु) ऐश्वर्य्येषु। 'सु प्रसवैश्वर्य्ययोः' इत्यस्य रूपम्। (आ) समन्तात्॥ ३॥

**अन्वयः**—हे विश्वचर्षणे सुशिप्रेन्द्र भगवन्! त्वं मन्दिभिः स्तोमेभिः स्तुतः सन्नेषु सवनेषु [सचा] सचानस्मानामत्स्व समन्ताद्धर्षय॥ ३॥

**भावार्थः**—येन विश्वप्रकाशकः सूर्य्य उत्पादितस्तत्स्तुतौ ये मनुष्याः कृतनिष्ठाः [सन्ति, ते] धार्मिकाः पुरुषार्थिनो भूत्वा सर्वथा सर्वद्रष्टारं परमेश्वरं ज्ञात्वा सर्वैश्वर्य्यस्योत्पादने तद्रक्षणे च समवेता भूत्वा सुखकारिणो भवन्तीति॥ ३॥

अगले मन्त्र में इन्द्रशब्द से परमेश्वर का प्रकाश किया है—

**पदार्थान्वयभाषा**—हे (विश्वचर्षणे) सब संसार के देखने, तथा (सुशिप्र) श्रेष्ठज्ञानयुक्त परमेश्वर! आप (मन्दिभिः) जो विज्ञान वा आनन्द के करने वा करानेवाले (स्तोमेभिः) वेदोक्त स्तुतिरूप गुणप्रकाश करनेहारे स्तोत्र हैं, उनसे स्तुति को प्राप्त होकर (एषु) इन प्रत्यक्ष (सवनेषु) ऐश्वर्य्य देनेवाले पदार्थों में (सचा) युक्त हम लोगों को करके (आ मत्स्व) अच्छे प्रकार आनन्दित कीजिये॥ ३॥

**भावार्थ**—जिसने संसार के प्रकाश करनेवाले सूर्य्य को उत्पन्न किया है, उसकी स्तुति करने में जो श्रेष्ठ पुरुष एकाग्रचित्त हैं, अथवा सब को देखनेवाले परमेश्वर को जानकर सब प्रकार से धार्मिक और पुरुषार्थी होकर सब ऐश्वर्य्य को उत्पन्न और उसकी रक्षा करने में मिलकर रहते हैं, वे ही सब सुखों को प्राप्त होने के योग्य, वा औरों को भी उत्तम-उत्तम सुखों के देनेवाले हो सकते हैं॥ ३॥



पुनस्सोऽर्थ उपदिश्यते—

## असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत। अजोषा वृषभं पतिम्॥ ४॥

**असृग्रम्। इन्द्र। ते। गिरः। प्रति। त्वाम्। उत्। अहासत॥ अजोषाः। वृषभम्। पतिम्॥ ४॥**

**पदार्थः**—(असृग्रम्) सृजामि विविधतया वर्णयामि। बहुलं छन्दसि। अ० ७। १। ८

१. पश्यतिकर्मसु कानिचिन्नामान्यपि पठ्यन्ते। तैरेष भ्रमो न विधेयो यन्निघण्टुकारो नामाख्यातयोर्भेदमपि न जानाति स्म। यद्यस्य प्रवक्ता नामाख्यातयोरपि विमूढो भवेत्, तर्हि को नाम सचेता ग्रन्थमिममाद्रियेत। अतोऽत्राख्यातपदेष्वपि नाम्नां निर्देशो येन धातुना चर्षणिप्रभृतयः पदानि संस्क्रियन्ते, स धातुः पश्यतिकर्मेति भावो निघण्टुकारस्य ज्ञेयः।

२. यद्यपि बहुत्र 'सचा' पदमव्ययरूपेणोपलभ्यते, तथापीह भाष्यकृता नामरूपेण व्याख्यातः। अस्य पचाद्यजन्तस्यान्तोदात्तत्वे प्राप्ते वृषादीनामाकृतिगणत्वात् (अ० ६।१।१९७) आद्युदात्तत्वं द्रष्टव्यम्।

अनेन 'सृज' धातोरुडागमः । वर्णव्यत्ययेन जकारस्थाने गकारः, लडर्थे लङ् च । (इन्द्र) स्तोतव्य ! (ते) तव (गिरः) वेदवाण्यः (प्रति) इन्द्रियागोचरेऽर्थे । प्रतीत्येतस्य[1] प्रातिल प्राह । निरु० १ । ३ । (त्वाम्) वेदवक्तारं परमेश्वरं (उदहासत) उत्कृष्टतया ज्ञापयन्ति । ओहाङ् गतौ इत्यस्माल्लडर्थे लुङ् । (अजोषाः) जुषसे । अत्र छन्दस्युभयथा [अ० ३।४।११७] इत्यार्धधातुकसंज्ञाश्रयाल्लघूपधगुणः । छान्दसो वर्णलोपो वा [महा० ८ । २ । २५] इति थास कारस्य लोपेनेदं सिध्यति । (वृषभम्) सर्वाभीष्टवर्षकम् (पतिम्) पालकम् ॥ ४ ॥

**अन्वयः**—हे इन्द्र परमेश्वर ! यास्ते तव गिरो [ता] वृषभं पतिं त्वामुदहासत । जोषाः सर्वा विद्या[3] जुषसे, ताभिरहमपि प्रतीत्थंभूतं वृषभं पतिं त्वामसृग्रं सृजामि ॥ ४ ॥

**भावार्थः**—येनेश्वरेण स्वप्रकाशितेन वेदेन यादृशानि स्वस्वभावगुणकर्माणि प्रकाशिता तान्यस्माभिस्तथैव वेद्यानि सन्ति । कुतः ? ईश्वरस्यानन्तसत्यस्वभावगुणकर्मवत्त्वाद् अल्पज्ञैरस्मा जीवैः स्वसामर्थ्येन तानि ज्ञातुमशक्यत्वात् । यथा स्वयं स्वस्वभावगुणकर्माणि जानाति, ऽन्यैर्यथावज्ज्ञातुमशक्यानि भवन्ति । अतः सर्वैर्विद्वद्भिर्वेदवाण्यैवेश्वरादयः पदार्थाः संप्री पुरुषार्थेन च वेदितव्याः सन्ति, तेभ्य उपकारग्रहणं चेति[4] । स एवेश्वर इष्टः पालकश्च मन्त इति ॥ ४ ॥

फिर भी अगले मन्त्र में ईश्वर का प्रकाश किया है—

**पदार्थान्वयभाषा**—हे ( इन्द्र ) परमेश्वर ! जो ( ते ) आपकी ( गिरः ) वेदवाणियां वे ( वृषभम् ) सब से उत्तम, सब की इच्छा पूर्ण करनेवाले, ( पतिम् ) सब के पालन करनेह ( त्वाम् ) वेदों के वक्ता आपको ( उदहासत ) उत्तमता के साथ जनाती हैं, और जिनका ( अजोषाः ) सेवन करते हो, उन्हींसे मैं भी ( प्रति ) उक्त गुणयुक्त आपको ( असृग्रम् अनेक प्रकार से वर्णन करता हूं ॥ ४ ॥

**भावार्थ**—जिस ईश्वर ने [ स्वयं ] प्रकाश किये हुए वेदों से जैसे अपने स्वभाव और कर्म प्रकट किये हैं, वे वैसे ही सब लोगों को जानने योग्य हैं। क्योंकि ईश्वर के सत्य स्वभ के साथ अनन्त गुण और कर्म हैं, उनको हम अल्पज्ञ लोग अपने सामर्थ्य से जानने को समर्थ न हो सकते । तथा जैसे हम लोग अपने-अपने स्वभाव गुण और कर्मों को जानते हैं, वैसे औरों उनका यथावत् जानना कठिन होता है । इसी प्रकार सब विद्वान् मनुष्यों को वेदवाणी के वि ईश्वर आदि पदार्थों को यथावत् जानना कठिन है । इसलिये प्रयत्न से वेदों को जानके

१. प्रतिराभिमुख्यस्यार्थस्य प्रातिलोम्यं विपरीतभावं द्योतयतीति भावः । अभिमुखं वस्तु प्रत्यक्षमिन्द्रि गोचरं भवति, तद्विपरीतमप्रत्यक्षमनिन्द्रियगोचरम् । अतोऽत्र 'इन्द्रियागोचरार्थे' इत्येवं निर्देशो भाष्यव व्यधायि । अन्वये तु प्रतीत्थंभावे प्रयुक्तः प्रतिभाति ।

२. 'याः सर्वा विद्यास्त्वं जुषसे' इत्येवमत्र सम्बन्धो ज्ञेयः ।

३. अत्र 'सर्वा गिरः' अथवा 'सर्वा वेदवाण्यः' पाठो युक्तः प्रतिभाति ।

४. कार्यमिति शेषः ।

द्वारा सब पदार्थों से उपकार लेना, तथा उसी ईश्वर को अपना इष्टदेव और पालन करनेहारा मानना चाहिये ।। ४ ।।



तस्योपासनेन किं लभ्यत, इत्युपदिश्यते—

सं चोदय चित्रमर्वाग्राध इन्द्र वरेण्यम् । असदित्ते विभु प्रभु ।। ५ ।।

सम् । चोदय । चित्रम् । अर्वाक् । राधः । इन्द्र । वरेण्यम् ।। असत् । इत् । ते । विऽभु । प्रऽभु ।।५।।

**पदार्थः**—( सम् ) सम्यगर्थे । समित्येकीभावं प्राह । निरु० १ । ३ । ( चोदय ) प्रेरय प्रापय ( चित्रम् ) चक्रवर्त्तिराज्यश्रिया विद्यामणिसुवर्णहस्त्यश्वादियोगेनाद्भुतम् ( अर्वाक् ) प्राप्त्यनन्तरमाभिमुख्येनानन्दकारकम् ( राधः ) राध्नुवन्ति सुखानि येन तद्धनम् । राध इति धननामसु पठितम् । निघं० २ । १० । ( इन्द्र ) दयामयसर्वसुखसाधनप्रदेश्वर ! ( वरेण्यम् ) [1]वर्त्तुमर्हमतिश्रेष्ठम् । वृञ एण्यः । उ० ३ । ६६ अनेन 'वृञ् वरणे' इत्यस्माद् [2]एण्यप्रत्ययः । (असत्) भवेत् । अस धातोर्लेट्प्रयोगः । ( इत् ) एव (ते) तव (विभु) बहुसुखव्यापकम् (प्रभु) उत्तमप्रभावकारकम् ।। ५ ।।

**अन्वयः**—हे इन्द्र ! ते तव सृष्टौ यद्यद्वरेण्यं विभु प्रभु चित्रं राधोऽसत्, तत्त[दि]त् कृपया-ऽर्वागस्मदाभिख्याय संचोदय ।। ५ ।।

**भावार्थः**—मनुष्यैरीश्वरानुग्रहेण स्वपुरुषार्थेन च सर्वस्यात्मशरीरसुखाय विद्यैश्वर्य्ययोः प्राप्तिरक्षणोन्नतिसन्मार्गदानानि सदैव संसेव्यानि । यतो दारिद्र्यालस्यप्रभवदुःखाभावेन दिव्या भोगाः सततं वर्धेरन्निति ।। ५ ।।

इति सप्तदशो वर्गः समाप्तः ।।

ईश्वर की उपासना से क्या लाभ होता है, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—हे ( इन्द्र ) करुणामय, सब सुखों के [साधनों के] देनेवाले परमेश्वर ! ( ते ) आपकी सृष्टि में जो-जो ( वरेण्यम् ) अति श्रेष्ठ, ( विभु ) बहुत सुखों से पूर्ण, ( प्रभु ) उत्तम-उत्तम प्रभावों का हेतु, ( चित्रम् ) जिससे श्रेष्ठ विद्या चक्रवर्ति राज्य से सिद्ध होनेवाले मणि सुवर्ण और हाथी आदि अच्छे-अच्छे अद्भुत पदार्थ होते हैं, ऐसा (राधः) धन ( असत् ) हो, सा-सो [ (इत्) ही] कृपा करके [ (अर्वाक्) ] हमारी ओर ( संचोदयः ) प्रेरित कीजिये, अथवा हमें प्राप्त कराइये ।। ५ ।।

---

१. ग्रन्थकृता सत्यार्थप्रकाशे ( पृष्ठ ५६, पं० २३, रा०ला०क०ट्र० संस्करणे ); पञ्चमहायज्ञविधौ; यजुर्वेदभाष्ये (२२ । ६; ३० । २) च गायत्रीमन्त्रव्याख्याने 'वर्तुम्' इत्येवमनिड्रूपं निर्दिश्यते । 'वृञ् वरणे' धातुस्तु सेट्त्वेन वैयाकरणैः स्वीक्रियते । ग्रन्थकृताऽपि वेदभाष्ये बहुत्र 'वरितुं वरीतुम्' इत्येवं सेड्रूपाण्यपि प्रदर्श्यन्ते । सत्येवं 'वर्तुम्' इत्यत्र 'अनित्यमागमशासनम्' (सीरदेवीय परिभाषावृत्ति सं० ६८) इत्यनया परिभाषया इटोऽभावः समाधेयः । परिभाषा चेयं ग्रन्थकृताऽपि पूर्वत्र (ऋ० १ । ६ । ७) भाष्य उद्धृता ।

२. एण्य-प्रत्यये वृषादीनां च ( अष्टा० ६ । १ । १०३ ) इत्यनेन वृषादेराकृतिगणत्वादाद्युदात्तत्वं द्रष्टव्यम् । कासुचिदुणादिवृत्तिषु एण्यन्-प्रत्ययः पठ्यते । तथा सति नित्त्वादेवाद्युदात्तत्वं सिद्धम् ।

**भावार्थ**—मनुष्यों को ईश्वर के अनुग्रह और अपने पुरुषार्थ से सब के आत्मा और शरीर के सुख के लिये विद्या और ऐश्वर्य्य की प्राप्ति, वा उनकी रक्षा और उन्नति, तथा सत्यमार्ग वा उत्तम दानादि धर्म अच्छी प्रकार से सदैव सेवन करना चाहिये। जिससे दारिद्रय और आलस्य से उत्पन्न होनेवाले दुःखों का नाश होकर अच्छे-अच्छे भोग करने योग्य पदार्थों की वृद्धि होती रहे ॥ ५ ॥

यह सत्रहवां वर्ग समाप्त हुआ ॥



**कथंभूतानस्मान्कुर्वित्युपदिश्यते—**

**अस्मान्त्सु तत्र चोदयेन्द्र राये रभस्वतः । तुविद्युम्न यशस्वतः ॥ ६ ॥**

अस्मान् । सु । तत्र । चोदय । इन्द्र । राये । रभस्वतः ॥ तुविऽद्युम्न । यशस्वतः ॥ ६ ॥

**पदार्थः**—( **अस्मान्** ) **विदुषो धार्मिकान् मनुष्यान्** ( **सु** ) **शोभनार्थे क्रियायोगे च** ( **तत्र** ) **पूर्वोक्ते पुरुषार्थे** ( **चोदय** ) **प्रेरय** ( **इन्द्र** ) **अन्तर्यामिन्नीश्वर!** ( **राये** ) **धनाय** ( **रभस्वतः** ) **कार्य्यारम्भं कुर्वत आलस्यरहितान् पुरुषार्थिनः** ( **तुविद्युम्न** ) **बहुविधं द्युम्नं विद्याद्यनन्तं धनं यस्य तत्संबुद्धौ** । द्युम्नमिति धननामसु पठितम् । निघं० २ । १० । तुवीति बहुनामसु च । निघं० ३ । १ । (**यशस्वतः**) **यशो विद्याधर्मसर्वोपकाराख्यं प्रशंसितं**[1] **विद्यते येषां तान् । अत्र प्रशंसार्थे मतुप्** ॥ ६ ॥

**अन्वयः**—हे तुविद्युम्नेन्द्र **परात्मँस्त्वं** रभस्वतो यशस्वतोऽस्मान् तत्र **पुरुषार्थे** राये **उत्कृष्टधनप्राप्त्यर्थं** सुचोदय ॥ ६ ॥

**भावार्थः**—**अस्यां सृष्टौ परमेश्वराज्ञायां च वर्तमानैः पुरुषार्थिभिर्यशस्विभिः सर्वैर्मनुष्यैर्विद्याराज्यश्रीप्राप्त्यर्थं सदैव प्रयत्नः कर्त्तव्यः। नैतादृशैर्विनैताः श्रियो लब्धुं शक्याः। कुतः? ईश्वरेण पुरुषार्थिभ्य एव सर्वसुखप्राप्तेर्निर्मितत्वात्** ॥ ६ ॥

अन्तर्यामी ईश्वर हम लोगों को कैसे-कैसे कामों में प्रेरणा करे, इस विषय का अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—हे ( **तुविद्युम्न** ) अनन्त विद्यादिधनयुक्त, ( इन्द्र ) अन्तर्यामी ईश्वर! ( रभस्वतः ) आलस्य को छोड़के कार्य्यों के आरम्भ करनेवाले, ( यशस्वतः ) विद्या धर्म और सर्वोपकार रूप प्रशंसित कीर्तिवाले ( अस्मान् ) हम लोगों को ( तत्र ) पूर्वोक्त श्रेष्ठ पुरुषार्थ में ( राये ) उत्तम-उत्तम धन की प्राप्ति के लिये ( **सुचोदय** ) अच्छी प्रकार प्रेरित कीजिये ॥६॥

**भावार्थ**—सब मनुष्यों को उचित है कि इस सृष्टि में परमेश्वर की आज्ञा के अनुकूल वर्तमान, पुरुषार्थी और यशस्वी होकर विद्या तथा राज्यलक्ष्मी की प्राप्ति के लिये सदैव उपाय

१. वै० य० मुद्रितेषु संस्करणेषु 'यशोविद्याधर्मसर्वोपकाराख्या प्रशंसा' इत्यसम्बद्धः पाठ उपलभ्यते।

करें। उक्त गुणवाले पुरुषों से भिन्न अन्य आलसियों से यह श्री ( =ऐश्वर्य ) प्राप्त नहीं की जा सकती। क्योंकि ईश्वर ने पुरुषार्थी सज्जनों ही के लिये सब सुख रचे हैं ॥ ६ ॥



**पुनः कीदृशं तद्धनमित्युपदिश्यते—**

## सं गोम॑दिन्द्र॒ वाज॑वद॒स्मे पृ॒थु श्रवो॑ बृ॒हत् । वि॒श्वायु॑र्धे॒ह्यक्षि॑तम् ॥ ७ ॥

सम् । गोऽम॑त् । इ॒न्द्र॒ । वाज॑ऽवत् । अ॒स्मे इति॑ । पृ॒थु । श्रवः॑ । बृ॒हत् ॥ वि॒श्वऽआ॑युः । धे॒हि । अक्षि॑तम् ॥ ७ ॥

पदार्थः–(सम्) **सम्यगर्थे क्रियायोगे।** समित्येकीभावं प्राह। निरु० १। ३। **(गोमत्) गौः प्रशस्ता वाक्, गावः स्तोतारश्च विद्यन्ते यस्मिंस्तत्। अत्र प्रशंसार्थे मतुप्। (इन्द्र) अनन्तविद्येश्वर! (वाजवत्) वाजो बहुविधं भोक्तव्यमन्नमस्त्यस्मिन् तत्।** वाजइत्यन्ननामसु पठितम्। निघं० २। ७। **अत्र भूम्न्यर्थे मतुप्। (अस्मे) अस्मभ्यम्। अत्र** सुपां सुलुग्० [अ० ७। १। ३६] **इति शे आदेशः। (पृथु) नानाविद्यासु विस्तीर्णम्। (श्रवः) [1]शृण्वन्त्यनेका विद्याः सुवर्णादि च धनं यस्मिंस्तत्।** श्रव इति धननामसु पठितम्। निघं० २। १०। **(बृहत्) अनेकैः शुभगुणैर्भोगैश्च महत् (विश्वायुः) विश्वं शतवार्षिकमधिकं वा आयुर्यस्मात् तत् (धेहि) संयोजय (अक्षितम्) यन्न कदाचित् क्षीयते सदैव वर्धमानं तत् ॥ ७ ॥**

**अन्वयः—हे इन्द्र जगदीश्वर! त्वमस्मे अस्मभ्यं** गोमद् वाजवत् पृथु बृहद् विश्वायुरक्षितं श्रवः संधेहि ॥ ७ ॥

**भावार्थः—मनुष्यैर्ब्रह्मचर्य्येण विषयलोलुपतात्यागेन भोजनाच्छादनादिसुनियमैश्च विद्याचक्रवर्त्तिश्रीयोगेन समग्रस्यायुषो भोगार्थं संधेयम्। यत ऐहिकं पारमार्थिकं च दृढं विशालं सुखं सदैव वर्धेत। न ह्येतत् केवलमीश्वरस्य प्रार्थनयैव भवितुमर्हति, किंतु विविधपुरुषार्थापेक्षं वर्त्तत एतत् ॥ ७ ॥**

फिर उक्त धन कैसा है, इस विषय का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा—**हे ( इन्द्र ) अनन्तविद्यायुक्त, सबको धारण करनेहारे ईश्वर! आप ( अस्मे ) हमारे लिये ( गोमत् ) जो धन श्रेष्ठ वाणी और अच्छे-अच्छे उत्तम पुरुषों को प्राप्त करानेवाला, (वाजवत्) नाना प्रकार के अन्नादि पदार्थों को प्राप्त करानेवाला, (पृथु) [नाना विद्याओं में] विस्तृत, (बृहत्) अनेक शुभ गुणों [और भोगों] से बढ़ा हुआ, (विश्वायुः) पूर्ण सौ वर्ष वा अधिक आयु का निमित्त, (अक्षितम्) प्रतिदिन बढ़नेवाला [अक्षय] (श्रवः) जिसमें अनेक प्रकार की विद्या वा सुवर्ण आदि धन सुनने में आता है, उस धन को (संधेहि) अच्छे प्रकार दीजिये ॥७॥

---

१. व्युत्पत्तिस्तु 'शृण्वन्त्यस्मिन्, तच्छ्रवः' इत्येव। पूर्वव्युत्पत्तौ 'यस्मिन्' इति विषयसप्तमी। स च विषयो विद्या धनं च। अत एवैते पदे भाष्यकृताऽत्र निर्दिष्टे। यद्वा—'श्रूयते यत्तच्छ्रवः' तच्च विद्या धनं वा।

**भावार्थ**—मनुष्यों को चाहिये कि ब्रह्मचर्य्य का धारण, विषयों की लम्पटता का त्याग, भोजन आदि व्यवहारों के श्रेष्ठ नियमों से विद्या और चक्रवर्त्ति राज्य की लक्ष्मी को सिद्ध करके, संपूर्ण आयु भोगने के लिये पूर्वोक्त धन के जोड़ने की इच्छा अपने पुरुषार्थ द्वारा करें, कि जिससे इस संसार का वा परमार्थ का दृढ़ और विशाल अर्थात् अति श्रेष्ठ सुख सदैव बना रहे। परन्तु यह उक्त सुख केवल ईश्वर की प्रार्थना से ही नहीं मिल सकता, किन्तु उसको प्राप्ति के लिये पूर्ण पुरुषार्थ भी करना अवश्य उचित है ॥ ७ ॥



पुनः कीदृशं तदित्युपदिश्यते—

**अस्मे धेहि श्रवो बृहद् द्युम्नं सहस्रसातमम् । इन्द्र ता रथिनीरिषः ॥ ८ ॥**

अस्मे इति । धेहि । श्रवः । बृहत् । द्युम्नम् । सहस्रऽसातमम् ॥ इन्द्र । ताः । रथिनीः । इषः ॥८॥

**पदार्थः**—(**अस्मे**) **अस्मभ्यम्। अत्र** सुपां सुलुग्० [अ० ७। १।३९] **इति शे आदेशः।** (**धेहि**) **प्रयच्छ** (**श्रवः**) **पूर्वोक्तम्** (**बृहत्**) **उपबृंहितम्** (**द्युम्नम्**) **प्रकाशमयं ज्ञानम्** (**सहस्रसातमम्**) **सहस्रमसंख्यातं सुखं सनुते ददाति येन तदतिशयितम्।** जनसनखनक्रमगमो विट्। अ० ३। २। ६७ **अनेन सहस्रोपपदात् सनोतेर्विट्।** विड्वनोरनुनासिकस्यात्। अ० ६। ४। ४१ **अनेन नकारस्याकारादेशः, ततस्तमप्।** (**इन्द्र**) **महाबलयुक्तेश्वर !** (**ताः**) **पूर्वोक्ताः** (**रथिनीः**) **बहवो रमणसाधका रथा विद्यन्ते यासु ताः। अत्र भूम्न्यर्थ इनिः,** [स्त्रियां ऋन्नेभ्यो ङीप्। अ० ४। १। ५ **इति ङीप्।**] सुपां सुलुग्० [अ० ७। १। ३९] **इति पूर्वसवर्णादेशश्च।** (**इषः**) **इष्यन्ते यास्ताः सेनाः। अत्र** कृतो बहुलम् [अ० ३। ३। ११३ वा०] **इति वार्तिकेन कर्मणि क्विप्** ॥ ८ ॥

**अन्वयः**—**हे** इन्द्र! त्वमस्मे सहस्रसातमम् बृहद् द्युम्नं श्रवः [ताः] रथिनीरिषश्च धेहि ॥८॥

**भावार्थः**—**हे जगदीश्वर ! भवत्कृपयात्यन्तपुरुषार्थेन च येन धनेन बहुसुखसाधिकाः पृतनाः प्राप्यन्ते, तदस्मासु नित्यं स्थापय ॥ ८ ॥**

फिर पूर्वोक्त धन कैसा होना चाहिये, इस विषय का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे ( इन्द्र ) अत्यन्त बलयुक्त ईश्वर ! आप ( अस्मे ) हमारे लिये ( सहस्रसातमम् ) असंख्यात सुखों का मूल, ( बृहत् ) नित्य वृद्धि को प्राप्त होने योग्य (द्युम्नम्) प्रकाशमय ज्ञान, तथा ( श्रवः ) पूर्वोक्त धन, और [ (ताः) पूर्वोक्त] ( रथिनीरिषः ) अनेक रथ आदि साधनसहित [चाहने योग्य] सेनाओं को ( धेहि ) अच्छे प्रकार दीजिये ॥ ८ ॥

**भावार्थ**—हे जगदीश्वर ! आपकी कृपा और अत्यन्त पुरुषार्थ के साथ जिस धन करके बहुत से सुखों को सिद्ध करनेवाली [ उत्तम ] सेना प्राप्त होती है, उसको हम लोगों में नित्य स्थापन कीजिये, [अर्थात् हमारी सर्व-साधन-सम्पन्न उत्तम सेना होवे] ॥ ८ ॥



अथायमिन्द्रः कीदृश इत्युपदिश्यते—

वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्त ऋग्मियम् । होम गन्तारमूतये ॥ ९ ॥

वसोः । इन्द्रम् । वसुऽपतिम् । गीःऽभिः । गृणन्तः । ऋग्मियम् ॥ होम । गन्तारम् । ऊतये ॥ ९ ॥

**पदार्थः**—( वसोः ) सुखवासहेतोर्विद्यादिधनस्य ( इन्द्रम् ) धारकम् ( **वसुपतिम्** ) **वसूनामग्निपृथिव्यादीनां पतिं पालकं स्वामिनम्।** कतमे वसव इति ? अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसवः, एतेषु हीदꣳ सर्वं वसु हितमेते हीदꣳ सर्वं वासयन्ते, तद्यदिदꣳ सर्वं वासयन्ते तस्माद्वसव इति । श० १४ । ५ । ७ । ४ ।[1] (**गीर्भिः**) **वेदविद्यया संस्कृताभिर्वाग्भिः** । गीरिति वाङ्नामसु पठितम् । निघं० १ । ११ । (**गृणन्तः**) **स्तुवन्तः** । (**ऋग्मियम्**) **ऋचां वेदमन्त्राणां निर्मातारम् । ऋगुपपदात्** माङ् माने **धातोः**[2] **क्विप्** । [3]**अमीयङादेशश्चेति** । ( होम ) **आह्वयामः** । **ह्वेञ् इत्यस्माल्लङुत्तमबहुवचने** बहुलं छन्दसि [अ० २ । ४ । ७३] इति **शपो लुक्** । छन्दस्युभयथा [अ० ३ । ४ । ११७] **इत्युभयसंज्ञात्वे गुणसंप्रसारणे भवतः** । छान्दसो वर्णलोपो वा [ महा० ८ । २ । २५ ] **इति सकारलोपश्च** । ( **गन्तारम्** ) **ज्ञातारं सर्वत्र व्याप्त्या प्रापकम्** ( **ऊतये** ) **रक्षणाय स्वामित्वप्राप्तये क्रियोपयोगाय वा** ॥ ६ ॥

**अन्वयः**—गीर्भिर्गृणन्तो **वयं** वसुपतिमृग्मियं गन्तारमिन्द्रं वसोरूतये होम ॥ ६ ॥

**भावार्थः**—**सर्वैर्मनुष्यैः सर्वजगत्स्वामिनो वेदप्रकाशकस्य सर्वत्र व्यापकस्येन्द्रस्य परमेश्वरस्यैवेश्वरत्वेन स्तुतिः कार्य्या। तथेश्वरस्य न्यायकरणत्वादिगुणानां स्पर्धा, पुरुषार्थेन सर्वथोत्कृष्टान् विद्याराज्यश्रियादिपदार्थान् प्राप्य रक्षोन्नती च सदैव कार्य्ये इति** ॥ ६ ॥

फिर यह इन्द्र कैसा है, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—( गीर्भिः ) वेदविद्या से सुसंस्कृत वाणियों से ( गृणन्तः ) स्तुति करते हुए हम लोग ( वसुपतिम् ) अग्नि, पृथिवी, वायु, अन्तरिक्ष, आदित्यलोक, द्यौ अर्थात् प्रकाशमान लोक, चन्द्रलोक और नक्षत्र अर्थात् जितने तारे दीखते हैं, इन सब का नाम वसु है, क्योंकि ये ही निवास के स्थान हैं इनके पति स्वामी और रक्षक, ( ऋग्मियम् ) वेदमन्त्रों के प्रकाश करनेहारे, ( गन्तारम् ) सब के अन्तर्यामी, अर्थात् अपनी व्याप्ति से सब जगत् प्राप्त होनेवाले, तथा

---

१. अध्यायानुसारं शत० १४ । ६ । ६ । ४ ॥

२. वै० य० मुद्रितेषु संस्करणेषु 'मीञ् धातोः' इत्यपपाठः । नहि मीञ् हिंसायामित्यस्य 'निर्मातारम्' अर्थः सम्भवति । भाष्यकृता उत्तरत्र ( ऋ० १ । ६२ । १ ) भाष्ये 'ऋग्मियाय'पदव्याख्याने 'ऋग्भिर्यो मीयते स्तूयते तस्मै । अत्र ऋगुपपदान्मा धातोः ·····' इति वक्ष्यते । तथाऽत्रापि ज्ञेयम् । मा धातोः क्विपि 'घुमास्था०' (अ० ६ । ४ । ६६) ईति ईकारादेशः । यजुर्भाष्ये (३४ । १६) मिनोतेरपि व्युत्पाद्यते ।

३. अमि 'तन्वादीनां छन्दसि बहुलम्' (अ० ६ । ४ । ७७ वा० ) इति वार्त्तिकेन इयङादेश इति भावः । 'क्विबन्तो धातुत्वं न जहाति' इति नियमे 'अचिश्नुधातु०' (अ० ६ । ४ । ७७) इत्यादिना इयङ् द्रष्टव्यः ।

( इन्द्रम् ) सब के धारण करनेवाले परमेश्वर को ( वसोः ) संसार में सुख के साथ वास का हेतु जो विद्या आदि धन है, उसकी ( ऊतये ) प्राप्ति और रक्षा के लिये ( ह्वाम ) करते हैं ॥ ९ ॥

**भावार्थ—**सब मनुष्यों को सब जगत् के स्वामी, वेद के प्रकाशक, सर्वत्र व्यापक परमेश्वर ही की ईश्वर रूप से स्तुति करनी चाहिये। और ईश्वर के न्याय आदि गुणों की तथा पुरुषार्थ के साथ सब प्रकार से अति श्रेष्ठ विद्या राज्यलक्ष्मी आदि पदार्थों को प्राप्त उनकी उन्नति सदा करनी चाहिये ॥ ९ ॥



**पुनः कस्मै प्रयोजनायेत्युपदिश्यते—**

**सुतेसुते न्योकसे बृहद् बृहत एदरिः। इन्द्राय शूषमर्चति ॥ १० ॥**

सुतेऽसुते। निऽओकसे। बृहत्। बृहते। आ। इत्। अरिः॥ इन्द्राय। शूषम्। अर्चति ॥ १० ॥

**पदार्थः—**(सुतेसुते) उत्पन्न उत्पन्ने (न्योकसे) निश्चितानि ओकांसि स्थानानि येन ओक इति निवासनामोच्यते। निरु० ३। ३। (बृहत्) सर्वथा वृद्धम् (बृहते) सर्वोत्कृष्टगु व्यापकाय (आ) समन्तात् (इत्) अपि (अरिः) ऋच्छति गृह्णात्यन्यायेन सुखानि च अच इः [उ० ४। १३९] इत्यनेन ऋधातोरौणादिक इः प्रत्ययः। (इन्द्राय) परमेश्वराय बलं सुखं च। शूषमिति बलनामसु पठितम्। निघं० २। ९। सुखनामसु च। निघं० ३ (अर्चति) समर्पयति ॥ १० ॥

**अन्वयः—**योऽरिरिदपि मनुष्यः सुतेसुते बृहते न्योकस इन्द्राय स्वकीयं बृहत् शूषम समर्प्पयति, [स] भाग्यशाली भवति ॥ १० ॥

**भावार्थः—**यदा[1] इमं प्रतिवस्तुव्यापकं मङ्गलमयमनुपमं परमेश्वरं प्रति कश्चित् चिच्छत्रुरपि मनुष्यः स्वाभिमानं त्यक्त्वा नम्रो भवति, तर्हि ये तदाज्ञाख्यं धर्मं तदुपासनानु चारन्ति, ते[3] महागुणैर्महान्तो भूत्वा सर्वैः पूज्या नम्राः कथं न भवेयुः ? य ईश्वरोपासका धा पुरुषार्थिनः सर्वोपकारका विद्वांसो मनुष्या भवन्ति, त एव विद्यासुखं चक्रवर्त्तिराज्यानन्दं वन्ति, नातो विपरीता इति ॥ १० ॥

**अत्रेन्द्रशब्दार्थवर्णनेनोत्कृष्टधनादिप्राप्त्यर्थमीश्वरप्रार्थनापुरुषार्थकरणाज्ञाप्रतिपादनं चा एतस्य नवमसूक्तार्थस्याष्टमसूक्तार्थेन सह संगतिरस्तीति बोध्यम् ॥**

**इदमपि सूक्तं** सायणाचार्य्यादिभिरार्य्यावर्त्तवासिभिर्यूरोपवासिभिरध्यापकविलसनाख्य **भिश्च मिथ्यैव व्याख्यातम् ॥**

**इति नवमं सूक्तमष्टादशश्च वर्गः समाप्तः ॥**

१. वै० य० मुद्रितेषु संस्करणेषु 'यदिमं' अपपाठः। भाषार्थे 'जब' इति प्रत्यक्षं पठ्यते।
२. वै० य० मुद्रितेषु संस्करणेषु 'धर्मं तदुपासनानुष्ठं' इत्यपपाठः।
३. वै० य० मुद्रितेषु संस्करणेषु 'त एव' पाठः। अत्र 'एव' पदमनर्थकम्।

किस प्रयोजन के लिये परमेश्वर की प्रार्थना करनी चाहिये, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—जो ( अरिः ) अन्याय से सुखों को ग्रहण करनेवाला मनुष्य (इत्) भी ( सुतेसुते ) उत्पन्न हुए सब पदार्थों में ( बृहते ) संपूर्ण श्रेष्ठ गुणों से महान्, सब में व्यापक, ( न्योकसे ) निश्चित किये हैं निवासस्थान जिसने, उस ( इन्द्राय ) परमेश्वर के लिये, अपने ( बृहत् ) सब प्रकार से बढ़े हुए ( शूषम् ) बल और सुख को ( आ ) अच्छी प्रकार ( अर्चति ) समर्पण करता हैं, वह भाग्यशाली होता है ॥ १० ॥

**भावार्थ**—जब सब में व्यापक, मंगलमय, उपमारहित परमेश्वर के प्रति कोई किसी का शत्रु मनुष्य भी अपना अभिमान छोड़ नम्र होता है, तब जो ईश्वर की आज्ञारूपी धर्म और उसकी उपासना का अनुष्ठान करते हैं, वे बड़े-बड़े गुणों से महात्मा होकर सब से सत्कार किये जाने के योग्य और नम्र क्यों न हों ? जो ईश्वर की उपासना करनेवाले, धार्मिक पुरुषार्थी, और सब का उपकार करनेवाले विद्वान् मनुष्य हैं, वे ही विद्या और चक्रवर्त्ती राज्य के आनन्द को प्राप्त होते हैं। जो कि उनसे विपरीत हैं, वे उस आनन्द को कभी नहीं प्राप्त हो सकते ॥ १० ॥

इस सूक्त में इन्द्र शब्द के अर्थ के वर्णन, उत्तम-उत्तम धन आदि की प्राप्ति के अर्थ ईश्वर की प्रार्थना, और पुरुषार्थ करने की आज्ञा के प्रतिपादन करने से इस नवमे सूक्त के अर्थ की संगति आठवें सूक्त के अर्थ के साथ मिलती है, ऐसा समझना चाहिये ॥

इस सूक्त का भी अर्थ **सायणाचार्य्य** आदि आर्य्यावर्त्तवासियों, तथा **विलसन** आदि अंगरेज़ लोगों ने सर्वथा मूल[1] से विरुद्ध वर्णन किया है ॥ १० ॥

यह नवमा सूक्त और अठारहवां वर्ग पूरा हुआ ॥



**अथ द्वादशर्चस्य दशमस्य सूक्तस्य मधुच्छन्दा ऋषिः । इन्द्रो देवता ।**
**१–३, ५[2] विराडनुष्टुप्; ६, ७, ९–१२ अनुष्टुप्;**
**८ निचृदनुष्टुप् छन्दः । गान्धारः स्वरः ।**
**४ भुरिगुष्णिक् छन्दः । ऋषभः स्वरः[3] ॥**

---

१. अर्थात् मन्त्रार्थ से ।

२. वै० य० मुद्रितेषु संस्करणेषु विराडनुष्टुप्सु '६' संख्यापि निर्दिश्यते । षष्ठमन्त्रे एकत्रिंशदक्षरत्वात् तस्या निर्देशोऽस्माभिरनुष्टुप्छन्दसि कृतः ।

३. यथाऽत्र पाठस्तथैव वै० य० मुद्रितयोः १-२ संस्करणयोः पठ्यते । तृतीयसंस्करणे तु 'विराडनुष्टुप्; ४ भुरिगुष्णिक्; ७, ९–१२ अनुष्टुप्, ८ निचृदनुष्टुप् छन्दः । १–३, ५–१२ गान्धारः, ४ ऋषभः स्वरः ।' इत्येवं परिवर्त्तितः । चतुर्थसंस्करणेऽपि तृतीयवदेव पाठः ।

तत्र के कथं तमिन्द्रं पूजयन्तीत्युपदिश्यते—

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ १ ॥

गायन्ति । त्वा । गायत्रिणः । अर्चन्ति । अर्कम् । अर्किणः ॥ ब्रह्माणः । त्वा । शतक्रतो इति शतऽक्रतो । उत् । वंशम्ऽइव । येमिरे ॥ १ ॥

**पदार्थः**—( गायन्ति ) सामवेदादिगानेन प्रशंसन्ति (त्वा) त्वां गेयं जगदीश्वरमिन्द्रम् (गायत्रिणः) गायत्राणि[1] प्रशस्तानि छन्दांस्यधीतानि विद्यन्ते येषां ते धार्मिका ईश्वरोपासकाः । अत्र प्रशंसायामिनिः[2] । ( अर्चन्ति ) नित्यं पूजयन्ति ( अर्कम् ) अर्च्यते पूज्यते सर्वैर्जनैर्यस्तम् ( अर्किणः ) अर्का मन्त्रा ज्ञानसाधना येषां ते ( ब्रह्माणः ) वेदान् विदित्वा क्रियावन्तः ( त्वा ) जगत्स्रष्टारम् (शतक्रतो) शतं बहूनि कर्माणि प्रज्ञानानि वा यस्य, तत्संबुद्धौ (उत्) उत्कृष्टार्थे । उदित्येतयोः प्रातिलोम्यं प्राह । निरु० १ । ३ । ( वंशमिव ) यथोत्कृष्टैर्गुणैः शिक्षणैश्च स्वकीयं वंशमुद्यमवन्तं कुर्वन्ति तथा (येमिरे) उद्युञ्जन्ति ॥

निरुक्तकार इमं मन्त्रमेवं व्याख्यातवान्—गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्राह्मणास्त्वा शतक्रत उद्येमिरे वंशमिव । निरु० ५।५ ॥ अन्यच्च—अर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदनेनार्चन्त्यर्कमन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति संवृतः[3] कटुकिम्ना । निरु० ५ । ४ ॥ १ ॥

**अन्वयः**—हे शतक्रतो ! ब्रह्माणः स्वकीयं वंशमुद्येमिरे इव[4] गायत्रिणस् [त्वा] त्वां गायन्ति, अर्किणोऽर्कं [त्वा] त्वामर्चन्ति ॥ १ ॥

**अत्रोपमालङ्कारः ।**

**भावार्थः**—[5]सर्वैर्मनुष्यैः परमेश्वरस्यैव पूजा कार्य्या, अर्थात् तदाज्ञायां सदा वर्त्तितव्यम् ।

---

१. 'छन्दसः प्रत्ययविधाने स्वार्थ उपसंख्यानम्' (अ० ४ । २ । ५५ वा०) अनेन गायत्री शब्दात् स्वार्थेऽण् । गायत्र्येव गायत्रम् । अस्योपलक्षणार्थत्वात् सर्वाणि छन्दांस्यत्राभिप्रेतानि ।

२. अत इनिठनौ (अ० ५ । २ । ११५) इत्यनेनेनिः ।

३. वै० य० मुद्रितेषु संस्करणेषु 'सवृतः' इत्यपपाठः ।

४. 'इव' पदस्य विषये मतद्वैध वर्तते । पदकाराः प्रातिशाख्यकारा वार्तिककारश्च इवेन पूर्वपदस्य समासभावं ब्रुवते । पाणिनिरन्ये च केचन वैयाकरणा समासं नेच्छन्ति । समासाभावे स्वरः सामान्यरूपेण यथावत् सिद्धयते—चादयोऽनुदात्ताः [फिट्सूत्रम्], इत्यनेनेवानुदात्तः । समासे तु समासविधानेन सह पूर्वपद-प्रकृतिस्वरत्वमपि विधातव्यम् (द्र०—महा० २ । २ । १८—'इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृति-स्वरत्वं च') । अयं भाष्यकारः समासाभावपक्षमाश्रित्य इवपदमन्वये यथास्थानं निवेशयति ।

५. वै० य० मुद्रितेषु संस्करणेषु इतः पूर्वं 'यथा' इति पदं पठ्यते । तच्चास्थान इति कृत्वाऽग्रे यथास्थानं नीतम् ।

यथा [पुरुषार्थिभिः] वेदविद्यामप्यधीत्य सम्यग्विदित्वोपदेशेनोत्कृष्टैर्गुणैः सह मनुष्यवंश उद्यमवान् क्रियते, तथैव स्वैरपि भवितव्यम्। नेदं फलं परमेश्वरं विहायान्यपूजकः प्राप्तुमर्हति। कुतः? ईश्वरस्याज्ञाभावेन तत्सदृशस्यान्यवस्तुनो[1] ह्यविद्यमानत्वात्, तस्मात्तस्यैव गानमर्चनं च कर्त्तव्यमिति ॥ १ ॥

अब दशम सूक्त का आरम्भ किया जाता है। इस सूक्त के प्रथम मन्त्र में इस बात का प्रकाश किया है कि कौन-कौन पुरुष किस-किस प्रकार से इन्द्रसंज्ञक परमेश्वर का पूजन करते हैं—

**पदार्थान्वयभाषा**—हे ( शतक्रतो ) असंख्यात कर्म और उत्तम ज्ञानयुक्त परमेश्वर! [ (इव) ][2] जैसे (ब्रह्माणः) वेदों को पढ़कर उत्तम-उत्तम क्रिया करनेवाले मनुष्य श्रेष्ठ उपदेश गुण और अच्छी-अच्छी शिक्षाओं से ( वंशम् ) अपने वंश को ( उद्येमिरे ) प्रशस्त गुणयुक्त करके उद्यमवान् करते है, वैसे ही जो (गायत्रिणः) प्रशस्त=उत्तम अध्ययन किये हुये, सभी छन्दों के जाननेवाले धार्मिक और ईश्वर की उपासना करनेवाले पुरुष हैं, वे (त्वा) आपकी (गायन्ति) सामवेदादि के गानों से प्रशंसा करते हैं। तथा ( अर्किणः ) अर्क अर्थात् जो कि वेद के मन्त्र पढ़न के नित्य अभ्यासी हैं, वे ( अर्कम् ) सब मनुष्यों से पूजने योग्य ( त्वा ) आपका ( अर्चन्ति ) नित्य पूजन करते हैं॥ १ ॥

इस मन्त्र में उपमालङ्कार है।

**भावार्थ**—सब मनुष्यों को परमेश्वर ही की पूजा करनी चाहिये, अर्थात् उसकी आज्ञा में सदा वर्तमान रहना चाहिये। जैसे पुरुषार्थी वेदविद्या को पढ़कर अच्छे-अच्छे गुणों के साथ अपने और अन्यों के वंश को भी पुरुषार्थी करते हैं, वैसे ही अपने आपको भी होना चाहिये। जो परमेश्वर

---

१. अत्र 'विभाषागुणेऽस्त्रियाम्' (अ० २।३।२५) नियमेन हेतौ विहितायास्तृतीयायाः पञ्चम्याश्च सहैव प्रयोगः कृतः। ग्रन्थकारस्येदं शीलं यद् विकल्परूपेण विहितयोर्विभक्त्योरेकस्मिन्नेव वाक्ये प्रयोगं करोति। महाभाष्यकारस्त्वाह—एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भवति। तद्यथा गोषु स्वामी अश्वेषु चेति। न भवति गोषु चाश्वानां च स्वामीति। ( ३ । १ । ४० )। भाष्यकारेण स्वामिशब्दयोगे विहितयोः षष्ठीसप्तम्योः (अ०२।३।३९) सह प्रयोगः प्रतिषिद्धः। अनेनैव न्यायेनान्यविभक्त्योरपि सह प्रयोगो (यथा स्वामिदयानन्देन कृतः) न भवितुमर्हति। तथापि प्राचीने वैदिकवाङ्मये विकल्पेन विहितयोर्विभक्त्योरेकस्मिन्नेव वाक्ये सह प्रयोगो बहुधोपलभ्यते। तद्यथा—'अनस एव यजूंषि सन्ति न कोष्ठस्य न कुम्भ्यै' (श० १।१।२।७); 'धेन्वै वा एतद् रेतो यदाज्यम् अनुडुहस्तण्डुलाः' (तै० सं०२।२।९); 'इदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्तरिक्षात्……' ( तै० सं० १ । ६ । ६ )। न केवलं स्वतन्त्रपदयोरेव विविभक्त्योः प्रयोगोऽपि तु विशेष्यविशेषणयोरपि विविभक्त्योः प्रयोग उपलभ्यते। तद्यथा—'अथ यदनडुह्यै वहलाया ऐन्द्र दधि भवति' (श० ५।२।४।१३)। इत्थमेव पूर्वनिर्दिष्टे तैत्तिरीयोद्धरणे 'अस्यै दिवो ··' इत्यत्रापि द्रष्टव्यः। एतेन महाभाष्यकारोक्तो नियमो नैकान्तिकोऽपितु प्रायिक इति ज्ञेयम्। महाभाष्यकारोऽपि बहुत्र वैदिकान् प्रयोगान् प्रयोगविषये प्रमाणत्वेन निर्दिशति। यथा—विरूपाणामप्येकेनानेकस्याभिधानं भवति। तद्यथा—द्यावा ह क्षामा (ऋ० १०।१२।१); द्यावा चिदस्मै पृथिवी नमेते (ऋ० २।१२।२) इति' (महा० १।२।६४)।

२. संस्कृत अन्वय में आगे रखा गया 'इव' पद भाषार्थानुसार यहां रखा है।

के सिवाय दूसरे का पूजन करनेवाला पुरुष है, वह कभी उस उत्तम फल को प्राप्त होने योग्य नहीं हो सकता। क्योंकि न तो ईश्वर की ऐसी आज्ञा ही है, और न ईश्वर के समान कोई दूसरा पदार्थ है कि जिसका उसके स्थान में पूजन किया जावे। इससे सब मनुष्यों को उचित है कि परमेश्वर ही का गान और पूजन करें॥ १॥



**पुनः स कथं वेदितव्य इत्युपदिश्यते—**

यत् सानोः सानुमारुहद् भूर्य्यस्पष्ट कर्त्वम्।
तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति॥ २॥

यत्। सानोः। सानुम्। आ। अरुहत्। भूरि। अस्पष्ट। कर्त्वम्॥ तत्। इन्द्रः। अर्थम्। चेतति। यूथेन। वृष्णिः। एजति॥ २॥

**पदार्थः**—( यत् ) यस्मात् ( सानोः ) पर्वतस्य शिखरात्, संविभागात्, कर्मणः सिद्धेर्वा। दृसनिजनि०। उ० १। ३ अनेन सनेर्ञुण् प्रत्ययः। षोऽन्तकमणि' इत्यस्माद् बाहुलकान्नुः[1]। ( सानुम् ) यथोक्तं त्रिविधमर्थम्[2] ( आ ) धात्वर्थे ( अरुहत् ) रोहति। अत्र लडर्थे लङ्। विकरणव्यत्ययेन शपः स्थाने शः[3]। ( भूरि ) बहु। भूरीति बहुनामसु पठितम्। निघं ३। १। अदिसदिभू०[4]। उ० ४। ६५ अनेन भूधातोः क्रिन्[5] प्रत्ययः। (अस्पष्ट) स्पृशते। अत्र लडर्थे लङ्, बहुलं छन्दसि [अ० २। ४। ७३] इति शपो लुक्। ( कर्त्वम् ) कर्त्तुं योग्यं कार्य्यम्। अत्र करोतेस्त्वन् प्रत्ययः। (तत्) तस्मात् ( इन्द्रः ) सर्वज्ञ ईश्वरः (अर्थम्) अर्त्तुं ज्ञातुं प्राप्तुं [योग्यं] गुणं द्रव्यं वा। उषिकुषिगार्त्तिभ्यस्थन्[6]। उ० २। ४ अनेनार्त्तेस्थन्[6] प्रत्ययः। (चेतति) संज्ञापयति प्रकाशयति वा। अत्रान्तर्गतो ण्यर्थः। (यूथेन) सुखप्रापकपदार्थसमूहेन, अथवा वायुगणेन सह। तिथपृष्ठगूथयूथप्रोथा। उ० २। १२ अनेन यूथशब्दो निपातितः। (वृष्णिः) वर्षति सुखानि वर्षयति वा। सृवृषिभ्यां कित्। उ० ४। ४९ अनेन वृषधातोर्निः प्रत्ययः, स च कित्। (एजति) कम्पते॥ २॥

**अन्वयः**—[इव[7] यथा] यूथेन वायुगणेन सह वृष्णिः सूर्य्यकिरणसमूहः [यत्] सानोः सानु

१. अजिवृरीभ्यो निच्च (उ० ३।३८) इत्यनेन। नित्त्वादाद्युदात्तत्वम्।

२. 'सानोः' पदव्याख्यान उक्तम् इतिभावः।

३. कृमृदृरुहिभ्यश्छन्दसि (अ० ३।१।५९) इत्यङ् विकरण इति सुकरः पन्थाः। सायणस्तु 'शपि संज्ञापूर्वको विधिरनित्यः (सीरदेवीय परि० ७१) इति लघूपधगुणो न' इत्याह। सोऽपि विलष्टः पन्था।

४. ग्रन्थकृता स्वीयोणादिवृत्तौ 'अदिशदिभू' इत्येवं पाठान्तरेण व्याख्यातः।

५. वै० य० मुद्रितेषु संस्करणेषु 'क्तिन्' इत्यपपाठः।

६. वै० य० मुद्रितेषु संस्करणेषु '०गार्तिभ्यः स्थन्' इति, 'अर्तेः स्थन्' इति चापपाठौ।

७. 'इव' पदं पूर्वस्मान्मन्त्रादनुवर्तते इत्यग्रे वक्ष्यति भाष्यकारः। तस्मादत्रेमे पदे परिवर्धिते उपमालंकारद्योतनाय, तथाऽग्रे 'तथैव' पदमपि। भाषायामत्र 'जैसे' 'वैसे' पदे यथास्थानं पठ्यते।

भूर्यारुहद् [रोहति अस्पष्ट] स्पशते एजति चलति चालयति वा। [तथैव] यो मनुष्यो यत्सानोः सानुं कर्मणः [कर्त्वं] कर्मत्वं भूर्यारुहत्, अस्पष्टैजति, तस्मै इन्द्रः परमात्मा तत् तस्मात् सानोः सानुमर्थं भूरि चेतति ज्ञापयति ॥ २ ॥

इवशब्दानुवृत्त्याऽत्राप्युपमालङ्कारः।

**भावार्थः**—यथा सूर्यः सम्मुखस्थान् [पदार्थान्] वायुना सह पुनः पुनः क्रमेणात्यन्तमाक्रम्याकृष्य[1] प्रकाश्य [पृथिव्यादिलोकान्] भ्रामयति, तथैव यो मनुष्यो विद्यया कर्त्तव्यानि बहूनि कर्माणि निरन्तरं संपादयितुं प्रवर्त्तते, स एव साधनसमूहेन सर्वाणि कार्य्याणि साधितुं शक्नोति। अस्यामीश्वरसृष्टावेवंभूतो मनुष्यः सुखानि प्राप्नोति। ईश्वरोऽपि तमेवानुगृह्णाति, [2]नेतरमलसम् ॥ २ ॥

फिर ईश्वर को कैसे जानें, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—[3][(इव)] जैसे (यूथेन) वायुगण अथवा सुख के साधन हेतु पदार्थों क साथ (वृष्णिः) [सुखों की] वर्षा करनेवाला सूर्य्य, अपने किरण-समूह से [(यत्) जिस कारण] (सानोः) पर्वत के एक शिखर से (सानुम्) दूसरे शिखर को (भूरि) बहुधा (आरुहत्) प्राप्त होता (अस्पष्ट) स्पर्श करता, तथा (एजति) क्रम से अपनी कक्षा में घूमता और [अन्यों को] घुमाता है, वैसे ही जो मनुष्य क्रम से एक कर्म को सिद्ध करके दूसरे (कर्त्वम्) कर्म को (भूरि)[4] बहुधा (आरुहत्) आरम्भ करता हैं, (अस्पष्ट)[5] स्पर्श करता है, तथा (एजति) प्राप्त होता है, उस पुरुष के लिये (इन्द्रः) सर्वज्ञ ईश्वर उन कर्मों के करने को (सानोः) अनुक्रम से प्रयोजन के विभाग के साथ [(अर्थम्) प्राप्त करने योग्य गुण वा द्रव्य का] (भूरि) अच्छी प्रकार (चेतति) प्रकाश करता है ॥ २ ॥

इस मन्त्र में भी 'इव' शब्द की अनुवृत्ति से उपमालङ्कार समझना चाहिये।

**भावार्थ**—जैसे सूर्य्य अपने सम्मुख के पदार्थों को वायु के साथ वारंवार क्रम से अच्छी प्रकार आक्रमण आकर्षण और प्रकाश करके सब पृथिव्यादि लोकों को घुमाता है, वैसे ही जो मनुष्य विद्या से करने योग्य अनेक कर्मों को सिद्ध करने के लिये प्रवृत्त होता है, वही अनेक साधनों से सब कार्य्यों के सिद्ध करने को समर्थ हो सकता है। तथा ईश्वर की [इस] सृष्टि में अनेक सुखों को प्राप्त होता है, और उसी मनुष्य को ईश्वर भी अपनी कृपादृष्टि से देखता है, आलसी को नहीं ॥२॥



---

१. वै०य० मुद्रितेषु संस्करणेषु 'आकर्ष्य' इत्यपपाठः।
२. वै० य० मुद्रितेषु संस्करणेषु पाठोऽयं नोपलभ्यते, क. ख. हस्तलेखयोर्वर्तते, भाषार्थेऽप्युपलभ्यते।
३. अनुवर्तमानं पदम्।
४. यहां 'भूरि' आदि कुछ पद उपमेयार्थ की स्पष्टता के लिये पुनः पढ़े गये हैं।
५. स्पर्श करने का तात्पर्य कर्म को करना है।

अथेन्द्रशब्देनेश्वरसूर्य्यावुपदिश्येते—

युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥ ३ ॥

युक्ष्व । हि । केशिना । हरी इति । वृषणा । कक्ष्यऽप्रा ॥ अथ । नः । इन्द्र । सोमऽपाः । गिराम् । उपऽश्रुतिम् । चर ॥ ३ ॥

**पदार्थः**—(युक्ष्व) युङ्क्ष्व योजय [योजयति वा][1]। छान्दसो वर्णलोपो वा [महा० ८।२।२५] इति नलोपः, द्व्यचोऽतस्तिङः [अ० ६।३।१३४] इति दीर्घश्च। (हि) हेत्वपदेशे (केशिना) प्रकाशयुक्ते आकर्षणबले। अत्र सर्वत्र सुपां सुलुग्० [अ० ७।१।३९] इति द्विवचनस्याकारादेशः। (हरी) व्याप्तिहरणशीलावश्वौ (वृषणा) वृष्टिहेतू (कक्ष्यप्रा) कक्षासु भवाः कक्ष्याः सर्वपदार्थावयवास्तान्[2] प्रातः प्रपूरयतस्तौ (अथ) आनन्तर्ये। अत्र निपातस्य च [अ० ६।३।१३५] इति दीर्घः। (नः) अस्मानस्माकं वा (इन्द्र) [3]सर्वत्र सर्वतो [वा] व्यापिन्नीश्वर! प्रकाशमानः सूर्य्यलोको वा (सोमपाः) सोमानुत्तमान् पदार्थान् पाति रक्षति तत्संबुद्धौ, पदार्थानां रक्षणहेतुः सूर्य्यो वा (गिराम्) प्रवर्त्तमानानां वाचाम् (उपश्रुतिम्) उपयुक्तां श्रुतिं श्रवणम् (चर) प्राप्नुहि प्राप्नोति वा ॥ ३ ॥

**अन्वयः**—[4]हे सोमपा इन्द्र! यथा भवद्रचितस्य सूर्य्यलोकस्य [केशिना] केशिनौ वृषणा कक्ष्यप्रा हरी अश्वौ युङ्क्तः, तथैव त्वं नोऽस्मान् सर्वविद्याप्रकाशाय [युक्ष्व] युङ्क्ष्व। अथ हि नो गिरामुपश्रुतिं चर ॥ ३ ॥

---

१. सूर्यपरेऽर्थे 'योजयति वा' इत्यप्यावश्यकः पाठः, यथा चर-पद-व्याख्याने 'प्राप्नुहि प्राप्नोति वा' पाठः।

२. वै० य० मुद्रितेषु संस्करणेषु 'सर्वपदार्थावयवास्ताम्' इत्यपपाठः।

३. वै० य० मुद्रितेषु संस्करणेषु 'सर्वश्रोतोव्यापिन्नीश्वर' इत्यपपाठः। 'सर्वत्र' इत्यस्येश्वरपक्षे, 'सर्वतः' इत्यस्य च सूर्यपक्षे सम्बन्धः।

४. पदार्थे द्वित्राणि पदानि परित्यज्य सर्वाणि श्लेषेण ईश्वरपराणि सूर्यपराणि च व्याख्यायन्ते। तेनात्र श्लेषालङ्कारेण द्विविधोऽर्थोऽभिप्रेत इति व्यक्तं प्रतीयते। अन्वये यथा-तथा-पदयोः प्रयोगात् लुप्तोपमायाः साक्षात् निर्देशाच्च लुप्तोपमापि भाष्यकारस्याभिमतेति ज्ञायते। अन्वये द्वयोरेवार्धजरतीयन्यायेन समावेश उपलभ्यते। लुप्तोपमायाः परित्यागे श्लेषालंकारेण द्विविधोऽर्थ इत्थं नेतुं शक्यते—

**अध्यात्मम्**—हे सोमपा उत्तमोत्तमपदार्थानां पातः, इन्द्र सर्वत्रव्यापिन्नीश्वर! त्वं स्वनिर्मिते ब्रह्माण्डे हि यस्मात् कारणात् केशिना प्रकाशकौ सूर्यचन्द्रौ वृषणा वृष्टिहेतू कक्ष्यप्रा सर्वपदार्थावयवान् स्वप्रकाशेन पूरकौ हरी हरणाहरणशीलौ योजितवान् असि, तस्मात्त्वं नोऽस्मान् सर्वविद्याप्रकाशाय युक्ष्व युङ्क्ष्व। अथ अनन्तरं नो गिरामुपश्रुतिं सामीप्यतः चर प्राप्नुहि ॥

**अधिदैवम्**—सोमपा उत्पन्नानां पदार्थानां रक्षकः इन्द्र प्रकाशमानः सूर्यलोकः केशिना प्रकाशाकर्षणबलेन युक्तः वृषणा वृष्टिहेतुः कक्ष्यप्रा स्वस्वकक्षायां भ्रमणकर्तॄणां ग्रहादीनां प्रकाशादिना पूरको हरी हरणाहरणशीलः हि यस्मात् कारणाद् वर्तते, तस्मादेव स नोऽस्मान् सर्वपदार्थप्रज्ञापकेन प्रकाशेन युक्ष्व योजयति। अथ च नो गिरां स्तुतीनाम् उपश्रुतिमुपयुक्तं श्रवणं प्राप्नोति, अर्थात् अस्माकमुपयुक्तस्तुतेर्गुणवर्णनस्य भागी भवति ॥

अत्र लुप्तोपमालङ्कारः[1]।

**भावार्थः**—सर्वैर्मनुष्यैः सर्वविद्यापठनानन्तरं क्रियाकौशले प्रवर्त्तितव्यम्। यथास्मिन् जगति सूर्य्यस्य विशालः प्रकाशो वर्त्तते, तथैवेश्वरगुणानां विद्यायाश्च प्रकाशः सर्वत्रोपयोजनीयः॥ ३॥

अगले मन्त्र में इन्द्र शब्द से ईश्वर और सूर्य्यलोक का प्रकाश किया है—

**पदार्थान्वयभाषा**—[2]हे (सोमपाः) उत्तम पदार्थों के रक्षक, (इन्द्र) सब में व्याप्त होनेवाले ईश्वर! जैसे आपका रचा हुआ सूर्य्यलोक, अपने (केशिना) प्रकाशयुक्त बल और आकर्षण अर्थात् पदार्थों के खींचने का सामर्थ्य, (वृषणा) वर्षा के हेतु, और (कक्ष्यप्रा) अपनी-अपनी कक्षाओं में उत्पन्न हुए पदार्थों को पूरण करनेवाले, तथा (हरी) हरण और व्याप्ति स्वभाववाले गुणों को अपने-अपने कार्यों में जोड़ता है, वैसे ही आप (नः) हम लोगों को भी सब विद्या के प्रकाश के लिये उन विद्याओं में (युक्ष्व) युक्त कीजिये। (अथ) इसके अनन्तर आपकी स्तुति में प्रवृत्त जो हमारी (गिराम्) वाणी हैं, उनका (उपश्रुतिम्) श्रवण (चर) स्वीकार वा प्राप्त कीजिये॥ ३॥

इस मन्त्र में [3]लुप्तोपमालङ्कार है।

**भावार्थ**—सब मनुष्यों को सब विद्या पढ़ने के पीछे उत्तम क्रियाओं की कुशलता में प्रवृत्त होना चाहिये। जैसे सूर्य्य का उत्तम प्रकाश संसार में वर्तमान है, वैसे ही ईश्वर के गुण और विद्या के प्रकाश का सब में उपयोग करना चाहिये॥ ३॥



**मनुष्यैः परमेश्वरात् किं किं याचनीयमित्युपदिश्यते—**

**एहि स्तोमाँ अभि स्वराभि गृणीह्या रुव।**
**ब्रह्म च नो वसो सचेन्द्र यज्ञं च वर्धय॥ ४॥**

**आ। इहि। स्तोमान्। अभि। स्वर। अभि। गृणीहि। आ। रुव॥ ब्रह्म। च। नः। वसो इति। सचा। इन्द्र। यज्ञम्। च। वर्धय॥ ४॥**

**पदार्थः**—(आ इहि) आगच्छ (स्तोमान्) स्तुतिसमूहान् (अभि) धात्वर्थे (स्वर) जानीहि प्राप्नुहि। स्वरतीति गतिकर्मसु पठितम्। निघं० २। १४। (अभि) आभिमुख्ये। अभीत्याभिमुख्यं प्राह। निरु० १। ३। (गृणीहि) उपदिश (आ) समन्तात् (रुव) शब्दविद्यां प्रकाशय (ब्रह्म) वेदविद्याम् (च) समुच्चये (नः) अस्मान् अस्माकं वा (वसो)

१. अत्र विषये पूर्वपृष्ठस्था टिप्पणी ४ द्रष्टव्या।

२. यह भाषा-पदार्थ संस्कृत-पदार्थ में श्लेष से द्विधा व्याख्यात अर्थ और लुप्तोपमालंकार का संयुक्त रूप है। ईश्वर और सूर्यपरक दोनों स्वतन्त्र अर्थों का संस्कृत टिप्पणी में निर्देश कर दिया है।

३. संस्कृत-पदार्थ के अनुसार यहां श्लेषालंकार भी है।

वसन्ति सर्वाणि भूतानि यस्मिन् वा वसति सर्वेषु भूतेषु यः, तत्संबुद्धौ (सचा) ज्ञानेन सत्कर्मसु समवायेन वा (इन्द्र) स्तोतुमर्ह दातः (यज्ञम्) क्रियाकौशलम् (च) पुनरर्थे (वर्धय) उत्कृष्टं संपादय ॥ ४ ॥

**अन्वयः**—हे इन्द्र जगदीश्वर ! यथा कश्चित् सर्वविद्याऽभिज्ञो विद्वान् स्तोमानभिस्वरति यथावद्विज्ञानं गृणात्यारौति, तथैव नोऽस्मानेहि । हे वसो कृपयैवमेत्य नोऽस्माकं स्तोमान् वेदस्तुतिसमूहार्थान् सचाभिस्वर, ब्रह्म वेदार्थान् [च] अभिगृणीहि, यज्ञं च वर्धय ॥ ४ ॥

**अत्र लुप्तोपमालङ्कारः ।**

**भावार्थः**—ये सत्येन वेदविद्यायोगेन परमेश्वरं स्तुवन्ति प्रार्थयन्त्युपासते, तेभ्य ईश्वरोऽन्तर्यामितया मन्त्राणामर्थान् यथावत् प्रकाशयित्वा सततं सुखं प्रकाशयति । अतो नैव तेषु कदाचिद्विद्यापुरुषार्थौ ह्रसतः ॥ ४ ॥

मनुष्यों को परमेश्वर से क्या-क्या मांगना चाहिये, सो अगले मन्त्र में प्रकाश किया है—

**पदार्थान्वयभाषा**—हे (इन्द्र) स्तुति करने के योग्य परमेश्वर ! जैसे कोई सब विद्याओं से परिपूर्ण विद्वान् आपकी स्तुतियों के अर्थों को यथावत् स्वीकार करता-कराता वा गाता है, वैसे ही (नः) हम लोगों को [(एहि)] प्राप्त हूजिये । तथा हे (वसो) सब प्राणियों को वसाने वा उनमें वसनेवाले ! कृपा से इस प्रकार प्राप्त होके हम लोगों के (स्तोमान्) वेद-स्तुतियों के [समूह के] अर्थों को (सचा) विज्ञान और उत्तम कर्मों से संयुक्त करके (अभिस्वर) अच्छी प्रकार उपदेश कीजिये । (ब्रह्म च) और वेदार्थ को (अभिगृणीहि) प्रकाशित कीजिये । और (यज्ञं च) हमारे लिये शिल्पविद्यारूप क्रियाओं को (वर्धय) नित्य बढ़ाइये ॥ ४ ॥

इस मन्त्र में लुप्तोमालङ्कार है ।

**भावार्थ**—जो पुरुष सत्य वेदविद्या के संयोग से परमेश्वर की स्तुति प्रार्थना और उपासना करते हैं, उनके हृदय में ईश्वर अन्तर्यामी रूप से वेदमन्त्रों के अर्थों को यथावत् प्रकाश करके निरन्तर उनके लिये सुख का प्रकाश करता है । इससे उन पुरुषों में विद्या और पुरुषार्थ कभी नष्ट नहीं होते ॥ ४ ॥



पुनः स कीदृशोऽस्तीत्युपदिश्यते—

उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिष्षिधे ।
शक्रो यथा सुतेषु णो रारणत् सख्येषु च ॥ ५ ॥

उक्थम् । इन्द्राय । शंस्यम् । वर्धनम् । पुरुनिःऽसिधे ॥ शक्रः । यथा । सुतेषु । नः । रारणत्[1] । सख्येषु । च ॥ ५ ॥

१. पदपाठ-विषये पदार्थे 'रारणत्' पदस्य टिप्पणी द्रष्टव्या ।

**पदार्थः**—( उक्थं ) वक्तुं योग्यं स्तोत्रम्। अत्र पातृतुदि०। उ० २।७ अनेन 'वच' तोः थक्[1] प्रत्ययः। ( इन्द्राय ) सर्वमित्रायैश्वर्य्यमिच्छुकाय जीवाय ( शंस्यम् ) शंसितुं ग्यम् ( वर्धनम् ) विद्यादिगुणानां वर्धकम् ( पुरुनिष्षिधे ) पुरूणि बहूनि शास्त्राणि मङ्गलानि नितरां सेधतीति तस्मै ( शक्रः ) समर्थः शक्तिमान् ( यथा ) येन प्रकारेण ( सुतेषु ) त्पादितेषु स्वकीयसंतानेषु ( नः ) अस्माकम् ( [2]रारणत् ) अतिशयेनोपदिशति। यङ्-ङन्तस्य 'रण' धातोर्लेट्प्रयोगः[3]। ( सख्येषु ) सखीनां कर्मसु भावेषु, पुत्रस्त्रीभृत्यवर्गादिषु वा च ) समुच्चयार्थे॥ ५॥

**अन्वयः**—यथा कश्चिन्मनुष्यः सुतेषु सख्येषु चोपकारी वर्त्तते, तथैव शक्रः सर्वशक्तिमान् गदीश्वरः [नोऽस्माकमुपरि] कृपायमाणः सन् पुरुनिष्षिध इन्द्राय जीवाय वर्धनं शंस्यमुक्थं च रारणत् यथावदुपदिशति॥ ५॥

**अत्रोपमालङ्कारः।**

**भावार्थः**—अस्मिन् जगति या या शोभा प्रशंसा ये च धन्यवादास्ते सर्वे परमेश्वरमेव रकाशयन्ते। कुतः? यत्र यत्र निर्मितेषु पदार्थेषु प्रशंसिता रचना गुणाश्च भवन्ति, ते ते निर्मातारं प्रशंसन्ति। तथैवेश्वरस्यानन्ता प्रशंसा प्रार्थना च पदार्थप्राप्तये क्रियते। परन्तु यद्यदीश्वरात् गार्थ्यते, तत्तदत्यन्तस्वपुरुषार्थेनैव प्राप्तुमर्हति॥ ५॥

फिर ईश्वर किस प्रकार का है, इस विषय का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—(यथा) जैसे कोई मनुष्य अपने (सुतेषु) सन्तानों [च] और (सख्येषु) मित्रों के [उपकार] करने को प्रवृत्त होता है, वैसे ही (शक्रः) सर्वशक्तिमान् जगदीश्वर [(नः)] हमारे ऊपर कृपा करता हुआ (पुरुनिष्षिधे) पुष्कल शास्त्रों को पढ़ने-पढ़ाने और धर्मयुक्त कामों में विचरने-वाले, (इन्द्राय) सब के मित्र और ऐश्वर्य की इच्छा करनेवाले धार्मिक जीव के लिये, (वर्धनम्)

१. वै० य० मुद्रितेषु संस्करणेषु 'स्थक्' इत्यपपाठः।

२. पदकारास्तु 'ररणत्' इत्येवं पठन्ति। तेषामयमभिप्रायः—अत्र छान्दसत्वात् 'नुगतोऽनुनासिकान्तस्य' (अ० ७।४।८५) इति नुगभावे यथाप्राप्तं 'दीर्घोऽकितः' (अ० ७।४।८३) इति दीर्घत्वमपि न भवति, नुक्प्राप्त्या तस्यावकाशस्यापह्नुतत्वात्। तदभावेऽत्र ममहानः=मामहानः इतिवत् 'तुजादीनां दीर्घोऽभ्यासस्य' (अ० ६।१।७) इत्यनेनाभ्यासस्य छान्दसं दीर्घत्वम्। पदकाले च छान्दसं दीर्घत्वं यत्र पदकारा मन्यन्ते तं ह्रसयित्वा निदर्शयन्ति। व्याख्याकाराश्च 'रारणत्' इत्येव पदच्छेदं मन्यन्ते। तेषां मते छान्दसत्वान्नुगभावे प्राकृतमेव दीर्घत्वं भवति, 'अकितः' इत्यस्य पर्युदासत्वात्।

३. यङ्लुगन्ताद् 'रारण्' धातोर्लेटि तिपि रूपम्। 'चर्करीतं च' (धातुपाठ २।७३) इत्यदादिगणस्थ-सूत्रेणादादिवत्त्वे शपो लुकि प्राप्ते छान्दसत्वात् तदभावः। 'लेटोऽडाटौ' (अ० ३।४।९४) इति सूत्रेणाडागमः। 'रारण्' इत्यस्य यङ्लुगन्तत्वाद् धातुसंज्ञा। 'धातोः' (अ० ६।१।१५९) इत्यनेनान्तोदात्तत्वम्। 'अभ्यस्तानामादिः' (६।१।१८९) इति-तु न प्रवर्तते शपा व्यवधानात्। शप्तिपोः पित्वादनुदात्तत्वे धातुस्वरेण द्वितीयोदात्तः। 'यावद्यथाभ्याम्' (अ० ८।१।३६) इत्यनेन यथायोगे निघातत्वं न प्रवर्तते।

विद्या आदि गुणों के बढ़ानेवाले ( शंस्यम् ) प्रशंसा ( च ) और ( उक्थम् ) उपदेश करने योग्य वेदोक्त स्तोत्रों के अर्थों का ( रारणत् ) अच्छी प्रकार उपदेश करता है ।। ५ ।।

इस मन्त्र में उपमालङ्कार है।

**भावार्थ**—इस संसार में जो-जो शोभायुक्त रचना प्रशंसा और धन्यवाद हैं, वे सब परमेश्वर ही की अनन्त शक्ति का प्रकाश करते हैं। क्योंकि जैसे सिद्ध किये हुए पदार्थों में प्रशंसायुक्त रचना के अनेक गुण उन पदार्थों के रचनेवाले की ही प्रशंसा के हेतु [होते] हैं, वैसे ही परमेश्वर की अनन्त प्रशंसा वा प्रार्थना पदार्थों की प्राप्ति के लिये की जाती है। इस कारण जो-जो पदार्थ हम ईश्वर से प्रार्थना के साथ चाहते है, सो-सो हमारे अत्यन्त पुरुषार्थ के द्वारा ही प्राप्त होने योग्य हैं, केवल प्रार्थनामात्र से नहीं ।। ५ ।।



**कथं कथं स प्रार्थनीय इत्युपदिश्यते—**

तमित् सखित्व ईमहे तं राये तं सुवीर्ये ।
स शक्र उत नः शकदिन्द्रो वसु दयमानः ।। ६ ।।

तम् । इत् । सखिऽत्वे । ईमहे । तम् । राये । तम् । सुऽवीर्ये ॥ सः । शक्रः । उत । नः । शकत् । इन्द्रः । वसु । दयमानः ॥ ६ ॥

**पदार्थः**—( तम् ) परमेश्वरम् (इत्) एव (सखित्वे) सखीनां सुखायानुकूलं वर्त्तमानानां कर्मणां भावस्तस्मिन् ( ईमहे ) याचामहे। ईमह इति याच्ञाकर्मसु पठितम्। निघं० ३ । १९ । ( तम् ) परमैश्वर्य्यवन्तम् ( राये ) विद्यासुवर्णादिधनाय ( तम् ) अनन्तबलपराक्रमवन्तम् ( सुवीर्य्ये ) शोभनैर्गुणैर्युक्तं वीर्य्यं पराक्रमो यस्मिंस्तस्मिन् ( सः ) पूर्वोक्तः ( शक्रः ) दातुं समर्थः ( उत ) अपि ( नः ) अस्मभ्यम् ( शकत् ) शक्नोति। अत्र लडर्थे लुङडभावश्च। ( इन्द्रः ) दुःखानां विदारयिता ( वसु ) सुखेषु वसन्ति येन तद्धनं, विद्याऽऽरोग्यादि सुवर्णादि वा। वस्विति धननामसु पठितम्। निघं० २ । १० । (दयमानः ) [1]दातुं विद्यादिगुणान् प्रकाशितुं, सततं रक्षितुं, दुःखानि दोषान् शत्रूंश्च सर्वथा विनाशितुं, धार्मिकान् स्वभक्तानादातुं समर्थः। दय दानगतिरक्षणहिंसादानेषु इत्यस्य रूपम् ।। ६ ।।

**अन्वयः**—यो नो दयमानः शक्रः इन्द्रः परमात्मा[स्ति, स] वसु दातुं [शकत्] शक्नोति। तमिदेव वयं सखित्वे तं राये [उत] तं सुवीर्य्ये ईमहे ।। ६ ।।

**भावार्थः**—सर्वैर्मनुष्यैः सर्वशुभगुणप्राप्तये परमेश्वरो याचनीयो नेतरः। कुतः ? तस्याद्वितीयस्य सर्वमित्रस्य परमैश्वर्य्यवतोऽनन्तशक्तिमत एवैतद्दातुं सामर्थ्यवत्त्वात् ।। ६ ।।

**इत्येकोनविंशो वर्गः समाप्तः ।।**

---

१. 'दय' धातो र्येऽर्थास्ते क्रमशोऽत्र विनियन्ते।

किस-किस पदार्थ की प्राप्ति के लिये ईश्वर की प्रार्थना करनी चाहिये, सो अगले मन्त्र में
श किया है—

**पदार्थान्वयभाषा**—जो ( नः ) हमारे लिये (दयमानः) सुखपूर्वक रमण करने योग्य विद्या
रोग्य और सुवर्णादि धन का देनेवाला, विद्यादि गुणों का प्रकाशक, निरन्तर रक्षक, दुःख
वा शत्रुओं के विनाश, और अपने धार्मिक सज्जन भक्तों के ग्रहण करनेवाला, ( शक्रः )
न्त सामर्थ्ययुक्त, ( इन्द्रः ) दुःखों का विनाश करनेवाला जगदीश्वर है, [(सः)] वही (वसु)
द्या और चक्रवर्ती राज्यादि परम धन देने को (शकत्) समर्थ है। (तमित्) उसी को हम लोग
ादि शास्त्र, सब विद्वान्, प्रत्यक्षादि प्रमाण और अपने भी निश्चय से ( सखित्वे ) मित्रों के
ायानुकूल कर्मों के निमित्त, (तम्) उसी को (राये) पूर्वोक्त विद्यादि धन के अर्थ, (उत) और
तम् ) उसी को ( सुवीर्य्ये ) श्रेष्ठ गुणों से युक्त उत्तम पराक्रम की प्राप्ति के लिये (ईमहे)
चते हैं [अर्थात् उसी की प्रार्थना करते हैं ] ॥ ६ ॥

**भावार्थ**—सब मनुष्यों को उचित है कि सब सुख और शुभ गुणों की प्राप्ति के लिये
मेश्वर ही की प्रार्थना करें, [और की नहीं। ] क्योंकि वह अद्वितीय सर्वमित्र परमैश्वर्यवाला
नन्त शक्तिमान् ही उक्त पदार्थों के देने में सामर्थ्यवाला है ॥ ६ ॥

यह उन्नीसवां वर्ग समाप्त हुआ ॥



अथेन्द्रशब्देनेश्वरसूर्य्यलोकावुपदिश्येते—

सुऽविवृतं सुनिरजमिन्द्र त्वादातमिद्यशः ।
गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ॥ ७ ॥

सुऽविवृतम् । सुनिःऽअजम् । इन्द्र । त्वाऽदातम् । इत् । यशः ॥ गवाम् । अप । व्रजम् । वृधि ।
ृणुष्व । राधः । अद्रिऽवः ॥ ७ ॥

**पदार्थः**—( सुविवृतम् ) सुष्ठु विकाशितम् ( सुनिरजम् ) सुखेन नितरां क्षेप्तुं योग्यम्
( इन्द्र ) महायशः, सर्वविभागकारकेश्वर ! सर्वविभक्तरूपदर्शकः सूर्य्यलोको वा ( त्वादातम् )
्वया शोधितं, तेन सूर्य्येण वा ( इत् ) एव ( यशः ) परमकीर्त्तिसाधकं, जलं वा । यश इत्युदक-
नामसु पठितम् । निघं० १।१२ । (गवाम्) स्वस्वविषयप्रकाशकानां मन-आदीन्द्रियाणां किरणानां
पशूनां वा । गौरिति पदनामसु पठितम् । निघं० ४ । १ । इतीन्द्रियाणां पशूनां च ग्रहणम् । गाव
इति रश्मिनामसु पठितम् । निघं० १ । ५ । (अप) धात्वर्थे । ( व्रजम् ) समूहं ज्ञानं वा (वृधि)
वृणु वृणोति वा । अत्र पक्षान्तरे सूर्य्यस्य प्रत्यक्षत्वात् प्रथमार्थे मध्यमः । श्रुशृणुपृकृवृभ्यश्छन्दसि ।
अ० ६ । ४ । १०२ अनेन हेर्धिः । ( कृणुष्व ) कुरु करोति वा[1] । अत्र [ पक्षे ] लडर्थे लोड्

1. वै० य० मुद्रितेषु संस्करणेषु 'करोति कुर्य्याद्वा' इत्यपपाठः । पक्षे लडर्थे लोटो विधानात्, अन्वये च
'कुरु' पदस्य निर्देशात् ।

व्यत्ययेनात्मनेपदं च । ( राधः ) राध्नुवन्ति सुखानि येन तद्विद्यासुवर्णादिधनम् । राध इति धननामसु पठितम् । निघं० २ । १० । ( अद्रिवः ) अद्रिर्मेघः प्रशंसा धनं भूयान् वा विद्यते यस्मिन्, तत्संबुद्धावीश्वर ! मेघवान् सूर्य्यो वा । अद्रिरिति मेघनामसु पठितम् । निघं० १ । १० । अत्र भून्यर्थे मतुप् ॥ ७ ॥

**अन्वयः**—यथाऽयमद्रिवो मेघवान् [इन्द्र] सूर्य्यलोकः [इदेव] सुनिरजं त्वादातं तेन शोधितं यशो जलं सुविवृतं सुष्ठु विकाशितं राधो धनं च कृणुष्व करोति, स एव[1] गवां किरणानां व्रजं समूहं चापवृध्युद्घाटयति, तथैव हे[2] अद्रिव इन्द्र जगदीश्वर ! त्वं सुविवृतं सुनिरजं त्वादातं यशो राधो धनं च कृणुष्व कृपया कुरु । तथा हे अद्रिवो मेघादिरचकत्वात् प्रशंसनीय ! त्वं गवां व्रजमपवृधि ज्ञानद्वारमुद्घाटय ॥ ७ ॥

अत्र [3][श्लेष] लुप्तोपमालङ्कारौ ।

**भावार्थः**—हे परमेश्वर ! यथा भवता सूर्य्यादिजगदुत्पाद्य स्वकीर्त्तिः सर्वप्राणिभ्यः सुखं च प्रसिद्धी कृतं, तथैव भवत्कृपया वयमपि मन-आदीनीन्द्रियाणि शुद्धानि विद्याधर्मप्रकाशयुक्तानि सुखेन संसाध्य स्वकीर्त्तिं विद्याधनं चक्रवर्त्तिराज्यं च सततं प्रकाश्य सर्वान् मनुष्यान् सुखिनः कीर्त्तिमतश्च कारयेमेति ॥ ७ ॥

अगले मन्त्र में इन्द्र शब्द से ईश्वर और सूर्य्यलोक का प्रकाश किया है—

**पदार्थान्वयभाषा**—जैसे यह ( अद्रिवः ) मेघयुक्त ( इन्द्र ) सूर्यलोक [(इत्) ही] ( सुनिरजम् ) सुख से प्राप्त होने योग्य, ( त्वादातम् ) उसी से शुद्ध किये ( यशः ) जल को, और ( सुविवृतम् ) अच्छे प्रकार विस्तार को प्राप्त, ( राधः ) धन को प्रकाशित ( कृणुष्व ) करता है, [और वही] ( गवाम् ) किरणों के ( व्रजम् ) समूह को संसार में प्रकाश होने के लिये ( अपवृधि ) फैलाता है, वैसे ही हे ( अद्रिवः[4] ) प्रशंसा करने योग्य ( इन्द्र ) महायशस्वी, सब पदार्थों के यथायोग्य बांटनेवाले परमेश्वर ! आप (सुविवृतम्) देश-देशान्तर में प्रसिद्ध, और ( सुनिरजम् ) सुख से किये जानेवाले व्यवहारों में यथायोग्य प्रतीत होने के योग्य, ( त्वादातम् ) आपके ज्ञान से शुद्ध किये हुए ( यशः ) कीर्ति को बढ़ानेवाले, ( राधः ) जिससे कि अनेक

१. 'स एव' पदे ग. कोशे उपलभ्येते ।

२. श्लेषालंकारेणेश्वरपरार्थद्योतनाय मन्त्रपदानां पुनः पाठः । ग.कोशे तु द्वावन्वयौ पार्थक्येन (=लुप्तोपमया विना) पौर्वापरव्यत्यासेन पठितौ । तथाहि—

'हे अद्रिव इन्द्र जगदीश्वर ! त्वं·········ज्ञानद्वारमुद्घाटय । इत्येकः ॥'

'तथाऽयमद्रिवो मेघवान्[इन्द्र]सूर्यलोकः······चापवृध्युद्घाटयति । इति द्वितीयः ॥'

एवमन्वयपार्थक्ये लुप्तोपमालङ्कारो नान्वेति । सम्भाव्यतेऽयमलङ्कारः पश्चात् प्रवर्धितः स्यात्, तदनुरोधेन च यथामुद्रितमन्वयो विहितः स्यात् । ग.कोशस्थे भाषार्थे 'लुप्तोपमालंकारस्य' निर्देशो नास्ति । तेनाप्युक्तसंभवना दृढीभवति ।

३. अयं कोष्ठान्तर्गतः पाठो वै० य० मुद्रिते चतुर्थसंस्करणे परिवर्धितः । भाषार्थे सर्वसंस्करणेषूपलभ्यते ।

४. मन्त्र के इन पदों का पुनः निर्देश श्लेष और लुप्तोपमालङ्कार को स्पष्ट करने के लिए किया है ।

सुख सिद्ध हों ऐसे अत्युत्तम विद्या सुवर्णादि धन को हमारे लिये ( कृणुष्व ) कृपा कर प्राप्त कराइये। तथा हे मेघादि की रचना से प्रशंसनीय! आप ( गवाम् ) अपने-अपने विषयों को प्राप्त होनेवाली मन आदि इन्द्रियों के ज्ञान, और उत्तम-उत्तम सुख देनेवाले पशुओं के (व्रजम्) समूह को (अपवृधि) प्राप्त कराके उनके ज्ञान और सुख के दरवाजे को खोल दीजिये ॥ ७ ॥

इस मन्त्र में श्लेष और लुप्तोपमालङ्कार है।

**भावार्थ**—हे परमेश्वर! जैसे आपने सूर्य्यादि जगत् को उत्पन्न करके अपना यश, और सब प्राणियों के लिये सब सुख प्रसिद्ध किया है, वैसे ही आपकी कृपा से हम लोग भी अपने मन आदि इन्द्रियों को शुद्धि के साथ विद्या और धर्म के प्रकाश से युक्त सुखपूर्वक सिद्ध करके अपनी कीर्ति विद्या धन और चक्रवर्ति राज्य का प्रकाश करके सब मनुष्यों को निरन्तर आनन्दित और कीर्तिमान् करें ॥ ७ ॥



**पुनरीश्वर उपदिश्यते—**

नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः।
जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ॥ ८ ॥

नहि। त्वा। रोदसी इति। उभे इति। ऋघायमाणम्। इन्वतः॥ जेषः। स्वःऽवतीः। अपः। सम्। गाः। अस्मभ्यम्। धूनुहि ॥ ८ ॥

**पदार्थः**—( नहि ) निषेधार्थे ( त्वा ) **सर्वत्र व्याप्तिमन्तं जगदीश्वरम्** ( रोदसी ) **द्यावापृथिव्यौ**। रोदसी इति द्यावापृथिव्योर्नामसु पठितम्। निघं० ३। ३०। ( **उभे** ) **द्वे** ( **ऋघायमाणम्**[1] ) **परिचरितुमर्हम्**। ऋध्यते[2] पूज्यते इति ऋघः। **बाहुलकात् कः**,[3] **तत आचारे क्यङ्**। ऋध्नोतीति[4] परिचरणकर्मसु पठितम्। निघं० ३। ५। ( **इन्वतः** ) **व्याप्नुतः**। इन्वतीति व्याप्तिकर्मसु पठितम्। निघं० २। १८। ( **जेषः** ) **विजयं प्राप्नोषि**। 'जि जिये' **इत्यस्माल्लेटि**

१. 'ऋघाय' धातोर्निष्पन्ना बहवो शब्दा ऋग्वेदे श्रूयन्ते। तेषां व्याख्याने व्याख्यातारो विप्रवदन्ते। अयं भाष्यकारोऽपि तानि पदानि बहुधा निर्वक्ति। तद्यथाप्रकरणं तत्र तत्र द्रष्टव्यम्।

२. वै० य० मुद्रितेषु संस्करणेषु 'ऋघ्यते' इत्यपपाठः। 'ऋघायमाणः' (ऋ० १। १७६। १) पदव्याख्याने स्पष्टमाह ग्रन्थकृत्—'अत्र ऋधु धातोः कः प्रत्ययो वर्णव्यत्ययेन घः। तत 'उपमानादाचारे' क्यङ्, इत्युक्तम्। अत्र 'कर्तुः क्यङ् सलोपश्च' (अ० ३। १। ११) इत्यनेन उपमानवाचिनः प्रातिपदिकात् आचारे क्यङ् द्रष्टव्यः।

३. अत्र 'कृतो बहुलम्' (अ० ३। ३। ११३) इत्येन वार्तिकेन कः प्रत्ययो द्रष्टव्यः। शिष्टं पूर्वटिप्पण्यां यथा ग्रन्थकर्तुः (ऋ० १। १७६। १) व्याख्यानमुद्धृतं तथा द्रष्टव्यम्।

४. वै० य० मुद्रितेषु १-३ संस्करणेषु 'ऋघ्नोतीति' अपपाठः। निघण्टौ ( २। १८ ) ऋध्नोतेनिर्देशात्।

मध्यमैकवचने प्रयोगः। ( स्ववंतीः ) स्वः सुखं विद्यते यासु ताः ( अपः ) कर्माणि कर्त्तुम्। अप इति कर्मनामसु पठितम्। निघं० २। १। ( सम् ) सम्यगर्थे क्रियायोगे ( गाः ) इन्द्रियाणि (अस्मभ्यम्) (धूनुहि) प्रेरय ॥ ८ ॥

**अन्वयः**—हे परमेश्वर! इमे उभे रोदसी यमृघायमाणं [त्वा] त्वां नहीन्वतः, स त्वमस्मभ्यं स्ववंतीरपो जेषो गाश्च संधूनुहि ॥ ८ ॥

**भावार्थः**—यदा कश्चित् पृच्छेदीश्वरः कियानस्तीति, तत्रैवमुत्तरम्—येन सर्वमाकाशादिकं व्याप्तं, नैव तमनन्तं कश्चिदप्यर्थो व्याप्तुमर्हति। अतोऽयमेव सर्वैर्मनुष्यैः सेवनीयः, उत्तमानि कर्माणि कर्त्तुं वस्तूनि च प्राप्तुं प्रार्थनीयः। यस्य गुणाः कर्माणि चेयत्तारहितानि सन्ति, तस्यान्तं ग्रहीतुं कः समर्थो भवेत्? ॥ ८ ॥

फिर अगले मन्त्र में ईश्वर का प्रकाश किया है—

**पदार्थान्वयभाषा**—हे परमेश्वर! ये ( उभे ) दोनों ( रोदसी ) सूर्य्य और पृथिवी जिस ( ऋघायमाणम् ) पूजा करने योग्य [(त्वा)] आपको ( नहि ) नहीं ( इन्वतः ) व्याप्त हो सकते हैं, सो आप [(अस्मभ्यम्)] हम लोगों के लिये ( स्ववंतीः ) जिनसे हमको अत्यन्त सुख मिले ऐसे ( अपः ) कर्मों को ( जेषः ) विजयपूर्वक प्राप्त करने के लिये, हमारे ( गाः ) इन्द्रियों को ( संधूनुहि ) अच्छी प्रकार पूर्वोक्त कार्य्यों में संयुक्त कीजिये ॥ ८ ॥

**भावार्थ**—जब कोई पूछे कि ईश्वर कितना बड़ा है, तो उत्तर यह है कि—जिसको सब आकाश आदि बड़े-बड़े पदार्थ भी घेर में नहीं ला सकते, क्योंकि वह अनन्त है। इससे सब मनुष्यों को उचित है कि उसी परमात्मा का सेवन, उत्तम-उत्तम कर्म करने, और श्रेष्ठ पदार्थों की प्राप्ति के लिये उसी की प्रार्थना करते रहें। जिसके गुण और कर्मों की गणना कोई नहीं कर सकता, तो कोई उसके अन्त पाने को समर्थ कैसे हो सकता है? ॥ ८ ॥



पुनः स एवोपदिश्यते—

आश्रुत्कर्ण श्रुधी हवं नू चिद् दधिष्व मे गिरः।
इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥ ९ ॥

आश्रुत्ऽकर्ण। श्रुधि। हवम्। नु। चित्। दधिष्व। मे। गिरः॥ इन्द्र। स्तोमम्। इमम्। मम। कृष्व। युजः। चित्। अन्तरम् ॥ ९ ॥

**पदार्थः**—(आश्रुत्कर्ण) [समन्तात्] श्रुतौ विज्ञानमयौ श्रवणहेतू कर्णौ यस्य, तत्संबुद्धौ। अत्र संपदादित्वात्[1] करणे क्विप्। ( श्रुधि ) शृणु। अत्र बहुलं छन्दसि [अ० २। ४। ७३]

१. 'सम्पादिभ्यः क्विप् (अ० ३। ३। ९४ वा०) इति वार्त्तिकेन।

इति श्नोर्लुक्[1]। श्रुश्रृणुपृकृवृभ्य० [अ० ६।४।१०२] इति हेर्धिरादेशः। ( हवम् ) 'आदातव्यं सत्यं वचनम्। ( नु ) क्षिप्रार्थे। नु इति क्षिप्रनामसु पठितम्। निघं० २।१५। ऋचि तुनुघ० [अ० ६।३।१३२] इति दीर्घः। ( चित् ) पूजार्थे। चिदिदं ब्रूयादिति पूजायाम्। निरु० १।४। ( दधिष्व ) धारय। 'दध धारणे' इत्यस्माल्लोट्, छन्दस्युभयथा [अ० ३।४।११७] इत्यार्द्धधातुकाश्रयेणेडागमः[3]। ( मे ) मम स्तोतुः ( गिरः ) वाणीः ( इन्द्र ) सर्वान्तर्यामिन् सर्वतः श्रोतः! ( स्तोमम् ) स्तूयते येनासौ स्तोमः, तं स्तुतिसमूहं ( इमम् ) प्रत्यक्षम् ( मम ) स्तोतुः ( कृष्व ) कुरु। 'कृञ्' इत्यस्माल्लोटि विकरणाभावः[4]। ( युजः ) यो युनक्ति स युक् सखा, तस्य सख्युः। 'युजिर् योगे' इत्यस्माद् ऋत्विग्दधृग्० [अ० ३।२।५६] इति क्विन्। (चित्) इव। चिदित्युपमार्थे। निरु० १।४। (अन्तरम्) अन्तःशोधनमाभ्यन्तरं वा॥ ६॥

अन्वयः—हे आश्रुत्कर्ण इन्द्र जगदीश्वर! चिद् यथा प्रियः सखा युजः प्रियस्य सख्युर्गिरः प्रेम्णा शृणोति, तथैव त्वं नु मे गिरो हवं [चित्]श्रुधि। ममेमं स्तोममन्तरं दधिष्व, युजो मामन्तःकरणं शुद्धं कृष्व कुरु॥ ६॥

अत्रोपमालङ्कारः।

भावार्थः—मनुष्यैरीश्वरस्य सर्वज्ञत्वेन जीवेन प्रयुक्तस्य वाग्व्यवहारस्य यथावत् श्रोतृत्वेन सर्वाधारत्वेनान्तर्यामितया जीवान्तःकरणयोर्यथावच्छोधकत्वेन सर्वस्य [5]मित्रत्वाच्चायमेवैकः सर्वैव ज्ञातव्यः प्रार्थनीयश्चेति॥ ६॥

फिर उसी परमेश्वर का निरूपण अगले मन्त्र में किया है—

पदार्थान्वयभाषा—(आश्रुत्कर्ण) हे निरन्तर श्रवणशक्तिरूप कर्णवाले (इन्द्र) सर्वान्तर्यामी परमेश्वर! ( चित् ) जैसे प्रीति बढ़ानेवाला मित्र, अपने ( युजः ) सत्यविद्या और उत्तम-उत्तम गुणों में युक्त होनेवाले मित्र की ( गिरः ) वाणियों को प्रीति के साथ सुनता है, वैसे ही आप ( नु ) शीघ्र ही ( मे ) मेरी ( गिरः ) स्तुति, तथा ( हवम् ) ग्रहण करने योग्य सब वचनों को [( चित् ) आदरपूर्वक] ( श्रुधि ) सुनिये। तथा ( मम ) मेरी ( स्तोमम् ) स्तुतियों के समूह को ( अन्तरम् ) अपने ज्ञान के बीच ( दधिष्व ) धारण करके, पूर्वोक्त कामों में उक्त प्रकार से युक्त हुए हम लोगों के [अन्तःकरण अर्थात्] भीतर की शुद्धि को (कृष्व) कीजिये॥ ६॥

इस मन्त्र में उपमालङ्कार है।

भावार्थ—मनुष्यों को उचित है कि जो सर्वज्ञ जीवों के किये हुए वाणी के व्यवहारों का

---

१. शपो लुकि तदादेशस्य श्नोरभाव इत्यर्थः।

२. 'हु दानादनयोः, आदाने चेत्येके' इत्यस्माद् 'ऋदोरप्' (अ० ३।३।५७) इत्यप्। 'ह्वेञ् स्पर्धायां शब्दे च' इत्यस्मादित्येके। तथा सति 'बहुलं छन्दसि' (अ० ६।१।३४) इत्यनेन सम्प्रसारणे पूर्ववद् अप् प्रत्ययो द्रष्टव्यः।

३. शपोऽभावश्चेति शेषः।

४. शपो लुकि (अ० २।४।७३) तदादेशस्य 'उ' विकरणस्याप्यभाव इतिभावः।

५. समानवाक्ये विविभक्तिप्रयोगविषये पूर्वत्र ५७१ तमे पृष्ठे १ टिप्पणी द्रष्टव्या।

यथावत् श्रवण करनेहारा सर्वाधार अन्तर्यामी, जीव और अन्तःकरण का यथावत् शुद्धिहेतु, तथा सबका मित्र ईश्वर है, वही एक जानने वा प्रार्थना करने योग्य है ॥ ९ ॥



मनुष्याः पुनस्तं कथंभूतं जानीयुरित्युपदिश्यते —

विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् ।
वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् ॥ १० ॥

विद्म । हि । त्वा । वृषन्ऽतमम् । वाजेषु । हवनऽश्रुतम् ॥ वृषन्ऽतमस्य । हूमहे । ऊतिम् । सहस्रऽसातमाम् ॥ १० ॥

पदार्थः—( विद्म ) विजानीमः । द्व्यचोऽतस्तिङः [अ० ६।३।१३४] इति दीर्घः । (हि) एवार्थे ( त्वा ) त्वाम् ( वृषन्तमम् ) सर्वानभीष्टान् कामान् वर्षतीति वृषा, सोऽतिशयितस्तम् । कनिन् युवृषि० । उ० १ । १५६ अनेन 'वृष' धातोः कनिन् प्रत्ययः । अयस्मयादीनि छन्दसि । अ० १ । ४ । २० इत्यनेन भसंज्ञया नलोपाभावः[1] । उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते [महा० अ० १ । ४ । २० ] इति पदसंज्ञाश्रयणाट्टिलोपाभावः । ( वाजेषु ) संग्रामेषु । वाजे इति संग्रामनामसु पठितम् । निघं० २ । १७ । (हवनश्रुतम्) हवनमाह्वानं शृणोतीति तम् ( वृषन्तमस्य ) अतिशयेनोत्तमानां कामानामभिवर्षयितुस्तव ( हूमहे ) स्पर्धयामहे । अत्र 'ह्वेञ्' इत्यस्माल्लटि बहुलं छन्दसि [अ० २ । ४ । ७३] इति शपो लुक् । बहुलं छन्दसि । अ० ६ । १ [३३] इति संप्रसारणम्, संप्रसारणाच्च [अ० ६ । १ । १०४] इति पूर्वरूपं च । हलः । अ० ६ । ४ । २ इति दीर्घत्वम् । ( ऊतिम् ) रक्षां प्राप्तिमवगमं च ( सहस्रसातमाम् ) सहस्राणि बहूनि धनानि सुखानि वा सनोति यया साऽतिशयिता ताम् । अत्र सहस्रोपपदात् 'षणु दाने' इत्यस्माद्धातोः

१. 'न लोपः प्रातिपदिकान्तस्य' (अ० ८ । २ । ७) इत्यनेन पदाश्रयो यो नकारस्य लोपः प्राप्नोति, स भसंज्ञाविधानान्न भवतीति भावः । भसंज्ञायां सत्याम् 'अल्लोपोऽनः' ( अ० ६ । ४ । १४४ ) इत्यनेन योऽनोऽकारस्य लोपः प्राप्नोति, स पदसंज्ञाश्रयेण वार्यते । यथा 'ऋक्वता गणेन' (ऋ० ४ । ५० । ५) 'ऋच् वत् टा' इत्यत्र पदत्वात् कुत्वं भवति, भत्वाज्जश्त्वं न भवति (द्र०—महा० १ । ४ । २०), तथैवात्र संज्ञाद्वयनिमित्तं कार्यं द्रष्टव्यम् । सत्यप्येवं 'नाद् घस्य' (अ० ८ । २ । १७) इत्यनेन नुडागमस्य प्राप्तिः, साऽपि भसंज्ञाश्रयणाद् वारणीया । इदं चात्रावधेयम्—भपदसंज्ञयोरुभयोरिहाश्रयणं यथाश्रुतपदपाठानुरोधेन । महाभाष्यकारस्तु नकारलोपे नुटि च कृते योऽवग्रहे भेदो जायते, तदर्थं 'न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम्' इत्युक्त्वा 'वृषऽन्तमम्' इत्येवमवग्रहं स्वीचकार । यद्वा—भाष्यकारीयं वचनं 'व्याकरणान्तरलक्षणैरन्यथा पदविभागेऽवग्रहनिर्देशोऽपि न दोषावहः' इत्यस्य ज्ञापनार्थं व्याख्येयम् । अन्यथा 'ऊदुपधाया गोहः' ... 'ऊदनोर्देशे' (अ० ६ । ३ । ९७) इत्यनेन 'अनु अप' इत्यत्र 'ऊदादेशेनापि रूपं सिध्यति । तेन पाणिनेरूदादेशविधानमपि 'अनुऽऊप' इत्येवमवग्रहसामञ्जस्यायेति महाभाष्यकार इहावोचत् । लुप्तशाखापपाठं कंचिदाश्रित्यैतत् स्यात् पतञ्जलिनेत्यनुमीयते, यतो ह्युपलब्धानां शाखानां पदपाठे नायमवगृह्यते ।

[नसन० [ अ० ३ । २ । ६७ ] इत्यनेन विट्। विड्वनोरनुनासिकस्यात् [ अ० ६ । ४ । ४१ ] इति नकारस्याकारादेशः। कृतो बहुलम् [अ० ३।३।११३ वा०] इति करणे च ॥ १० ॥

**अन्वयः**—हे इन्द्र ! वयं वाजेषु हवनश्रुतं वृषन्तमं [त्वा] त्वां विद्म। हि यतो वृषन्तमस्य तव सहस्रसातमामूतिं हूमहे ॥ १० ॥

**भावार्थः**—मनुष्याः सर्वकामसिद्धिप्रदं शत्रूणां युद्धेषु विजयहेतुं परमेश्वरमेव जानीयुः। येनास्मिन् जगति सर्वप्राणिसुखायासंख्याताः पदार्था उत्पाद्य रक्ष्यन्ते, तं तदाज्ञां चाश्रित्य सर्वथा प्रयत्नेन स्वस्य सर्वेषां च सुखं संसाध्यम् ॥ १० ॥

फिर मनुष्य लोग परमेश्वर को कैसा जानें, इस विषय का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे परमेश्वर ! हम लोग (वाजेषु) संग्रामों में ( हवनश्रुतम् ) प्रार्थना को सुननेवाले, और ( वृषन्तमम् ) सब अभीष्ट कामों को अच्छी प्रकार देने और जाननेवाले ( त्वा ) आपको ( विद्म ) जानते हैं। ( हि ) जिस कारण हम लोग ( वृषन्तमस्य ) अतिशय करके श्रेष्ठ कामों को मेघ के समान वर्षानेवाले आपकी ( सहस्रसातमाम् ) अच्छी प्रकार अनेक धनों वा सुखों की देनेवाली, जो (ऊतिम्) रक्षा प्राप्ति और विज्ञान हैं, उनको (हूमहे) अधिक से अधिक मानते हैं ॥ १० ॥

**भावार्थ**—मनुष्य सब कर्मों की सिद्धि देनेवाले, और युद्ध में शत्रुओं पर विजय के हेतु परमेश्वर को ही जानें, जिसने इस संसार में सब प्राणियों के सुख के लिये असंख्यात पदार्थ उत्पन्न वा रक्षित किये हैं। तथा उस परमेश्वर वा उसकी आज्ञा का आश्रय करके सर्वथा प्रयत्न के साथ अपना वा सब मनुष्यों का सब प्रकार से सुख सिद्ध करना चाहिये ॥ १० ॥



**पुनः स कीदृशः, किं करोतीत्युपदिश्यते—**

आ तू न इन्द्र कौशिक मन्दसानः सुतं पिब।
नव्यमायुः प्र सू तिर कृधी सहस्रसामृषिम् ॥ ११ ॥

आ। तु। नः। इन्द्र। कौशिक। मन्दसानः। सुतम्। पिब ॥ नव्यम्। आयुः। प्र। सु। तिर। कृधि। सहस्रऽसाम्। ऋषिम् ॥ ११ ॥

**पदार्थः**—( आ ) समन्तात् ( तु ) पुनरर्थे। अत्र ऋचि तुनुघमक्षु० [अ० ६ । ३ । १३२] इति दीर्घः। ( नः ) अस्माकम् ( इन्द्र ) सर्वानन्दस्वरूपेश्वर ! ( कौशिक ) सर्वासां विद्यानामुपदेशे प्रकाशे च भवः तत्संबुद्धौ, अर्थानां साधूपदेष्टर्वा। क्रोशतेः शब्दकर्मणः क्रंशतेर्वा स्यात् प्रकाशयतिकर्मणः, साधु विक्रोशयिताऽर्थानामिति वा[1]। निरु० २ । २५ अनेन कौशिकशब्द उक्तार्थो गृह्यते।

१. वै० यं० मुद्रितेषु संस्करणेषु 'इतोऽग्रे 'नद्यः प्रत्युचुः' इत्यधिकः पाठः, स च नेह सम्बध्यते।

( मन्दसानः ) स्तुतः सर्वस्य ज्ञाता सन् । ऋञ्जिवृधिमन्दि० । उ० २ । ८७ अनेन मन्देरसानच् प्रत्ययः । ( सुतम् ) प्रयत्नेनोत्पादितं प्रियशब्दं स्तवनं वा (पिब) श्रवणशक्त्या गृहाण (नव्यम्) नवीनम् । नवसूरमर्तयविष्ठेभ्यो यत् । अ० ५ । ४ । ३६ अनेन वार्त्तिकेन नवशब्दात् स्वार्थे यत् । नव्यमिति नवनामसु पठितम् । निघं० ३ । २८ । (आयुः) जीवनम् ( प्र ) प्रकृष्टार्थे क्रियायोगे ( सु ) शोभार्थे क्रियायोगे । अत्र निपातस्य च [अ० ६ । ३ । १३५] इति दीर्घः । ( तिर ) सन्तारय । तरतेर्विकरणव्यत्ययेन शः । ऋत इद्धातोः [अ० ७ । १ । १००] इतीकारः । (कृधि) कुरु । अत्र श्रुशृणुपृकृवृभ्यश्छन्दसि [अ० ६ ४।१०२] इति हेर्धिः[1] विकरणाभावः । (सहस्रसाम्) सहस्रं बह्वीर्विद्याः सनोति तम् ( ऋषिम् ) वेदमन्त्रार्थद्रष्टारं, जितेन्द्रियतया शुभगुणानां सदैवोपदेष्टारं, सकलविद्याप्रत्यक्षकारिणम् ॥ ११ ॥

अन्वयः—हे कौशिकेन्द्रेश्वर ! मन्दसानः सँस्त्वं नः सुतमापिब, तु पुनः कृपया नो नव्यमायुः [2]प्रसुतिर । तथा नोऽस्माकं मध्ये सहस्रसामृषिं कृधि सम्पादय ॥ ११ ॥

भावार्थः—ये मनुष्याः प्रेम्णा विद्योपदेष्टारं जीवेभ्यः सत्यविद्याप्रकाशकं सर्वज्ञं शुद्धमीश्वरं स्तुत्वा [3]आश्रयन्ति, ते सुखपूर्णं विद्यायुक्तमायुः प्राप्यर्षयो भूत्वा पुनः सर्वान् विद्यायुक्तान् मनुष्यान् विदुषः प्रीत्या सम्पादयन्ति ॥ ११ ॥

फिर वह परमेश्वर कैसा है, और मनुष्यों के लिये क्या करता है, इस विषय को अगले मन्त्र में प्रकाश किया है—

पदार्थान्वयभाषा—हे ( कौशिक ) सब विद्याओं के उपदेशक और उनके अर्थों के निरन्तर प्रकाश करनेवाले ( इन्द्र ) सर्वानन्दस्वरूप परमेश्वर ! आप ( मन्दसानः ) उत्तम-उत्तम स्तुतियों को प्राप्त हुए, और सब को यथायोग्य जानते हुए ( नः ) हम लोगों के ( सुतम् ) यत्न से उत्पन्न किये हुए[4] प्रिय शब्दों से की हुई स्तुतियों को ( आ ) अच्छी प्रकार ( पिब ) ग्रहण करिये[5] । ( तु ) और कृपा करके हमारे लिये ( नव्यम् ) नवीन (आयुः) निरन्तर जीवन को ([2]प्रसुतिर) दीजिये । तथा हम लोगों में ( सहस्रसाम् ) अनेक विद्याओं के प्रकट करनेवाले ( ऋषिम् ) [वेद मन्त्रों के अर्थों के द्रष्टा, जितेन्द्रिय होकर सब शुभ गुणों के उपदेष्टा, और सम्पूर्ण विद्याओं के प्रत्यक्षकर्त्ता] पुरुष को ( कृधि ) उत्पन्न कीजिये ॥ ११ ॥

भावार्थ—जो मनुष्य प्रेम से विद्या का उपदेश करनेवाले, जीवों के लिये सब विद्याओं के प्रकाशक, सर्वज्ञ शुद्ध परमेश्वर का स्तुति के साथ आश्रय करते हैं, वे सुखपूर्ण और

१. वै० य० मुद्रितेषु संस्करणेषु 'हेर्धिविकरणभावः' इत्यपपाठः । उक्तसूत्रेण 'कृ'धातोः परस्य हेर्धिभावविधानं तदैव संभवति, यदा विकरणाभावः स्यात् । अत एवेहानेन सूत्रेण विकरणाभावोऽप्युक्तः । यद्वा— अ० २।४।७३ सूत्रेण शपो लुकि 'उ' विकरणस्याभावो बोध्यः ।

२. वै० य० मुद्रितेषु संस्करणेषु 'प्रसूतिर' इत्यपपाठः । नहि छान्दसं दीर्घत्वमन्वये निदर्श्यते ।

३. वै० य० मुद्रितेषु संस्करणेषु 'श्रावयन्ति' इत्यसम्बद्धोऽपपाठः । भाषार्थे 'आश्रय करते हैं' इत्येव पठ्यते । ४. वै० य० मुद्रित संस्करणों में 'सोमादि रस वा' ऐसा अप्राकरणिक अधिक निर्देश किया है ।

५. वै० य० मुद्रित संस्करणों में '(पिब) पान कराइये' पाठ संस्कृत-पदार्थ के विपरीत है ।

द्यायुक्त आयु को प्राप्त करके, ऋषि-भाव को प्राप्त होकर सब विद्या चाहनेवाले मनुष्यों को के साथ उत्तम-उत्तम विद्या से विद्वान् करते हैं ॥ ११ ॥



इमाः सर्वाः स्तुतय ईश्वरमेव स्तुवन्तीत्युपदिश्यते—

परि॑ त्वा गिर्वणो॒ गिर॑ इ॒मा भ॑वन्तु वि॒श्वतः॑ ।
वृ॒द्धायु॒मनु॒ वृद्ध॑यो॒ जुष्टा॑ भवन्तु॒ जुष्ट॑यः ॥ १२ ॥

परि॑ । त्वा॒ । गि॒र्व॒णः॒ । गिरः॑ । इ॒माः । भ॒व॒न्तु॒ । वि॒श्वतः॑ ॥ वृ॒द्धऽआ॑युम् । अनु॑ । वृ॒द्ध॑यः । जुष्टाः॑ । भ॒व॒न्तु॒ । जुष्ट॑यः ॥ १२ ॥

**पदार्थः**—( परि ) परितः । परीति सर्वतोभावं प्राह । निरु० १ । ३ । ( त्वा ) त्वां वेंस्तुतिभाजनमिन्द्रमीश्वरम् ( गिर्वणः ) गीर्भिर्वेदानां विदुषां च वाणीभिर्वन्यते संसेव्यते तत्सम्बुद्धौ ( गिरः ) स्तुतयः ( इमाः ) 'वेदस्थाः प्रत्यक्षा विद्वत्प्रयुक्ताः ( भवन्तु ) विश्वतः ) विश्वस्य मध्ये ( वृद्धायुम् ) आत्मनो वृद्धमिच्छतीति[2] तम् ( अनु ) क्रियार्थे वृद्धयः ) वर्ध्यन्ते यास्ताः ( जुष्टाः ) याः प्रीणन्ति सेवन्ते ताः ( भवन्तु ) ( जुष्टयः ) ष्यन्ते यास्ताः ॥ १२ ॥

**अन्वयः**—हे गिर्वण इन्द्र ! विश्वतो या इमा गिरः सन्ति, ताः परि सर्वतस् [त्वा] त्वां वन्तु । तथा चेमा वृद्धयो जुष्टयो जुष्टा वृद्धायुं त्वामनुभवन्तु ॥ १२ ॥

**भावार्थः**—हे भगवन् ! या योत्कृष्टा प्रशंसा सा सा तवैवावस्ति । या या सुखानन्दवृद्धिश्च सा त्वामेव संसेवते । [अतो] य एवमीश्वरस्य गुणान् तत्सृष्टिगुणांश्चानुभवन्ति, त एव सदा विद्यावृद्धा भूत्वा विश्वस्मिन् पूज्या जायन्ते ॥ १२ ॥

अत्र सायणाचार्य्येण 'परिभवन्तु सर्वतः प्राप्नुवन्तु' इत्यशुद्धमुक्तम् । कुतः ? 'परौ भुवोऽवज्ञाने' [अ० ३ । ३ । ५५] इति परिपूर्वकस्य 'भू' धातोस्तिरस्कारार्थे निपातितत्वात्[3] ॥

---

१. भाषा पदार्थानुसारं त्वत्र 'वेदस्थाः प्रत्यक्षाः, विद्वत्प्रयुक्ताश्च' इत्येवमत्रार्थो ज्ञेयः ।

२. पदकारास्तु वृद्ध आयुर्यस्येति बहुव्रीहिसमासमाश्रित्यावगृह्णन्ति । आयुरुकारान्तः 'छन्दसीणः' (उ० । २) इत्युण्प्रत्ययान्तः । क्यजन्तेऽपि 'क्याच्छन्दसि' (अ० ३ । २ । १७०) इत्यादिना उप्रत्यये रूपं ध्यति, तथापि स्वरश्छान्दसः कल्पनीयो भवति । सूक्तार्थसंगतौ 'दीर्घायुषो भूत्वा' इत्यनेन बहुव्रीह्यर्थोऽपि ष्यक्ताऽस्य प्रदर्शितः ।

३. यद्यपि वैयाकरणनिकाये निपातितनिपातनशब्दौ विशिष्टेऽर्थे प्रयुज्येते, तथाऽप्यत्रायं निपातितशब्दः योगमात्रेऽर्थे प्रयुक्तः । अर्थात् तिरस्कारेऽर्थे प्रयुक्तत्वात । वस्तुतस्तु परिपूर्वाद् भवतेरवज्ञानेऽर्थे विभाषा विधान एवास्य सूत्रस्य तात्पर्यम् । तेन 'अवज्ञान इति किम् ? सर्वतो भवनं परिभवः' इति प्रत्युदाहरणं गच्छते । इदमप्यत्रावधेयम्—ग्रन्थकारेण मन्त्रार्थव्याख्याने 'परिभवन्तु' इत्यस्य 'सर्वतो भवन्तु' इत्येवार्थो

इदं सूक्तमार्य्यावर्त्तनिवासिभिः सायणाचार्य्यादिभिस्तथा यूरोपाख्यदेशनिवासिभिर्विलसनाख्यादिभिश्चान्यथैव व्याख्यातम् ।

अत्र ये क्रमेण विद्यादिशुभगुणान् गृहीत्वेश्वरं च प्रार्थयित्वा सम्यक् पुरुषार्थमाश्रित्य धन्यवादैः परमेश्वरं प्रशंसन्ति, त एवाविद्यादिदुष्टगुणान्निवार्य्य शत्रून् विजित्य दीर्घायुषो विद्वांसो भूत्वा सर्वेभ्यः सुखसम्पादनेन सदानन्दयन्त इत्यस्य दशमस्य सूक्तार्थस्य नवमसूक्तार्थेन सह सङ्गतिरस्तीति बोध्यम् ॥ १२ ॥

इति दशमं सूक्तं विंशो वर्गश्च समाप्तः ॥

उक्त सब स्तुति ईश्वर ही के गुणों का कीर्त्तन करती हैं, इस विषय का प्रकाश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे ( गिर्वणः ) वेदों तथा विद्वानों की वाणियों से स्तुति को प्राप्त होने योग्य परमेश्वर ! ( विश्वतः ) इस संसार में जो ( इमाः ) वेदोक्त वा विद्वान् पुरुषों की कही हुई प्रत्यक्ष (गिरः) स्तुतियां हैं, वे (परि)सब प्रकार से सब की स्तुतियों से सेवन करने योग्य जो आप हैं, उनको ( भवन्तु ) प्रकाश करनेहारी हों। और इसी प्रकार ( वृद्धयः ) वृद्धि को प्राप्त होने योग्य, ( जुष्टाः ) प्रीति की देनेवाली स्तुतियां, ( जुष्टयः ) जिनका सेवन किया जाता है, वे ( वृद्धायुम् ) जो कि निरन्तर सब कार्य्यों में अपनी उन्नति को आप ही बढ़ानेवाले उन आप का ( अनुभवन्तु ) अनुभव करें ॥ १२ ॥

**भावार्थ**—हे भगवन् परमेश्वर ! जो-जो अत्युत्तम प्रशंसा है, सो-सो आपकी ही है। तथा जो-जो सुख और आनन्द की वृद्धि होती है, सो-सो आप ही को सेवन करके विशेष वृद्धि को प्राप्त होती है। इस कारण जो मनुष्य ईश्वर तथा सृष्टि के गुणों का अनुभव करते हैं, वे ही प्रसन्न, और विद्या की वृद्धि को प्राप्त होकर संसार में पूज्य होते हैं ॥ १२ ॥

इस मन्त्र में **सायणाचार्य्य** ने 'परिभवन्तु' इस पद का अर्थ यह किया है कि—'सब जगह से प्राप्त हों'। यह व्याकरण आदि शास्त्रों से अशुद्ध है। क्योंकि '**परौ भुवोऽवज्ञाने**' [अ० ३।३।५५] व्याकरण के इस सूत्र से परिपूर्वक 'भू' धातु का अर्थ तिरस्कार अर्थात् अपमान करना होता है।[1] आर्य्यावर्त्तवासी **सायणाचार्य्य** आदि तथा यूरोपखण्ड देशवासी [ **विलसन** आदि ] साहबों ने इस दशवें सूक्त के अर्थ का अनर्थ किया है ॥

जो लोग क्रम से विद्या आदि शुभ गुणों को ग्रहण और ईश्वर की प्रार्थना करके अपने उत्तम पुरुषार्थ का आश्रय लेकर परमेश्वर की प्रशंसा और धन्यवाद करते हैं, वे ही अविद्या आदि दुष्ट गुणों की निवृत्ति से शत्रुओं को जीतकर, तथा अधिक अवस्थावाले और विद्वान् होकर सब

---

निर्दिष्टः। तेन प्रतीयते 'सायणाचार्येण······निपातितत्वात्' इत्ययं पाठः कुलेखकैरस्थाने परिवर्धितः। अथवा भूतपूर्वार्थेन सम्बद्धः पाठोऽर्थपरिवर्तने नापमृष्टः स्यात्।

१. यह लेख अप्रासङ्गिक सा है। यहां यह कैसे उपलब्ध होता है, इस विषय में संस्कृत-टिप्पणी में विचार किया है।

नुष्यों को सुख उत्पन्न करके सदा आनन्द में रहते हैं। इस अर्थ से इस दशम सूक्त की सङ्गति
नम सूक्त के साथ जाननी चाहिये ॥ १२ ॥

यह दशम सूक्त और बीसवां वर्ग पूरा हुआ ॥



अथास्याष्टार्चस्यैकादशसूक्तस्य जेता माधुच्छन्दस ऋषिः । इन्द्रो देवता ।
अनुष्टुप् छन्दः[1] । गान्धारः स्वरः ॥

**अथेन्द्रशब्देनेश्वरविजेतारावुपदिश्येते—**

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ १ ॥

इन्द्रम् । विश्वाः । अवीवृधन् । समुद्रऽव्यचसम् । गिरः ॥ रथिऽतमम् । रथीनाम् । वाजानाम् । सत्ऽपतिम् । पतिम् ॥ १ ॥

**पदार्थः—( इन्द्रम् ) विजयप्रदमीश्वरम्, शत्रूणां विजेतारं शूरं वा ( विश्वाः ) सर्वाः ( अवीवृधन् ) अत्यन्तं वर्धयन्तु । अत्र लोडर्थे लुङ् । ( समुद्रव्यचसम् ) समुद्रेऽन्तरिक्षे व्यचा याप्तिर्यस्य तं सर्वव्यापिनमीश्वरम्, समुद्रे नौकादिविजयगुणसाधनव्यापिनं शूरवीरं वा (गिरः) स्तुतयः ( रथीतमम् ) बहवो रथा रमणाधिकरणाः पृथिवीसूर्य्यादयो लोका विद्यन्ते यस्मिन् स रथीश्वरः सोऽतिशयितस्तम्[2], रथाः प्रशस्ता रमणविजयहेतवो विमानादयो विद्यन्ते यस्य सोऽतिशयितः शूरस्तम् । रथिन ईद् वक्तव्यः । अ० ८ । २ । १७ इति वार्त्तिकेन [3]ईकारादेशः ।**

१. सामान्येनेति शेषः । अवान्तरभेदास्त्वित्थं ज्ञेयाः—१,३,८ निचृदनुष्टुप्; ४, ६ अनुष्टुप्; ७ विराडनुष्टुप् । ५ पादचतुष्टयेनानुष्टुप, अक्षरसंख्यया तु भुरिगुष्णिक् । उष्णिक्पक्षे ऋषभः स्वरः ॥

इदमत्रावधेयम्—प्रक्रियाभेदेन छन्दोविज्ञाने छन्दोभेदः संजायत इति वैदिकानां राद्धान्तः । यथा—(१) विद्वांसो विदुरः (ऋ० १ । १२० । २) ऋक्पादैरुष्णिक्, अक्षरगणनया च भुरिग्गायत्री इत्युच्यते । द्र०—कात्यायनीया सर्वानुक्रमणी, तट्टीका ( पृष्ठ ६१, ६२ ); ऋक्प्रातिशाख्यं ( अ० १६ । २० ) च । (२) नदं व ओदतीनाम् (ऋ० ८ । ६९ । २), मंसीमहि त्वा (ऋ० १० । २६ । ४) ऋचोर्विषये शौनक आह—पादैरनुष्टुभौ विद्याद् अक्षरैरुष्णिहाविमे (ऋक्प्राति० १६।३२) इति । छन्दोनिर्देशे कैः कैः कारणैश्छन्दोभेद उपपद्यते इत्यस्मिन् विषयेऽस्माभिः स्वीयवैदिकछन्दोमीमांसायाः सप्तदशेऽध्याये विस्तरेण वर्णितम् ।

२. नह्येकस्मिन्नीश्वरेऽतिशायिकस्तमप् सम्भवति । तेनाऽत्र स्वार्थे तमब्द्रष्टव्यः । यद्वा—यः स्वगुणैः सर्वान् अतिशेते स इत्यर्थो ग्राह्यः ।

३. पदकारास्तु 'रथिऽतमम्' इत्येवमवग्रहं प्रदर्शयन्तो मत्वर्थीयेनिप्रत्ययान्तस्य रथिनश्छान्दसं दीर्घत्वं मन्यते । अतएव पदपाठे तस्य ह्रस्वत्वं प्रदर्शयन्ति । यथा तु 'रथिन ईद् वक्तव्यः' (अ० ८ । २ । १७) इति वार्तिकं तथा 'रथीऽतमम्' इत्येवमवग्रहेण भवितव्यम् । विशेषस्त्वत्र (ऋ० १ । १० । १०) मन्त्रे 'वृषन्तमम्' पदस्य टिप्पण्यां (पृष्ठ ५८४, टि० १) द्रष्टव्यः ।

( रथीनाम् ) नित्ययुक्ता रथा[1] विद्यन्ते येषां योद्धॄणां तेषाम्। अन्येषामपि दृश्यते। अ० ६। ३। १३६ अनेन दीर्घः[2]। ( वाजानाम् ) वजन्ति प्राप्नुवन्ति जयपराजयौ येषु युद्धेषु तेषाम्। ( सत्पतिम् ) यः सतां नाशरहितानां प्रकृत्यादिकारणद्रव्याणां पतिः स्वामी तमीश्वरम्, यः सतां सद्व्यवहाराणां सत्पुरुषाणां वा पतिः पालकस्तं न्यायाधीशं राजानम् ( पतिम् ) यः पाति रक्षति चराचरं जगत् तमीश्वरम्, यः पाति रक्षति सज्जनांस्तम् ॥ १ ॥

**अन्वयः**—अस्माकमिमा विश्वा गिरो यं समुद्रव्यचसं रथीनां रथीतमं वाजानां सत्पतिं पतिमिन्द्रं परमात्मानं वीरपुरुषं वाऽवीवृधन्[3] नित्यं वर्द्धयन्ति, तं सर्वे मनुष्या वर्द्धयन्तु ॥ १ ॥

**अत्र श्लेषालङ्कारः।**

**भावार्थः**—सर्वा वेदवाण्यः परमैश्वर्यवन्तं सर्वगतं सर्वत्र रममाणं सत्यस्वभावं धार्मिकाणां विजयप्रदं परमेश्वरं प्रकाशयन्ति। धर्मेण बलेन दुष्टमनुष्याणां विजेतारं धार्मिकाणां पालकं वा इतीश्वरो वेदवचसा सर्वान् विज्ञापयति ॥ १ ॥

अब ग्यारहवें सूक्त का आरम्भ किया जाता है। तथा पहले मन्त्र में इन्द्र शब्द से ईश्वर वा विजय करनेवाले पुरुष का उपदेश किया है—

**पदार्थान्वयभाषा**—[4] हमारी ये ( विश्वाः ) सब ( गिरः ) स्तुतियां, जो ( समुद्रव्यचसम् ) आकाश में अपनी व्यापकता से परिपूर्ण, ( रथीनाम् ) रमण के साधन वालों में (रथीतमम्) अत्यन्त रमण के साधन पृथिवी सूर्यादि लोक जिसके हैं, ( वाजानाम् ) विकाररूप को प्राप्त लोक-लोकान्तरों तथा ( सत्पतिम् ) विनाशरहित प्रकृति आदि द्रव्यों का पालन करनेवाला, ( पतिम् ) चराचर जगत् का स्वामी, ( इन्द्रम् ) विजय का देनेवाला परमेश्वर है, उसके गुणानुवादों को (अवीवृधन्) नित्य बढ़ाती रहें। इत्येकः ॥

हमारी ये (विश्वाः) सब (गिरः) स्तुतियां, (समुद्रव्यचसम्) जिस नौका आदि पूर्ण सामग्री से शत्रुओं को जीतनेवाले, (रथीनाम्) बड़े-बड़े युद्धों में विजय प्राप्त करनेवालों में (रथीतमम्) जिसके युद्ध के साधन बड़े-बड़े रथ विमानादि हैं, ( वाजानाम् ) अच्छी प्रकार जिनमें जय और पराजय को प्राप्त होते हैं उन युद्धों में ( सत्पतिम् ) सत्पुरुषों की रक्षा करनेहारे, ( पतिम् ) प्रजा

१. ईश्वरार्थे रथाः पृथिवीसूर्यादयो लोका ज्ञेयाः, आदरार्थे च बहुवचनम्।

२. सायणोऽपीत्थमेवाह। वस्तुतस्तु 'छन्दसीवनिपौ च वक्तव्यौ' (अ० ५। २। १०९) वार्तिकेन मत्वर्थे 'ई' प्रत्ययोऽत्र द्रष्टव्यः। ईप्रत्यये च रथीतमे 'रथिन ईद् वक्तव्यः' (अ० ८। २। १७) इत्यस्याप्यावश्यकता न भवति। पदकारास्तु 'रथीनाम्' इत्यत्र ह्रस्वाभावमप्रदर्शयन्त ईप्रत्ययमेवानुमन्यन्त इति प्रतीयते। तथा सति 'रथिन्तमम्' इत्यत्र कस्माद्ध्रस्वयन्ति इति न ज्ञायते।

३. पदार्थे 'वर्धयन्तु' इत्येवं व्याख्यातः। तथा सत्यत्र 'अवीवृधन्' पदमन्वयान्ते 'वर्धयन्तु' पदात् पूर्वं पठनीयम्। यद्वा—पदार्थे लडर्थोऽप्युपसंख्येयः।

४. वै० य० मुद्रित संस्करणों में भाषा-पदार्थ भी दोनों अर्थों का इकट्ठा मिलता है। हम सुगमता के लिये दोनों अर्थों का भाषा-पदार्थ पृथक्-पृथक् छाप रहे हैं।

स्वामी, वा सज्जनों की रक्षा करनेवाले, और (इन्द्रम्) शत्रुओं को जीतनेवाले धर्मात्मा मनुष्य । ( अवीवृधन् ) गुणानुवादों से नित्य बढ़ाती है, उस [ धर्मात्मा विजयी पुरुष ] को सब मनुष्य ढ़ावें । इति द्वितीयः ॥१॥

इस मन्त्र में श्लेषालङ्कार है।

भावार्थ—सब वेदवाणी परमैश्वर्य्ययुक्त, सब में रहने, सब जगह रमण करने, सत्य भाव, तथा धर्मात्मा सज्जनों को विजय देनेवाले परमेश्वर, और धर्म वा बल से दुष्ट मनुष्यों को तने, तथा धर्मात्मा वा सज्जन पुरुषों की रक्षा करनेवाले मनुष्य का प्रकाश करती हैं। इस प्रकार रमेश्वर वेदवाणी से सब मनुष्यों को आज्ञा देता है ॥ १ ॥



पुनस्तावेवोपदिश्येते—

सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।
त्वामभि प्र णोनुमो जेतारमपराजितम् ॥ २ ॥

सख्ये । ते । इन्द्र । वाजिनः । मा । भेम । शवसः । पते ॥ त्वाम् । अभि । प्र । नोनुमः । जेतारम् । पराऽजितम् ॥२॥

पदार्थः—( सख्ये ) मित्रभावे कृते ( ते ) तवेश्वरस्य न्यायशीलस्य सभाध्यक्षस्य वा इन्द्र ) सर्वस्वामिन्नीश्वर ! सभाध्यक्ष राजन् ! वा ( वाजिनः ) वाजः परमोत्कृष्टविद्यालाभ्यामात्मनो देहस्य प्रशस्तो बलसमूहो येषामस्ति ते ( मा ) निषेधार्थे, क्रियायोगे ( भेम ) भीयाम भयं करवाम । अत्र लोडर्थे लुङ् । बहुलं छन्दसीति[1] च्लेर्लुक् । छन्दस्युभयथा [अ० ३ । । ११७] इति लुङ[2] आर्धधातुकसंज्ञामाश्रित्य मसो ङित्त्वाभावाद् गुणश्च । ( शवसः ) अनन्तलस्य, अमितबलस्य वा । शव इति बलनामसु पठितम् । निघं० २ । ९ । ( पते ) सर्वस्वामन्नीश्वर! सभाध्यक्ष राजन् वा! ( त्वाम् ) जगदीश्वरं, सभाध्यक्षं वा (अभि) आभिमुख्यार्थे प्र) प्रकृष्टार्थे (नोनुमः) अतिशयेन स्तुमः । अयं 'णु स्तुतौ' इत्यस्य युङ्लुकि प्रयोगः । उपसर्गादमासेऽपि णोपदेशस्य । अ० ८ । ४ । १४ इति णकारदेशश्च । (जेतारम्) शत्रून् जापयति[3] जयति तम् (अपराजितम्) यो न केनापि पराजेतुं शक्यते तम् ॥ २ ॥

अन्वयः—हे शवसस्पते जगदीश्वर ! सेनाध्यक्ष वा ! अभिजेतारमपराजितं त्वां वाजिनो

---

१. नायं सूत्रस्य कस्यचिन्निर्देशः, अपि तु छान्दसकार्यस्य बाहुलकत्वबोधको निर्देशः । अस्यायं भावः—मन्त्रे घसह्वरणश०' (अ० २ । ४ । ८०) सूत्रे येभ्यो धातुभ्यश्च्लेर्लुगुक्तस्ततोऽन्येभ्योऽपि छन्दसि सर्वकार्याणां ाहुलविधानाज्ज्ञेयः । २. लुङादेशानां तिबादीनामिति भावः ।

३. जापयतीत्यनेनेश्वरपक्षे अन्तर्णीतण्यर्थाज्जयतेस्तृन् इत्यभिप्रायो ज्ञाप्यते । जापयतेस्तु तृनि जेतृशब्दो ोपपते ।

**विजानन्तो वयं प्रणोनुमः पुनःपुनर्नमस्कुर्मः। [1]तथा हे इन्द्र ! ते तव सख्ये कृते शत्रुभ्यः कदाचिन्मा भेम भयं मा करवाम ॥ २ ॥**

**अत्र श्लेषालङ्कारः।**

**भावार्थः—ये मनुष्या परमेश्वरे तदाज्ञाचरणे[न], तथा शूरादिमनुष्येषु नित्यं मित्रतामाचरन्ति, ते बलवन्तो भूत्वा नैव शत्रुभ्यो भयपराभवौ प्राप्नुवन्तीति ॥ २ ॥**

फिर भी अगले मन्त्र में इन्हीं दोनों का प्रकाश किया है—

**पदार्थान्वयभाषा**—[2]हे ( शवसः ) अनन्त बल वा [उत्कृष्ट] सेनाबल के ( पते ) पालन करनेहारे ईश्वर, वा सभाध्यक्ष ! ( अभिजेतारम् ) प्रत्यक्ष शत्रुओं को जिताने वा जीतनेवाले, ( अपराजितम् ) जिसका पराजय कोई भी न कर सके, उस ( त्वा ) आपको ( वाजिनः ) उत्तम विद्या और बल से अपने शरीर के उत्तम बलवाले हम लोग ( प्रणोनुमः ) अच्छी प्रकार आपकी बार-बार स्तुति करते हैं। जिससे हे (इन्द्र) सब प्रजा वा सेना के स्वामी ! ( ते ) आप जगदीश्वर वा सभाध्यक्ष के साथ ( सख्ये ) हम लोग मित्रभाव करके शत्रुओं वा दुष्टों से कभी ( मा भेम ) भय न करें ॥ २ ॥

इस मन्त्र में श्लेषालङ्कार है।

**भावार्थ**—जो मनुष्य परमेश्वर की आज्ञा के पालने, वा अपने धर्मानुष्टान से परमात्मा तथा शूरवीर आदि मनुष्यों में मित्रभाव अर्थात् प्रीति रखते हैं, वे बलवाले होकर किसी शत्रु से पराजय वा भय को प्राप्त कभी नहीं होते ॥ २ ॥



**पुनस्तावेवोपदिश्येते—**

पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः।
यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ॥ ३ ॥

पूर्वीः। इन्द्रस्य। रातयः। न। वि। दस्यन्ति। ऊतयः॥ यदि। वाजस्य। गोऽमतः। स्तोतृऽभ्यः। मंहते। मघम्॥ ३॥

**पदार्थः—(पूर्वीः) पूर्व्यः सनातन्यः। सुपां सुलुग्० [अ० ७।१।३९] इति पूर्वसवर्णादेशः। ( इन्द्रस्य ) परमेश्वरस्य सभासेनाध्यक्षस्य वा ( रातयः ) दानानि ( न ) निषेधार्थे ( वि ) क्रियायोगे (दस्यन्ति) उपक्षयन्ति (ऊतयः) रक्षणानि (यदि)[3] आकाङ्क्षार्थे (वाजस्य) वजन्ति**

---

१. अत्र 'यतः' इति पाठो युक्तः। भाषायामपि तथैव निर्देशः।

२. यहां भी दोनों पक्षों का अर्थ साथ-साथ ही किया है। तथापि अर्थ के स्पष्ट होने से पूर्ववत् अलग-अलग निर्देश नहीं किया है।

३. संहितायां 'निपातस्य च' (अ० ६।३।१३५) इति दीर्घत्वम्।

वन्ति सुखानि यस्मिन् व्यवहारे तस्य (गोमतः) प्रशस्ता पृथिवी गावः पशवो वागादीनीन्द्रि-च विद्यन्ते यस्मिन् तस्य (स्तोतृभ्यः) स्तुवन्ति जगदीश्वरं सृष्टिगुणांश्च ये तेभ्यो मक्तेभ्यो विद्वद्भ्यः (मंहते) ददाति। मंहत इति दानकर्मसु पठितम्। निघं० ३। २०। घम्) प्रकृष्टं विद्यासुवर्णादिधनम्॥ ३॥

अन्वयः—यदीन्द्रः स्तोतृभ्यो वाजस्य गोमतो मघं मंहते, तर्ह्यस्य [इन्द्रस्य] एताः [पूर्वीः] र्यो रातय ऊतयो न विदस्यन्ति नैवोपक्षयन्ति॥ ३॥

अत्रापि श्लेषालङ्कारः।

भावार्थः—यथेश्वरस्य जगति दानरक्षणानि नित्यानि न्याययुक्तानि कर्माणि सन्ति, तथैव ष्यैरपि प्रजायां विद्याऽभयदानानि नित्यं कार्य्याणि। यदीश्वरो न स्यात् तर्हीदं जगत् कथ-पद्येत ? यदीश्वरः सर्वमुत्पाद्य न दद्यात् तर्हि मनुष्याः कथं जीवेयुः ? तस्मात् सकलकार्य्योत्पादकः सुखदातेश्वरोऽस्ति, नेतर इति मन्तव्यम्॥ ३॥

फिर भी अगले मन्त्र में इन्हीं दोनों का उपदेश किया है—

पदार्थान्वयभाषा—(यदि) यदि परमेश्वर वा सभा और सेना का स्वामी (स्तोतृभ्यः) गदीश्वर वा सृष्टि के गुणों की स्तुति करनेवाले धर्मात्मा विद्वान् मनुष्यों के लिये (वाजस्य) सब ख प्राप्त करानेवाले व्यवहार, तथा (गोमतः) जिसमें उत्तम पृथिवी, गौ आदि पशु, और वाणी ादि इन्द्रियां वर्त्तमान हैं, उसके सम्बन्धी (मघम्) विद्या और सुवर्णादि धन को (मंहते) ता है, तो इस (इन्द्रस्य) परमेश्वर तथा सभा वा सेना के स्वामी की (पूर्व्यः) सनातन प्राचीन रातयः) दानशक्ति तथा (ऊतयः) रक्षा कभी (न) नहीं (विन्दस्यन्ति) नाश को प्राप्त होतीं, न्तु नित्यप्रति वृद्धि ही को प्राप्त होती रहती हैं॥ ३॥

इस मन्त्र में भी श्लेषालङ्कार है।

जैसे ईश्वर के इस संसार में दान और रक्षा नित्य न्याययुक्त कर्म हैं, वैसे ही अन्य नुष्यों को भी प्रजा के बीच में विद्या और निर्भयता का निरन्तर विस्तार करना चाहिये। जो श्वर न होता, तो यह जगत् कैसे उत्पन्न होता ? तथा जो ईश्वर सब पदार्थों को उत्पन्न रके सब मनुष्यों के लिये न देता, तो मनुष्यलोग कैसे जी सकते ? इससे सब कार्य्यों का उत्पन्न करने और सब सुखों का देनेवाला ईश्वर ही है, अन्य कोई नहीं। यह बात सबको माननी ाहिये॥ ३॥



पुनरिन्द्रशब्देन सूर्य्यसेनापतिगुणा उपदिश्यन्ते—

पुरा॒म्भि॒न्दुर्युवा॑ क॒विरमि॑तौजा अजायत।

इन्द्रो॒ विश्व॑स्य॒ कर्म॑णो ध॒र्ता व॒ज्री पु॑रुष्टु॒तः॥ ४॥

पुराम् । भिन्दुः । युवा । कविः । अमितऽओजाः । अजायत ॥ इन्द्रः । विश्वस्य । कर्मणः । धर्ता । वज्री । पुरुऽस्तुतः ॥ ४ ॥

पदार्थः—( पुराम् ) संघातानां शत्रुनगराणां द्रव्याणां वा ( भिन्दुः ) भेदकः ( युवा ) मिश्रणामिश्रणकर्त्ता ( कविः ) न्यायविद्याया दर्शनविषयस्य वा क्रमकः[1] ( अमितौजाः ) अमितं प्रमाणरहितं बलमुदकं[2] वा यस्य यस्माद् वा सः ( अजायत ) उत्पन्नोऽस्ति ( इन्द्रः ) विद्वान् सूर्य्यो वा ( विश्वस्य ) सर्वस्य जगतः ( कर्मणः ) चेष्टितस्य ( धर्त्ता ) पराक्रमेणाकर्षणेन वा धारकः ( वज्री ) वज्राः प्राप्तिच्छेदनहेतवो बहवः शस्त्रसमूहाः किरणा वा विद्यन्ते यस्य सः । अत्र भूम्न्यर्थे इनिः । ( पुरुष्टुतः ) बहुभिर्विद्वद्भिर्गुणैर्वा स्तोतुमर्हः ॥ ४ ॥

अन्वयः—अयममितौजा वज्री पुरां भिन्दुर्युवा कविः पुरुष्टुत इन्द्रः सेनापतिः सूर्य्यलोको वा विश्वस्य कर्मणो धर्त्ताऽजायतोत्पन्नोऽस्ति ॥ ४ ॥

अत्र श्लेषालङ्कारः ।

भावार्थः—यथेश्वरेण सृष्ट्वा धारितोऽयं सूर्य्यलोकः स्वकीयैर्वज्रभूतैश्छेदकैः किरणैः सर्वेषां मूर्त्तद्रव्याणां भेत्ता बहुगुणहेतुराकर्षणेन पृथिव्यादिलोकस्य धाताऽस्ति, तथैव [3]सेनापतिः स्वबलेन शत्रुबलं छित्त्वा सामदानादिभिर्दुष्टान् मनुष्यान् भित्त्वाऽनेकशुभगुणाकर्षको भूत्वा भूमौ स्वराज्य-पालनं सततं [3]कुर्यादिति वेद्यम् ॥ ४ ॥

फिर अगले मन्त्र में इन्द्र शब्द से सूर्य्य और सेनापति के गुणों का उपदेश किया है—

**पदार्थान्वयभाषा**—जो यह ( अमितौजाः ) अनन्त बल वा जलवाला ( वज्री ) जिसके पदार्थों की प्राप्ति और छेदन करनेवाले शस्त्रसमूह वा किरण हैं, और जो ( पुराम् ) मिले हुए शत्रुओं के नगरों वा पदार्थों का ( भिन्दुः ) अपने प्रताप वा ताप से नाश वा अलग-अलग करनेवाला, ( युवा ) अपने गुणों से पदार्थों का मेल करने वा करानेवाला, तथा ( कविः ) न्यायविद्या वा दृश्य पदार्थों का अपनी किरणों से प्रकाश करनेवाला, ( पुरुष्टुतः ) बहुत से विद्वानों वा गुणों से स्तुति करने योग्य ( इन्द्रः ) सेनापति और सूर्य्यलोक ( विश्वस्य ) सब जगत् के ( कर्मणः ) कार्य्यों को ( धर्त्ता ) अपने बल और आकर्षण गुण से धारण करनेवाला ( अजायत ) उत्पन्न होता और हुआ है, वह सदा जगत् के व्यवहारों की सिद्धि का हेतु है ॥ ४ ॥

इस मन्त्र में श्लेषालङ्कार है ।

**भावार्थ**—जैसे ईश्वर का रचा और धारण किया हुआ यह सूर्य्यलोक अपनी [ भेदन करने-वाली ] वज्ररूपी किरणों से सब मूर्तिमान् पदार्थों को अलग-अलग करने तथा बहुत से गुणों का हेतु, और अपने आकर्षणरूप गुण से पृथिवी आदि लोकों का धारण करनेवाला है, वैसे ही सेनापति को उचित है कि [ अपने बल से ] शत्रुओं का छेदन करके साम दान[4] दण्ड और भेद से दुष्टों को

---

१. क्रमकः=प्रापक इत्यर्थः । २. ओज इति बलनामसु पठितम् (निघं० २।९), उदकनामसु च (निघं० १।१२) इति । ३ वै० य० मुद्रितेषु संस्करणेषु सेनापतिना······ कार्यं०' इति पाठः ।

४. वै० य० मुद्रित संस्करणों में 'दाम' पाठ है । संस्कृत में शुद्ध 'दान' शब्द का निर्देश है । हिन्दी में

भिन्न करके बहुत उत्तम गुणों को ग्रहण करता हुआ भूमि में अपने राज्य का सदा पालन ४ ॥

पुनरिन्द्रशब्देन सूर्यस्य[1] गुणा उपदिश्यन्ते—

त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।
त्वां देवा अबिभ्युपस्तुज्यमानास आविषुः ॥ ५ ॥

त्वम् । वलस्य । गोऽमतः । अप । अवः । अद्रिऽवः । बिलम् ॥ त्वाम् । देवाः । अबिभ्युषः । तुज्यमानासः । आविषुः ॥ ५ ॥

**पदार्थः**—( त्वम् ) अयम् ( वलस्य )[2] मेघस्य । वल इति मेघनामसु पठितम् । निघं० १० । (गोमतः) गावः सम्बद्धा रश्मयो विद्यन्ते यस्य तस्य । अत्र सम्बन्धे मतुप् । (अप) योगे (अवः[3]) [4]दूरीकरोत्युद्घाटयति । अत्र पुरुषव्यत्ययः, लडर्थे लङ् । बहुलं छन्दसि०

के साहचर्य से 'दान' शब्द 'दाम' रूप में बदल गया है । सत्यार्थप्रकाश में इन चार उपायों की व्याख्या प्रकार की है—

'विजय करनेवाले सभापति के राज्य में जो परिपन्थी अर्थात् डाकू लुटेरे हों, उनको ( साम ) मिला (दाम) कुछ देकर, (भेद) फोड़-तोड़ करके वश में करे । जो इनसे वश में न हों तो अति कठिन दण्ड श में करे ।' स० प्र० समु० ६, पृष्ठ २२२ ( रा. ला. क. ट्र. संस्क. ) । 'संस्कृतवाक्यप्रबोध' के प्रथम पृ० ११ पर 'दाम' का अर्थ 'कुछ देना' छपा है । परन्तु इसकी अगली आवृत्तियों में से किन्हीं में '(दाम) दण्ड' और किन्हीं में '(दाम) दमन' पाठ मिलते हैं, वे सब अशुद्ध हैं ।

१. वै० य० मुद्रितेषु संस्करणेषु 'पुनरपि तस्य गुणा०' इति पाठः । स चायुक्तः । पूर्वमन्त्रस्य मन्त्र-कायां पाण्डुलिप्यां 'पुनरिन्द्रशब्देन सूर्यगुणा उच्यन्ते' इत्युक्त्वा सूर्यपर एव मन्त्रो व्याख्यात आसीत् । रोधेनैव चात्र 'पुनरपि च तस्य गुणा०' इति पाठ युक्त आसीत्, परन्तु पश्चात् पूर्वमन्त्रस्य भूमिकायां तारं मन्त्रव्याख्याने च 'सूर्यसेनापत्योर्गुणवर्णनात्' इह 'अपि तस्य' इति पदयोः समन्वयो न जायते । अत भिरुत्तरमन्त्रभूमिकापाठमनुसृत्येह पाठः शोधितः ।

२. वै० य० मुद्रितेषु संस्करणेषु मन्त्रे पदपाठे भाष्ये च सर्वत्र 'बलस्य' इत्येवमोष्ठ्यबकारवान पाठो सोऽपपाठः । ओष्ठ्यबकारवान् बलशब्दः सर्वत्रैवाद्युदात्तो भवति, अन्तस्थवकारवांश्चान्तोदात्तः । व ओष्ठ्यो बकारः क्व चान्तस्थो वकार इत्यस्य निदर्शनाय अथर्ववेदीयं 'दन्त्योष्ठ्यविधि' नामकं परिशिष्टं व्यम् । यद्यपि तस्याथर्वणा एव सम्बन्धस्तथापि तत्रोक्ता नियमाः सर्वत्र पाठनिश्चय उपयोगिनः सन्ति ।

३. यथा पदार्थस्तथा भौवादिकस्यावतेरिदं रूपमिति ग्रन्थकृतोऽभिप्रेत इति प्रतीयते । अत एव स तोऽभावाय प्रयतमानो दृश्यते । तथा सति 'बहुलं छन्दसि' (अ० २।४।७३) इत्यतः शपो लुगपि वक्तव्यः । तु अन्वये 'बिलमपावोऽपावृणोति' निर्देशः तथा वृणोते रूपमिति विज्ञायते । तथा सति अडाटयोरभावाय त्नो न कर्तव्यो भवति । 'मन्त्रे घसह्वरणश०' ( अ० २ । ४ । ७६ ) इत्यनेन च्लेर्लोपोऽपि संपद्यते', परन्तु र्थे लुङ्' वक्तव्यः । उभयथा निर्देशाद् भाष्यकार उभौ पक्षौ मन्यते, इत्येवं विरोधपरिहारोऽपनेतव्यः ।

४. अवतिपक्षे धातूनामनेकार्थत्वाद् मन्त्रपठिताऽपोपसर्गसंबन्धाच्चायमर्थो निर्दिष्ट इति ज्ञेयम् ।

[अ० ६। ४। ७५] इत्याडभावश्च। (अद्रिवः) बहवोऽद्रयो मेघा विद्यन्ते यस्मिन् सः। अत्र भूम्न्यर्थे मतुप्। छन्दसीरः [अ० ८। २। १५] इति मतुपो मकारस्य वत्वम्। मतुवसो रु सम्बुद्धौ छन्दसि। अ० ८। ३। १ इति नकारस्थाने रुरावेशश्च। अद्रिरिति मेघनामसु पठितम्। निघं० १। १०। (बिलम्) जलसमूहम्। बिलं भरं भवति बिभर्तेः। निरु० २। १७। (त्वाम्) तमिमम् (देवाः) दिव्यगुणाः पृथिव्यादयः (अबिभ्युषः) बिभेति यस्मात् स [1]बिभीवान्, न बिभीवान् अबिभीवान्, तस्य (तुज्यमानासः) कम्पमानाः स्वां स्वां वसतिमाददानाः (आविषुः) अभितः स्वस्वकक्षां व्याप्नुवन्ति। अत्र लडर्थे लुङ्। अयं व्याप्त्यर्थस्याऽवधातोः प्रयोगः॥ ५॥

**अन्वयः**—योऽद्रिवो मेघवानिन्द्रः सूर्य्यलोको गोमतोऽबिभ्युषो वलस्य मेघस्य बिलमपावोऽपवृणोति, त्वां तमिमं तुज्यमानासो देवा दिव्यगुणा भ्रमन्तः पृथिव्यादयो लोका आविषुर्व्याप्नुवन्ति॥ ५॥

**भावार्थः**—यथा सूर्य्यः स्वकिरणैर्घनाकारं मेघं छित्वा भूमौ निपातयति, यस्य किरणेषु मेघस्तिष्ठति, यस्याभित आकर्षणेन पृथिव्यादयो लोकाः स्वस्वकक्षायां सुनियमेन भ्रमन्ति, ततोऽयनर्त्वहोरात्रादयो जायन्ते, [2]तथैव सेनापतिना भवितव्यमिति॥ ५॥

फिर भी अगले मन्त्र में इन्द्र शब्द से सूर्य्य के गुणों का उपदेश किया है—

**पदार्थान्वयभाषा**—(अद्रिवः) जिसमें अनेक मेघ विद्यमान हैं, ऐसा जो सूर्य्यलोक है, वह (गोमतः) जिसमें अपने किरण विद्यमान हैं, उस (अबिभ्युषः) भयरहित (वलस्य) मेघ के (बिलम्) जलसमूह को (अपावः) अलग-अलग कर देता है। (त्वाम्) उस इस सूर्य्य को (तुज्यमानासः) अपनी-अपनी कक्षाओं में भ्रमण करते हुए (देवाः) पृथिवी आदि लोक (आविषुः) विशेष करके प्राप्त होते हैं॥ ५॥

**भावार्थ**—जैसे सूर्य्यलोक अपनी किरणों से मेघ के घने-घने बद्लों को छिन्न-भिन्न करके भूमि पर गिराता हुआ जल की वर्षा करता है, क्योंकि यह मेघ उसकी किरणों में ही स्थिर रहता है, तथा इसके चारों ओर आकर्षण अर्थात् खींचने के गुण से पृथिवी आदि लोक अपनी-अपनी कक्षा में सुनियम से घूमते हैं, इसी से समय के विभाग जो उत्तरायण, दक्षिणायन तथा ऋतु, मास, पक्ष, दिन, घड़ी, पल आदि उत्पन्न होते है, वैसे ही गुणवाला सेनापति को होना उचित है॥ ५॥



अथेन्द्रशब्देन शूरवीरगुणा उपदिश्यन्ते—

तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन्।
उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः॥ ६॥

१. वै० य० मुद्रितेषु १-२-३ संस्करणेषु 'बिभीवान् न' इत्येते विद्यमाने अपि पदे चतुर्थसंस्करणे प्रमादान्नष्टे।

२. अत्रत्यः पदार्थोऽन्वयश्च सूर्यपर एव, तथापि पूर्वमन्त्रे सूर्यसेनापतिपरयोरर्थनिर्देशाद् मन्त्र इहापि ग्रन्थकृता 'यथा' पदं 'तथैव सेनापतिना भवितव्यम्' च पाठो वर्धितः।

तवं । अहम् । शूर । रातिऽभिः । प्रति । आयम् । सिन्धुम् । आऽवदन् ॥ उपं । अतिष्ठन्त । गिर्वणः । । ते । तस्यं । कारवः ॥ ६ ॥

पदार्थः—(तव) बलपराक्रमयुक्तस्य (अहम्) सर्वो जनः (शूर) धार्मिक दुष्टनिवारक विद्यापराक्रमवन् सभाध्यक्ष ! (रातिभिः) अभयादिदानैः (प्रति) प्रतीतार्थे क्रियायोगे (आयम्) नुयाम् । अत्र लिङर्थे लङ् । (सिन्धुम्) स्यन्दते प्रस्रवति सुखानि, समुद्र इव गम्भीरस्तम् गावदन्) समन्तात् ब्रुवन् सन् (उप) सामीप्यार्थे (अतिष्ठन्त) स्थिरा भवेयुः । अत्र लिङर्थे (गिर्वणः) गीर्भिर्वन्यते[1] सेव्यते जनैस्तत्सम्बुद्धौ (विदुः) जानन्ति (ते) तव । [2]अत्र हेतायां युष्मत्तत्ततक्षुःष्वन्तःपादम् [अ० ८ । ३ । १०३] इति मूर्धन्यः । (तस्य) राज्यस्य द्धस्य शिल्पस्य वा (कारवः) ये कार्य्याणि कुर्वन्ति ते ॥ ६ ॥

अन्वयः—हे शूर ! [3]तव रातिभिस्त्वां सिन्धुमिवावदन् सन्नहं प्रत्यायम् । हे गिर्वणस्तव स्य च ये कारवस्त्वां शूरं विदुरुपातिष्ठन्त, ते सदा सुखिनो भवन्ति ॥ ६ ॥

अत्र लुप्तोपमालङ्कारः[4] ।

भावार्थः—ईश्वरः सर्वानाज्ञापयति—मनुष्यैर्धार्मिकस्य शूरस्य प्रशंसितस्य सभाध्यक्षस्य सेनाध्यक्षस्य मनुष्यस्याभयदानेन समुद्रस्य जन्तव इवाश्रयेण राज्यकार्य्याणि सम्यग् विदित्वा साधनीयानि, दुःखनिवारणेन सुखाय परस्परमुपस्थितिश्च कार्य्येति ॥ ६ ॥

अब अगले मन्त्र में इन्द्र शब्द से शूरवीर के गुणों का उपदेश किया है—

पदार्थान्वयभाषा—हे (शूर) धार्मिक, घोर युद्ध से दुष्टों की निवृत्ति करने, तथा विद्या बल पराक्रमवाले वीर पुरुष ! (तव) आपके [(रातिभिः)] निर्भयता आदि दानों से मैं आपको (सिन्धुम्) समुद्र के समान गम्भीर वा सुख देनेवाला (आवदन्) निरन्तर कहता हुआ (प्रत्यायम्) प्रतीति करके प्राप्त होऊं । तथा हे (गिर्वणः) मनुष्यों की स्तुतियों से सेवन करने करने योग्य ! जो आपके (तस्य) युद्ध राज्य वा शिल्पविद्या के सहायक (कारवः) कारीगर आपको शूरवीर (विदुः) जानते, तथा (उपातिष्ठन्त) आपके समीपस्थ होकर उत्तम काम करते हैं, [(ते)] वे सब दिन सुखी रहते हैं ॥ ६ ॥

इस मन्त्र में लुप्तोपमालङ्कार है ।

भावार्थ—ईश्वर सब मनुष्यों को आज्ञा देता है कि—मनुष्यों को धार्मिक प्रशंसनीय सभाध्यक्ष वा सेनापति मनुष्य के अभयदान से निर्भयता को प्राप्त होकर जैसे [समुद्र के जीव] समुद्र का

---

१. वै० य० मुद्रितेषु संस्करणेषु 'वन्द्यते' इत्यपपाठः ।

२. ख.कोशस्य प्रान्ते 'युष्मत्तत्ततक्षुःष्वन्तःपादम्' इति सूत्रं निर्दिश्यते । तदनुरोधेनायमावश्यकः पाठोऽत्र पूरितः । ३. वै० य० मुद्रितेषु संस्करणेषु 'ये तव' इत्येवं पठ्यते । अत्र 'ये' पदस्यास्थाने पाठात् भावार्थेऽनिर्देशाद् अस्माभिरुत्तरत्र यथास्थाने पठितम् ।

४. ख.कोशे वै० य० मुद्रितेषु संस्करणेषु भावार्थे चायमेव शुद्धः पाठ उपलभ्यते । वै० य० मुद्रितेषु संस्करणेषु 'लुप्तोपमालङ्कारौ स्तः' इत्यपपाठः ।

आश्रय लेते हैं, वैसे ही उक्त पुरुष के आश्रय से राज्य के कामों को अच्छी प्रकार जानकर उनको सिद्ध करना चाहिये। तथा दुःखों के निवारण से सब सुखों के लिये परस्पर विचार भी करना चाहिये॥ ६॥



पुनस्तद्गुणा उपदिश्यन्ते—

मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः।
विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर॥ ७॥

मायाभिः। इन्द्र। मायिनम्। त्वम्। शुष्णम्। अव। अतिरः॥ विदुः। ते। तस्य। मेधिराः। तेषाम्। श्रवांसि। उत्। तिर॥ ७॥

**पदार्थः**—(मायाभिः) प्रज्ञाविशेषव्यवहारैः। मायेति प्रज्ञानामसु पठितम्। निघं० ३। ९। (इन्द्र) परमैश्वर्यप्रापक शत्रुनिवारक सभासेनयोः परमाध्यक्ष! (मायिनम्) माया निन्दिता प्रज्ञा[1] विद्यते यस्य तम्। अत्र निन्दार्थे इनिः। (त्वम्) प्रज्ञासेनाशरीरबलयुक्तः (शुष्णम्) शोषयति धार्मिकान् जनान् तं दुष्टस्वभावं प्राणिनम्। अत्र 'शुष शोषणे' इत्यस्मात् तृषिशुषि०। उ० ३। १२ अनेन नः प्रत्ययः। (अव) विनिग्रहार्थे। अवेति विनिग्रहार्थीयः। निरु० १। ३। (अतिरः) शत्रुबलं प्लावयति। अत्र लडर्थे 'लङ्,[2] विकरणव्यत्ययेन शपः स्थाने शश्च। (विदुः) जानन्ति (ते) तव (तस्य) राज्यादिव्यवहारस्य मध्ये (मेधिराः) ये मेधन्ते शास्त्राणि [3]जानन्ति दुष्टान् हिंसन्ति ते। अत्र 'मिधृ मेधृ मेधाहिंसनयोः' इत्यस्माद् बाहुलकादौणादिक [4]इरन् प्रत्ययः। (तेषाम्) धार्मिकाणां प्राणिनाम् (श्रवांसि) अन्नादीनि वस्तूनि। श्रव इत्यन्ननामसु पठितम्। निघं० २। ७। श्रव इत्यन्ननाम श्रूयत इति सतः। निरु० १०। ३ अनेन [5]विद्यमानानामन्नादिपदार्थानां ग्रहणम्। (उत्) उत्कृष्टार्थे (तिर) विस्तारय॥ ७॥

**अन्वयः**—हे इन्द्र शूरवीर! त्वं मायाभिः शुष्णं मायिनं शत्रुमवातिरः, तस्य हनने ये मेधिरा [विदु]स्ते तव सङ्गमेन सुखिनो भूत्वा श्रवांसि प्राप्नुवन्तु। त्वं तेषां सहायेनारीणां बलान्युत्तिरोत्कृष्टतया निवारय॥ ७॥

**भावार्थः**—ईश्वर आज्ञापयति—मेधाविभिर्मनुष्यैः सामदानदण्डभेदयुक्त्या दुष्टशत्रून्निवार्य्य विद्याचक्रवर्त्तिराज्यस्य विस्तारः सम्भावनीयः। यथाऽस्मिन् जगति कपटिनो मनुष्या न वर्द्धेरंस्तथा नित्यं प्रयत्नः कार्य्य इति॥ ७॥

१. 'माया प्रज्ञा निन्दिता विद्यते यस्य' इत्येवं सम्बन्धो ज्ञेयः।

२. वै० य० मुद्रितेषु संस्करणेषु 'लुङ्' इत्यपपाठः। व्यत्ययेन शपः स्थाने शस्य निर्देशात् 'लङ्' पाठेनात्र भवितव्यम्। ३. वै० य० मुद्रितेषु संस्करणेषु 'ज्ञात्वा' इत्यपपाठः।

४. साक्षादनुपदिष्टोऽपि 'इरन्' प्रत्यय उपसंख्येय इति भावः।

५. वै० य० मुद्रितेषु संस्करणेषु 'विद्यमानादीनाम०' इत्यपपाठः।

फिर भी अगले मन्त्र में [1]शूरवीर के गुणों का उपदेश किया है—

**पदार्थान्वयभाषा**—हे परमैश्वर्य्य को प्राप्त कराने तथा शत्रुओं की निवृत्ति करानेवाले सेनापति वीर मनुष्य ! (त्वम्) तू उत्तम बुद्धि सेना तथा शरीर के बल से युक्त होके (मायाभिः) विशेष द्व के व्यवहारों से (शुष्णम्) जो धर्मात्मा सज्जनों का चित्त व्याकुल करनेवाला तथा (मायिनम्) द्धि दुःख देनेवाला सब का शत्रु मनुष्य है, उसका (अवातिर) पराजय किया कर। (तस्य) के मारने में (मेधिराः) जो शास्त्रों को जानने तथा दुष्टों को मारने में अति प्रवीण मनुष्य वे (ते) तेरे सङ्ग से सुखी होकर [(श्रवांसि)] अन्नादि पदार्थों को प्राप्त हों। तू (तेषाम्) धर्मात्मा पुरुषों के सहाय से शत्रुओं के बलों को (उत्तिर) अच्छी प्रकार निवारण कर ॥७॥

**भावार्थ**—ईश्वर आज्ञा देता है कि—बुद्धिमान् मनुष्यों को साम, दान, दण्ड और भेद की वेत से दुष्ट और शत्रुजनों की निवृत्ति करके विद्या और चक्रवर्ति राज्य की यथावत् उन्नति रनी चाहिये। तथा जैसे इस संसार में कपटी, छली और दुष्ट पुरुष वृद्धि को प्राप्त न हों, वैसा गाय निरन्तर करना चाहिये ॥ ७ ॥



अथेश्वरगुणा उपदिश्यन्ते—

**इन्द्रमीशा॑नुमोज॑सा॒भि स्तोमा॑ अनूषत ।**
**सुहस्रं यस्य॑ रा॒तय॑ उ॒त वा॒ सन्ति॒ भूय॑सीः ॥ ८ ॥**

इन्द्र॑म् । ईशा॑नम् । ओज॑सा । अ॒भि । स्तोमाः॑ । अ॒नू॒ष॒त ॥ स॒हस्र॑म् । यस्य॑ । रा॒तयः॑ । उ॒त । वा॒ । न्ति॑ । भूय॑सीः ॥ ८ ॥

**पदार्थः**—(इन्द्रम्) सकलैश्वर्य्ययुक्तं (ईशानम्) ईष्टे कारणात् सकलस्य जगतस्तम् ओजसा) अनन्तबलेन। ओज इति बलनामसु पठितम्। निघं० २। ६। (अभि) सर्वतोभावे। भीत्याभिमुख्यं प्राह। निरु० १। ३। (स्तोमाः) स्तुवन्ति यैस्ते स्तुतिसमूहाः (अनूषत[2]) स्तुवन्ति। अत्र लडर्थे लुङ्। (सहस्रम्) असंख्याताः (यस्य) जगदीश्वरस्य (रातयः) दानानि (उत) वितर्के (वा) पक्षान्तरे (सन्ति) भवन्ति (भूयसीः) अधिकाः। अत्र वा छन्दसि [अ० । १। १०६] इति जसः पूर्वसवर्णत्वम् ॥ ८ ॥

**अन्वयः**—यस्य सर्वे स्तोमाः स्तुतयः सहस्रमुत वा भूयसीरधिका रातयश्च सन्ति, ता मोजसा सह वर्त्तमानमीशानमिन्द्रं जगदीश्वरमभ्यनूषत सर्वतः स्तुवन्ति, स एव सर्वैर्मनुष्यैः स्तोतव्यः ॥ ८ ॥

---

१. वै० य० मुद्रित संस्करणों में 'सूर्य के' अपपाठ है। प्रकरण तथा भाष्य शूरवीरपरक है।

२. 'णू स्तवने' तौदादिकः। छान्दसत्वाद्विभाष आत्मनेपदं च। कुटादित्वात् 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (अ० १। २। १) इति सिचो ङित्त्वाद् गुणाभावः। सायणस्तु 'णु स्तुतौ' इत्यादादिकत्वाद् रूपसिद्धिमाह। तस्य कुटादित्वाभावेऽपि यद् 'कुटादित्वात्सिचो ङित्त्वाद् गुणाभावः' इति लिखितवान्, स तस्य प्रमादो ज्ञेयः।

भावार्थः—येन दयालुनेश्वरेण प्राणिनां सुखायानेके पदार्था जगति स्वौजसोत्पाद्य दत्ता, यस्य ब्रह्मणः सर्व इमे धन्यवादा भवन्ति, तस्यैवाश्रयो मनुष्यैर्ग्राह्य इति ॥ ८ ॥

अत्रैकादशसूक्ते हीन्द्रशब्देनेश्वरस्य स्तुतिर्निर्भयसम्पादनं सूर्य्यलोककृत्यं शूरवीरगुणवर्णनं दुष्टशत्रुनिवारणं प्रजारक्षणमीश्वरस्यानन्तसामर्थ्याज्जगदुत्पादनादिविधानमुक्तमतोऽस्य दशम-सूक्तार्थेन सह सङ्गतिरस्तीति बोध्यम् ॥

इदमपि सूक्तं सायणाचार्य्यादिभिर्यूरोपदेशनिवासिभिर्विलसनाख्यादिभिश्चान्यथैव व्याख्यातम् ॥ ८ ॥

इति प्रथममण्डले तृतीयोऽनुवाक एकादशसूक्तमेकविंशो वर्गश्च समाप्तः ॥

अगले मन्त्र में ईश्वर के गुणों का उपदेश किया है—

**पदार्थान्वयभाषा**—( यस्य ) जिस जगदीश्वर के ये सब ( स्तोमाः ) स्तुतियों के समूह, और (सहस्रम्) हजारों (उत वा) अथवा (भूयसीः) अधिक (रातयः) दान (सन्ति) हैं, वे सब जिस (ओजसा) अनन्त बल के साथ वर्त्तमान, (ईशानम्) कारण से सब जगत् को रचनेवाले, तथा ( इन्द्रम् ) सकल ऐश्वर्ययुक्त जगदीश्वर के ( अभ्यनूषत ) सब प्रकार से गुणकीर्त्तन करते हैं, उसी की सब मनुष्यों को स्तुति करनी चाहिये ॥ ८ ॥

**भावार्थ**—जिस दयालु ईश्वर ने प्राणियों के सुख के लिये जगत् में अनेक उत्तम-उत्तम पदार्थ अपने पराक्रम से उत्पन्न करके जीवों को दिये हैं, जिस ब्रह्म के स्तुतिविधायक सब धन्यवाद होते हैं, सब मनुष्यों को उसी का आश्रय लेना चाहिये ॥ ८ ॥

इस सूक्त में 'इन्द्र' शब्द से ईश्वर की स्तुति, निर्भयता-सम्पादन, सूर्य्यलोक के कार्य्य, शूरवीर के गुणों का वर्णन, दुष्ट शत्रुओं का निवारण, प्रजा की रक्षा तथा ईश्वर के अनन्त सामर्थ्य से कारण करके जगत् की उत्पत्ति आदि के विधान से इस ग्यारहवें सूक्त की सङ्गति दशवें सूक्त के अर्थ के साथ जाननी चाहिये ॥

यह भी सूक्त सायणाचार्य्य आदि आर्य्यावर्त्तवासी तथा यूरोपदेशवासी विलसन साहब आदि ने विपरीत अर्थ के साथ वर्णन किया है ॥ ८ ॥

यह प्रथम मण्डल में तीसरा अनुवाक, ग्यारहवां सूक्त और इक्कीसवां वर्ग समाप्त हुआ ॥



अथ द्वादशर्चस्य द्वादशसूक्तस्य काण्वो मेधातिथिर्ऋषिः । अग्निर्देवता । गायत्री[1] छन्दः । षड्जः स्वरः ॥

**तत्रादौ भौतिकगुणा उपदिश्यन्ते—**

अ॒ग्निं दू॒तं वृ॑णीमहे॒ होता॑रं वि॒श्ववे॑दसम् । अ॒स्य य॒ज्ञस्य॑ सु॒क्रतु॑म् ॥ १ ॥

१. सामान्येनेव छन्दः । विशेषेण तु—१, २, ७-६, ११, १२ गायत्री; ३, ५ निचृद्गायत्री; ४, १० पिपीलिकामध्यानिचृद्गायत्री; ६ विराड्गायत्री ।

अग्निम् । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् ॥ अस्य । यज्ञस्य । सुऽक्रतुम् ॥ १ ॥

**पदार्थः**—( अग्निम् ) सर्वपदार्थच्छेदकम् ( दूतम् ) यो दावयति देशान्तरं पदार्थान् प्रत्युपतापयति वा तम् । अत्र [1]'दुतनिभ्यां दीर्घश्च । उ० ३ । ९० इति क्तः प्रत्ययो दीर्घश्च । (वृणीमहे ) स्वीकुर्महे ( होतारम् ) यानेषु वेगादिगुणदातारम् ( विश्ववेदसम् ) शिल्पिनो धनानि सर्वाणि शिल्पादिसाधनानि विन्दन्ति यस्मात् तम् ( अस्य ) प्रत्यक्षेण साध्यस्य (यज्ञस्य ) शिल्पविद्यामयस्य ( सुक्रतुम् ) सुष्ठु शोभनाः क्रतवः प्रज्ञाः क्रिया वा भवन्ति यस्मात्तम् ॥ १ ॥

**अन्वयः**—वयं क्रियाचिकीर्षवो मनुष्या अस्य यज्ञस्य सुक्रतुं विश्ववेदसम् होतारं दूतमग्निं वृणीमहे ॥ १ ॥

**भावार्थः**—ईश्वर आज्ञापयति—मनुष्यैरयं प्रत्यक्षाप्रत्यक्षेण प्रसिद्धाप्रसिद्धगुणद्रव्याणामूर्ध्वाधोगमकत्वेन दूतस्वभावः शिल्पविद्यासम्भावितकलायन्त्राणां प्रेरणहेतुर्यानेषु वेगादिक्रियादिमित्तमग्निः सम्यग् विद्यया सर्वोपकाराय संग्राह्यो, यतः सर्वाण्युत्तमानि सुखानि संभवेरिति ॥ १ ॥

अब बारहवें सूक्त के प्रथम मन्त्र में भौतिक अग्नि के गुणों का उपदेश किया है—

**पदार्थान्वयभाषा**—क्रिया करने की इच्छावाले हम मनुष्यलोग ( अस्य ) प्रत्यक्ष सिद्ध करने योग्य (यज्ञस्य) शिल्पविद्यारूप यज्ञ के (सुक्रतुम्) जिससे उत्तम-उत्तम प्रज्ञा वा क्रिया सिद्ध होती हैं, तथा ( विश्ववेदसम् ) जिससे कारीगरों को सब शिल्प आदि साधनों का लाभ होता है, (होतारम्) यानों में वेग आदि गुणों को देने, तथा (दूतम्) पदार्थों को एक देश से दूसरे देश को प्राप्त कराने, (अग्निम्) सब पदार्थों को अपने तेज से छिन्न-भिन्न करनेवाले भौतिक अग्नि को (वृणीमहे) स्वीकार करते हैं ॥ १ ॥

**भावार्थ**—ईश्वर सब मनुष्यों को आज्ञा देता है कि यह प्रत्यक्ष वा अप्रत्यक्ष से विद्वानों ने जिसके गुण प्रसिद्ध किये हैं, तथा पदार्थों को ऊपर-नीचे पहुंचाने से दूत स्वभाववाला, तथा शिल्पविद्या से जो कलायन्त्र बनाते हैं उनके चलाने में हेतु, और विमान आदि यानों में वेग आदि क्रियाओं का देनेवाला भौतिक अग्नि अच्छी प्रकार विद्या से सब सज्जनों के उपकार के लिये निरन्तर ग्रहण करना चाहिये, जिससे सब उत्तम-उत्तम सुख हों ॥ १ ॥



अथ [ईश्वरविद्युद्रूपो] द्विविधोऽग्निरुपदिश्यते—

अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥ २ ॥

१. अत्र 'दु गतौ' (भौवादिकः) 'टु दु उपतापे' (सौवादिकः) आभ्यां शुद्धाभ्यामन्तर्णीतण्यर्थाभ्यां वा क्तप्रत्ययो द्रष्टव्यः । यद्वा—धातोर्ग्रहणे ण्यर्थिकस्यापि ग्रहणं भवति' इति परिभाषया ण्यन्ताभ्यां प्रत्यये कृते 'बहुलमन्यत्रापि संज्ञाछन्दसोः' इत्यौणादिकसूत्रेण ( वै० य० मुद्रित उणादिकोशे प्रमादात् सूत्रं न मुद्रितं, व्याख्यानं २ । २२ सूत्रव्याख्यान एव दृश्यते ) णेर्लुग् द्रष्टव्यः ।

अ॒ग्निम॑ऽअग्निम् । हवी॑मऽभिः । सदा॑ । ह॒व॒न्त॒ । वि॒श्पति॑म् ॥ ह॒व्य॒ऽवाह॑म् । पु॒रु॒ऽप्रि॒यम् ॥ २ ॥

पदार्थः—(अग्निम्) [1]परमेश्वरम् (अग्निम्) विद्युद्रूपम् (हवीमभिः) ग्रहीतुं योग्यैरुपासनाविभिः शिल्पसाधनैर्वा । 'हु दानादनयोः' इत्यस्मात् अन्येभ्योऽपि दृश्यन्ते । अ० ३ । २ । ७५ । इति मनिन्, बहुलं छन्दसि [अ० ७ । ३ । ६७] इतीडागमश्च[2] । (सदा) सर्वस्मिन् काले (हवन्त)[3] गृह्णीत (विश्पतिम्) विशः प्रजास्तासां स्वामिनं पालनहेतुं वा (हव्यवाहम्) होतुं दातुमत्तुमादातुं च योग्यानि [वहति][4] ददाति वा यानादीनि वस्तूनीतस्ततो वहति प्रापयति तम् (पुरुप्रियम्) बहूनां विदुषां प्रीतिजनको वा पुरूणि बहूनि प्रियाणि सुखानि भवन्ति यस्मात्तम् ॥ २ ॥

अन्वयः—यथा वयं हवीमभिः पुरुप्रियं विश्पतिं हव्यवाहमग्निमग्निं वृणीमहे, तथैवैतं यूयमपि सदा हवन्त गृह्णीत ॥ २ ॥

अत्र लुप्तोपमालङ्कारः । पूर्वस्मान्मन्त्राद् 'वृणीमहे' इति पदमनुवर्त्तते ।

भावार्थः—ईश्वरः सर्वान् प्रत्युपदिशति—हे मनुष्याः ! युष्माभिर्विद्युदाख्यस्य प्रसिद्धस्याग्नेश्च सकाशात् कलाकौशलादिसिद्धिं कृत्वाऽभीष्टानि सुखानि सदैव भोक्तव्यानि भोजयितव्यानि चेति ॥ २ ॥

अब अगले मन्त्र में [ईश्वर और विद्युत् रूप] दो प्रकार के अग्नि का उपदेश किया है—

पदार्थान्वयभाषा—जैसे हम लोग (हवीमभिः) ग्रहण करने योग्य उपासनादिकों वा शिल्प-विद्या के साधनों से (पुरुप्रियम्) विद्वानों के प्रीतिजनक वा बहुत सुखों के देनेवाले, (विश्पतिम्) प्रजाओं के [स्वामी वा] पालन के हेतु, और (हव्यवाहम्) देने लेने योग्य पदार्थों को देने, वा इधर-उधर पहुंचानेवाले (अग्निम्) परमेश्वर और [(अग्निम्)] बिजुली को (वृणीमहे) स्वीकार करते हैं, वैसे ही तुम लोग भी [सदा] सदा (हवन्त) उसका ग्रहण करो ॥ २ ॥

इस मन्त्र में लुप्तोपमालङ्कार है । और पिछले मन्त्र से 'वृणीमहे' इस पद की अनुवृत्ति आती है ।

भावार्थ—ईश्वर सब मनुष्यों के लिये उपदेश करता है कि—हे मनुष्यो ! तुम लोगों को विद्युत् अर्थात् बिजुली रूप तथा प्रत्यक्ष भौतिक अग्नि से कला कौशल आदि सिद्ध करके इष्ट सुख सदैव भोगने और भुगवाने चाहियें ॥ २ ॥ 

---

१. अत्र यद् वक्तव्यं तन्मन्त्रभूमिकायामुक्तम् । तदनुसारमत्र पाठस्त्वं सुधियो विभावयन्तु ।

२. अत्र 'हुभृधृसुस्तृसृभूम्य ईमनिन्' इति दशपाद्युणादिसूत्रेण (६ । ७६) विहित 'ईमनिन्' बाहुल-काज्जुहोतेरपि द्रष्टव्यः । सायणस्तु भरीमभिः (ऋ० १।२२।१३) पदस्य व्याख्याने 'हुभृधृ०' इत्येवं सूत्रमुदधृत-वान् । अस्मिन् पाठे साक्षात् 'ईमनिन्' विहितो भवति ।

३. जुहोतेर्व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' (अ० २।४।७३) इति शपः श्लुर्न, (द्रष्टव्यम्—दद-मेवाभाष्यम् १।२३।३) छान्दसत्वाट्टेरेत्वाभावः, मध्यमस्य स्थाने प्रथमश्च ।

४. वहतिरत्र दानार्थे, अपरस्मिन्नर्थे प्रापणार्थे द्रष्टव्यः ।

अथेश्वरभौतिकावुपदिश्येते—

अग्ने देवाँ इहावह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ॥ ३ ॥

अग्ने । देवान् । इह । आ । वह । जज्ञानः । वृक्तऽबर्हिषे ॥ असि । होता । नः । ईड्यः ॥ ३ ॥

पदार्थः—( अग्ने ) स्तोतुमर्हेश्वर ! भौतिकोऽग्निर्वा (देवान्) दिव्यगुणसहितान् पदार्थान् इह ) अस्मिन् स्थाने ( आ ) अभितः ( वह ) वहति वा ( जज्ञानः ) प्रादुर्भावयता (वृक्त-हिषे) वृक्तं त्यक्तं हविर्बर्हिष्यन्तरिक्षे येन, तस्मा ऋत्विजे। वृक्तबर्हिषे इति ऋत्विङ्नामसु ठतम् । निघं० ३ । १८ । (असि) भवति (होता) हुतस्य पदार्थस्य दाता [ऽऽदाता वा] (नः) स्मभ्यमस्माकम् वा (ईड्यः) अध्येष्टव्यः ॥ ३ ॥

अन्वयः हे अग्ने वन्दनीयेश्वर ! त्वमिह जज्ञानो होतेड्योसि, नोऽस्मभ्यं वृक्तबर्हिषे च ानावह समन्तात् प्रापय, इत्येकः ॥

अयं होता जज्ञानोऽ[ऽग्ने]ग्निर्वृक्तबर्हिषे नोऽस्मभ्यं च [इह]देवानावह समन्तात् प्रापयति । नोऽस्माकं स ईड्यो[ऽसि] भवति, [इति द्वितीयः] ॥ ३ ॥

अत्र श्लेषालङ्कारः ।

भावार्थः—मनुष्यैर्यस्मिन् प्रादुर्भूतेऽग्नौ सुगन्ध्यादिगुणयुक्तानां द्रव्याणां होमः क्रियते, स द्रव्यसहित आकाशे वायुं मेघमण्डलं च [1]शोधयित्वाऽस्मिन् संसारे दिव्यानि सुखानि जनयति । स्मादयमस्माभिर्नित्यमन्वेष्टव्यगुणोऽस्तीतीश्वराज्ञा मन्तव्या ॥ ३ ॥

अगले मन्त्र में अग्नि शब्द से ईश्वर और भौतिक अग्नि के गुणों का उपदेश किया है—

पदार्थान्वयभाषा—हे ( अग्ने ) स्तुति करने योग्य जगदीश्वर ! जो आप ( इह ) इस थान में ( जज्ञानः ) प्रगट कराने, वा ( होता ) हवन किये हुए पदार्थों को देनेवाले, तथा ईड्यः ) खोज करने योग्य (असि) हैं, सो आप (नः) हम लोगों और (वृक्तबर्हिषे) अन्तरिक्ष होम के पदार्थों को प्राप्त करानेवाले विद्वान् के लिये (देवान्) दिव्यगुणयुक्त पदार्थों को (आवह) च्छे प्रकार प्राप्त कीजिये ॥१॥

यह ( होता ) हवन किये हुए पदार्थों का ग्रहण करने, तथा ( जज्ञानः ) उनकी उत्पत्ति रानेवाला ( अग्ने ) भौतिक अग्नि, ( वृक्तबर्हिषे ) जिसके द्वारा होम करने योग्य पदार्थ न्तरिक्ष में पहुंचाये जाते हैं उस ऋत्विज् के, [और ( नः ) हमारे] लिये ( इह ) इस स्थान ( देवान् ) दिव्यगुणयुक्त पदार्थों को ( आवह ) सब प्रकार से प्राप्त कराता है। इस कारण म लोगों को वह ( ईड्यः ) खोज करने योग्य ( असि ) होता है ॥ ३ ॥

इस मन्त्र में श्लेषालङ्कार है।

भावार्थ—मनुष्य लोग जिस प्रत्यक्ष अग्नि में सुगन्धि आदि गुणयुक्त पदार्थों का होम किया

१. वै०य० मुद्रितेषु संस्करणेषु 'शुद्धे हास्मिन्' इत्यपपाठः । ख. कोशे 'शोधयित्वाऽस्मिन्' इत्येवं पठ्यते ।

करते हैं, जो उन पदार्थों के साथ अन्तरिक्ष में ठहरनेवाले वायु और मेघ के जल को शुद्ध करके इस संसार में दिव्य सुख उत्पन्न करता है, इस कारण हम लोगों को इस अग्नि के गुणों का खोज करना चाहिये। यह ईश्वर की आज्ञा सब को अवश्य माननी योग्य है ।। ३ ।।



अथाग्निगुणा उपदिश्यन्ते—

तॉं उशतो वि बोधय यदग्ने यासि दूत्यम् । देवैरा सत्सि बर्हिषि ।। ४ ।।

तान् । उशतः । वि । बोधय । यत् । अग्ने । यासि । दूत्यम् ॥ देवैः । आ । सत्सि । बर्हिषि ।। ४ ।।

पदार्थः—( तान् ) दिव्यान् गुणान् ( उशतः ) कामितान्। अत्र क्वतो बहुलम् [अ० ३ । ३ । ११३ वा०] इति कर्मणि लटः स्थाने शतृप्रत्ययः (वि) विविधार्थे। व्यपेत्येतस्य प्रातिलोम्यं प्राह। निरु० १। ३। ( बोधय ) बोधयति। अत्र [पुरुष]व्यत्ययः। यत् यस्मात् (अग्ने) अग्निः ( यासि ) याति। अत्र पुरुषव्यत्ययः। ( दूत्यम् ) दूतस्य कर्म। दूतस्य भागकर्मणी। अ० ४। ४। १२१ अनेन दूतशब्दात् यत्प्रत्ययः। ( देवैः ) दिव्यैः पदार्थैः सह (आ) समन्तात् ( सत्सि ) दोषान् हिनस्ति। अयं 'विशरणार्थषद्लृधातोः' 'शब्लुकि[1] प्रयोगः, पुरुषव्यत्ययश्च। ( बर्हिषि ) अन्तरिक्षे ।। ४ ।।

अन्वयः—यो[ऽग्ने]ऽग्निर्यद् यस्माद् बर्हिषि देवैः सह दूत्यमायासि समन्तायाति, तानुशतो विबोधय विबोधयति, तेषां दोषान् सत्सि हन्ति, तस्मादेतैरयं विद्यासिद्धये सर्वथा सर्वदा परीक्ष्य संप्रयोजनीयोऽस्ति ।। ४ ।।

भावार्थः—जगदीश्वर आज्ञापयति—अयमग्निर्युष्माकं दूतोऽस्ति। कुतः? हुतान् दिव्यान् परमाणुरूपान् पदार्थानन्तरिक्षे गमयतीत्यतः, उत्तमानां भोगानां प्रापकत्वात्। तस्मात् सर्वैर्मनुष्यैः प्रसिद्धाः प्रसिद्धस्याग्नेर्गुणाः कार्य्यार्थं नित्यं प्रकाशनीया इति ।। ४ ।।

अगले मन्त्र में भौतिक अग्नि के गुणों का उपदेश किया है—

पदार्थान्वयभाषा—यह ( अग्ने ) अग्नि ( यत् ) जिस कारण ( बर्हिषि ) अन्तरिक्ष में ( देवैः ) दिव्य पदार्थों के संयोग से ( दूत्यम् ) दूत के कर्म को ( आयासि ) सब प्रकार से प्राप्त होता है, ( तान् ) उन [(उशतः) इष्ट] दिव्य गुणों को (विबोधय) विदित करानेवाला होता है, और उन पदार्थों के दोषों का (सत्सि) विनाश करता है। इससे सब मनुष्यों को विद्या की सिद्धि के लिये इस अग्नि की सदा ठीक-ठीक परीक्षा करके प्रयोग करना चाहिये ।। ४ ।।

भावार्थ—परमेश्वर आज्ञा देता है कि—हे मनुष्यो! यह अग्नि तुम्हारा दूत है। क्योंकि हवन किये हुए परमाणुरूप पदार्थों को अन्तरिक्ष में पहुंचाता, और उत्तम-उत्तम भोगों की प्राप्ति

1. ख. कोशे 'शब्लुकि' इत्युपलभ्यते। प्रमादान्नष्टमुत्तरत्र।

हेतु है। इससे सब मनुष्यों को अग्नि के जो प्रसिद्ध गुण हैं, उनको संसार में अपने कार्य्यों सिद्धि के लिये अवश्य प्रकाशित करना चाहिये ॥ ४ ॥



पुनः स किं करोतीत्युपदिश्यते—

घृताहवन दीदिवः प्रति ष्म रिषतो दह । अग्ने त्वं रक्षस्विनः ॥ ५ ॥

घृतऽआहवन । दीदिऽवः । प्रति । स्म । रिषतः । दह ॥ अग्ने । त्वम् । रक्षस्विनः ॥ ५ ॥

पदार्थः—(घृताहवन) घृतमाज्यादिकं जलं चासमन्ताज्जुह्वति यस्मिन् सः (दीदिवः) दीव्यति शुभैर्गुणैर्द्रव्याणि प्रकाशयति सः । अयं 'दिवु' धातोः क्वसुप्रत्ययान्तः प्रयोगः । प्रति) वीप्सार्थे (स्म) प्रकारार्थे (रिषतः) हिंसाहेतुदोषान् (दह) दहति । अत्र व्यत्ययः । अग्ने) अग्निर्भौतिकः (त्वम्) स (रक्षस्विनः) रक्षांसि दुष्टस्वभावा निन्दिता मनुष्या विद्यन्ते षु संघातेषु तान् ॥ ५ ॥

अन्वयः—[घृताहवन] घृताहवनो [दीदिवः] दीदिवानग्ने योऽग्नी रक्षस्विनो रिषतो दोषान् शत्रूंश्च प्रति [दह] पुनः पुनर्दहति स्म, सोऽस्माभिः स्वकार्य्येषु नित्यं संप्रयोज्योऽस्ति ॥५॥

भावार्थः—एवं सुगन्ध्यादिगुणयुक्तेन द्रव्येण संयुक्तोऽयमग्निः सर्वान् दुर्गन्धादिदोषान् निवार्य्य सर्वेभ्यः सुखकारी भवतीतीश्वर आह ॥ ५ ॥

फिर उक्त अग्नि क्या करता है, सो अगले मन्त्र में प्रकाशित किया है—

पदार्थ—(घृताहवन) जिसमें घी तथा जल क्रिया सिद्ध होने के लिये छोड़ा जाता है, और जो अपने (दीदिवः) शुभ गुणों से पदार्थों को प्रकाश करनेवाला है, ऐसा जो (अग्ने) अग्नि (रक्षस्विनः) जिन समूहों में राक्षस अर्थात् दुष्ट स्वभाववाले और निन्दा के भरे हुए मनुष्य विद्यमान हैं उनका, तथा जो कि (रिषतः) हिंसा के हेतु दोष और शत्रु हैं उनका, (प्रति दह स्म) अनेक प्रकार से विनाश करता है, हम लोगों को चाहिये कि उस अग्नि को अपने कार्य्यों में नित्य संप्रयुक्त करें ॥ ५ ॥

भावार्थ—जो अग्नि इस प्रकार सुगन्ध्यादि गुणवाले पदार्थों से संयुक्त होकर, सब दुर्गन्ध आदि दोषों को निवारण करके सब के लिये सुखदायक होता है, वह अच्छे प्रकार काम में लाना चाहिये। ईश्वर का यह वचन सब मनुष्यों को मानना उचित है ॥ ५ ॥



स कथं प्रदीप्तो भवति कीदृशश्चेत्युपदिश्यते—

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥ ६ ॥

अग्निना । अग्निः । सम् । इध्यते । कविः । गृहऽपतिः । युवा ॥ हव्यऽवाट् । जुहुऽआस्यः ॥ ६ ॥

पदार्थः—( अग्निना ) व्यापकेन विद्युदाख्येन ( अग्निः ) प्रसिद्धो रूपवान् वहनशीलः पृथिवीस्थः सूर्य्यलोकस्थश्च (सम्) [1]सम्यगर्थे (इध्यते) प्रदीप्यते (कविः) क्रान्तदर्शनः (गृहपतिः) गृहस्य स्थानस्य तत्स्थस्य वा पतिः पालनहेतुः (युवा) यौति मिश्रयति पदार्थैः सह पदार्थान् वियोजयति वा ( हव्यवाट् ) यो [हव्यं] हुतं द्रव्यं देशान्तरं वहति प्रापयति सः ( जुह्वास्यः ) जुहोत्यस्यां सा जुहूर्ज्वाला साऽस्यं मुखं यस्य सः ।। ६ ।।

अन्वयः—मनुष्यैर्यो जुह्वास्यो युवा हव्यवाट् कविर्गृहपतिरग्निरग्निना समिध्यते, स कार्य्य-सिद्धये सदा संप्रयोज्यः ।। ६ ।।

भावार्थः—योऽयं सर्वपदार्थमिश्रो विद्युदाख्योऽग्निरस्ति, तेनैव प्रसिद्धौ सूर्य्याग्नी प्रकाश्येते, पुनरवृष्टौ सन्तौ तद्रूपावेव भवतः । मनुष्यैर्यद्यनयोर्गुणविद्याः सम्यग्गृहीत्वोपकारः क्रियेत, तर्ह्यनेके व्यवहाराः सिद्ध्येयुः, तैरसंख्यातानन्दप्राप्तिः सर्वेभ्यो नित्यं भवतीत्याह जगदीश्वरः ।।६।।

इति द्वाविंशो वर्गः समाप्तः ।।

यह अग्नि कैसे प्रकाशित होता है, और किस प्रकार का है, सो अगले मन्त्र में उपदेश किया है—

पदार्थान्वयभाषा—मनुष्यों को उचित है कि ( जुह्वास्यः ) जिसका मुख ज्वाला है, और जो (युवा) पदार्थों के साथ पदार्थों को मिलाने और उनको पृथक्-पृथक् करनेवाला, (हव्यवाट्) होम किये हुए पदार्थों को देशान्तरों में पहुंचानेवाला, और (कविः) क्रान्तदर्शन अर्थात् जिसमें स्थिरता के साथ दृष्टि नहीं पड़ती, तथा जो (गृहपतिः) स्थान तथा उनमें रहनेवालों का पालन करनेवाला यह ( अग्निः ) प्रत्यक्ष रूपवान्, पदार्थों को जलाने, पृथिवी और सूर्य्यलोक में ठहरनेवाला अग्नि (अग्निना) बिजुली से ( समिध्यते ) अच्छी प्रकार प्रकाशित होता है, वह बहुत कामों को सिद्ध करने के लिये सदा प्रयुक्त करना चाहिये ।। ६ ।।

भावार्थ—जो यह सब पदार्थों में मिला हुआ विद्युद्रूप अग्नि कहाता है, उसी से प्रत्यक्षयह सूर्य्यलोक और भौतिक अग्नि प्रकाशित होते हैं । और फिर जिसमें छिपे हुए विद्युद्रूप होके रहते हैं । जो इन दोनों के गुण और विद्या को ग्रहण करके मनुष्य लोग उपकार लेवें, तो उनसे अनेक व्यवहार सिद्ध होकर उनको अत्यन्त आनन्द की प्राप्ति होती है, यह जगदीश्वर का वचन है ।।६।।

यह बाईसवां वर्ग समाप्त हुआ ।।



अथाग्निशब्देनेश्वरभौतिकार्थावुपदिश्येते—

कविमग्निमुपस्तुहि सत्यधर्माणमध्वरे । देवममीवचातनम् ।। ७ ।।

कविम् । अग्निम् । उप । स्तुहि । सत्यऽधर्माणम् । अध्वरे ।। देवम् । अमीवऽचातनम् ।। ७ ।।

पदार्थः—( कविम् ) सर्वेषां बुद्धीनां सर्वज्ञतया क्रमितारमीश्वरं, सर्वेषां दृश्यानां

१. वै० य० मुद्रितेषु संस्करणेषु 'सम्यगर्थम्' अपपाठः ।

येतारं भौतिकं वा ( अग्निम् ) ज्ञातारं, दाहकं वा ( उप ) सामीप्येऽर्थे ( स्तुहि ) प्रकाशय त्यधर्माणम् ) सत्या नाशरहिता धर्मा यस्य तम् ( अध्वरे ) उपासनीये कर्त्तव्ये वा यज्ञे वम् ) सुखदातारम् ( अमीवचातनम् ) अमीवानज्ञानादीन् ज्वरादींश्च रोगान् चातयति स्ति तम् ।। ७ ।।

अन्वयः—हे मनुष्य ! त्वमध्वरे सत्यधर्माणममीवचातनं कविं देवमग्निं परमेश्वरं भौतिकं स्तुहि ।। ७ ।।

अत्र श्लेषालङ्कारः ।

भावार्थः—मनुष्यैः सत्यविद्यया धर्मप्राप्तये सत्यशिल्पविद्यासिद्धये चाग्निरीश्वरो भौतिको तत्तद्गुणैः प्रकाशयितव्यः । यतः प्राणिनां रोगनिवारणेन सुखान्युपगतानि स्युः ।। ७ ।।

अगले मन्त्र में अग्नि शब्द से ईश्वर और भौतिक अग्नि का उपदेश किया है—

पदार्थान्वयभाषा—हे मनुष्य ! तू ( अध्वरे ) उपासना करने योग्य व्यवहार में (सत्य-र्णाणम् ) जिसके धर्म नित्य और सनातन हैं, जो ( अमीवचातनम् ) अज्ञान आदि दोषों का करने, तथा (कविम्) सब की बुद्धियों को अपने सर्वज्ञपन से प्राप्त होनेवाला, ( देवम् ) सुखों का देनेवाला ( अग्निम् ) सर्वज्ञ ईश्वर है, उसको ( उपस्तुहि ) मनुष्यों के समीप शित कर ।। १ ।।

हे मनुष्य ! तू (अध्वरे) करने योग्य यज्ञ में (सत्यधर्माणम्) जो कि अविनाशी गुणवाला ( अमीवचातनम् ) ज्वरादि रोगों का विनाश करने, तथा ( कविम् ) सब स्थूल पदार्थों को खानेवाला, और (देवम्) सब सुखों का दाता (अग्निम्) भौतिक अग्नि है, उसको (उपस्तुहि) के समीप सदा प्रकाशित कर ।। २ ।। ७ ।।

इस मन्त्र में श्लेषालङ्कार है ।

भावार्थ—मनुष्यों को सत्यविद्या से धर्म की प्राप्ति करने, तथा सत्य शिल्पविद्या की सिद्धि लिये ईश्वर और भौतिक अग्नि का उन-उनके गुणों द्वारा प्रकाश करना चाहिये । जिससे णियों को रोग आदि के विनाशपूर्वक सब सुखों की प्राप्ति यथावत् हो ।। ७ ।।



पुनस्तावेवोपदिश्येते—

यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति । तस्य स्म प्राविता भव ।। ८ ।।

यः । त्वाम् । अग्ने । हविःऽपतिः । दूतम् । देव । सपर्यति ।। तस्य । स्म । प्रऽअविता । भव ।।८।।

पदार्थः—(यः) मनुष्यः (त्वाम्) तं वा (अग्ने) विज्ञानस्वरूप ! अग्निं वा । अत्र सर्वत्र 'अर्थाद्विभक्तेर्विपरिणामः'[1] इति परिभाषया साधुत्वं विज्ञेयम् । (हविष्पतिः) हविषां दातुं ग्रहीतुं

१. द्र०—'अर्थाद् विभक्तिविपरिणामो भविष्यति' (महा० १ । ३ । ९) । अयमेवार्थः परिभाषा-व्याख्यातृभिर्बहुभिः स्वरूपशब्दभेदेन परिभाषारूपेण संगृहीतः ।

योग्यानां द्रव्याणां गुणानां वा पतिः पालकः कर्मानुष्ठाता (दूतम्) दवति प्रापयति सुखज्ञाने 'यः, तम् ( देव ) सर्वप्रकाशकेश्वर ! प्रकाशवाहयुक्तमग्निं वा ( सपर्य्यति ) सेवते। सपर्य्यतीति परिचरणकर्मसु पठितम्। निघं० ३।५। ( तस्य ) सेवकस्य ( स्म ) स्पष्टार्थे ( प्राविता ) प्रकृष्टतया ज्ञाता सुखप्रापको वा (भव) भवति वा ॥ ८ ॥

**अन्वयः**—हे देवाग्ने ! यो हविष्पतिर्मनुष्यो दूतं त्वां सपर्य्यति, तस्य त्वं प्राविता भव स्म, इत्येकोऽन्वयः ॥

यो हविष्पतिर्मनुष्यस्त्वां तं [देव] देवं दूतम[ग्नेऽ]ग्निं सपर्य्यति, तस्यायं प्राविता [भव] भवति स्म, [इति द्वितीयः] ॥ ८ ॥

**अत्र श्लेषालङ्कारः। दूतशब्देन ज्ञानप्रापकत्वमीश्वरे, देशान्तरे द्रव्ययानप्रापणं च भौतिके मत्वाऽस्य प्रयोगः कृतोऽस्ति।**

**भावार्थः**—ये मनुष्या आस्तिका भूत्वा हृदये सर्वसाक्षिणं परमेश्वरं ध्यायन्ति, त एवेश्वरेण रक्षिताः पापानि त्यक्त्वा धर्मात्मानः सन्तः सुखं प्राप्नुवन्ति। ये युक्त्या यानयन्त्रादिष्वग्निं प्रयुञ्जते, तेऽपि युद्धादिषु कार्य्येषु रक्षिता रक्षकाश्च भवन्तीति ॥ ८ ॥

फिर भी अगले मन्त्र में ईश्वर और भौतिक अग्नि का उपदेश किया है—

**पदार्थान्वयभाषा**—हे (देव) सबके प्रकाश करनेवाले ( अग्ने ) विज्ञानस्वरूप जगदीश्वर ! [(यः)] जो (हविष्पतिः) देने लेने योग्य वस्तुओं वा गुणों का पालन करनेवाला मनुष्य (दूतम्) ज्ञान देनेवाले आपका ( सपर्य्यति ) सेवन करता है, ( तस्य ) उस सेवक मनुष्य के आप ( प्राविता ) अच्छी प्रकार जाननेवाले ( भव ) हों ॥ १ ॥

(यः) जो (हविष्पतिः) देने लेने योग्य पदार्थों की रक्षा करनेवाला मनुष्य [(त्वाम्)] उस ( देव ) प्रकाश और दाहगुणवाले, [( दूतम् ) पदार्थों को जहां-तहां पहुंचाकर सुख देनेवाले] ( अग्ने ) भौतिक अग्नि का ( सपर्य्यति ) सेवन करता है, ( तस्य ) उस मनुष्य को वह अग्नि (प्राविता) नाना प्रकार के सुखों का देनेवाला ( भव ) होता है ॥ २ ॥ ८ ॥

इस मन्त्र में श्लेषालङ्कार है। दूत शब्द का अर्थ दो पक्ष में समझना चाहिये, अर्थात् सब मनुष्यों में ज्ञान का पहुंचानेवाला ईश्वर पक्ष में, तथा एक देश से दूसरे देश मे पदार्थों का पहुंचानेवाला भौतिक पक्ष में ग्रहण किया है।

**भावार्थ**—जो आस्तिक अर्थात् परमेश्वर में विश्वास रखनेवाले मनुष्य अपने हृदय में सर्वसाक्षी [परमेश्वर] का ध्यान करते हैं, वे ही पुरुष ईश्वर से रक्षा को प्राप्त होकर पापों से बचकर धर्मात्मा हुए अत्यन्त सुख को प्राप्त होते हैं। तथा जो युक्ति से विमान आदि रथों में भौतिक अग्नि को संयुक्त करते हैं, वे भी युद्धादिकों में रक्षा को प्राप्त होकर औरों की रक्षा करनेवाले होते हैं ॥ ८ ॥



१. वै० य० मुद्रितेषु संस्करणेषु 'येन तम्' इत्यनन्वितः पाठः। द्र०—पूर्वत्र ऋ० १।१२।१ व्याख्यानं तट्टिप्पणी च (पृष्ठ ६०१)।

पुनस्तावेवोपदिश्येते—

यो अ॒ग्निं दे॒ववी॑तये ह॒विष्माँ॑ आ॒विवा॑सति । तस्मै॑ पावक मृळय ॥ ९ ॥

यः । अ॒ग्निम् । दे॒वऽवी॑तये । ह॒विष्मा॑न् । आ॒ऽविवा॑सति ॥ तस्मै॑ । पा॒व॒क॒ । मृ॒ळ॒य॒ ॥ ९ ॥

**पदार्थः**—( यः ) मनुष्यः ( अग्निम् ) सर्वसुखप्रापकमीश्वरं सुखहेतुं भौतिकं वा ( देव-तये ) देवानां दिव्यानां गुणानां भोगानां च वीतिर्व्याप्तिस्तस्यै ( हविष्मान् ) हवींष्युत्तमानि याणि कर्माणि वा विद्यन्ते यस्य सः । अत्र प्रशंसार्थे मतुप् । ( आविवासति ) समन्तात् ते । विवासतीति परिचरणकर्मसु पठितम् । निघं० ३ । ५ । ( तस्मै ) सेवकम् । अत्र र्मणि चतुर्थी । (पावक) पुनाति पवित्रतां करोति तत्संबुद्धावीश्वर ! पवित्रताहेतुरग्निर्वा (मृडय) खय सुखयति वा ॥ ९ ॥

**अन्वयः**—हे पावक ! यो हविष्मान् मनुष्यो देववीतये त्वामग्निमाविवासति, तस्मै त्वं डय, इत्येकः ॥

यो हविष्मान् मनुष्यो देववीतय इममग्निमाविवासति, तस्मा अयं [पावक] पावकोऽग्नि-मृंडय] मृडयति, इति द्वितीयः ॥ ९ ॥

अत्र श्लेषालङ्कारः ।

**भावार्थः**—ये मनुष्याः सत्येन भावेन कर्मणा विज्ञानेन च परमेश्वरं सेवन्ते, ते दिव्यगणान् वित्राणि कर्माणि कृत्वा सुखानि च प्राप्नुवन्ति । येनायं[1] दिव्यगुणप्रकाशकोऽग्नी रचितस्तस्मान नुष्यैर्दिव्या उपकारा ग्राह्या इतीश्वरोपदेशः ॥ ९ ॥

फिर भी उक्त दोनों पदार्थों ही का प्रकाश किया है—

**पदार्थान्वयभाषा**—हे (पावक) पवित्र करनेवाले ईश्वर ! (यः) जो ( हविष्मान् ) उत्तम-त्तम पदार्थों वा कर्मों का करनेवाला मनुष्य(देववीतये)उत्तम-उत्तम गुणों और भोगों की परिपूर्णता लिये ( अग्निम् ) सब सुखों को देनेवाले आपको ( आविवासति ) अच्छी प्रकार सेवन करता ( तस्मै ) उस सेवन करनेवाले मनुष्य को आप (मृडय) सब प्रकार सुखी कीजिये । इत्येकः ॥

(यः) जो(हविष्मान्)उत्तम पदार्थवाला मनुष्य (देववीतये)उत्तम भोगों की प्राप्ति के लिये (अग्निम्) सुख के हेतु भौतिक अग्नि का (आविवासति) अच्छी प्रकार सेवन करता है, ( तस्मै ) उसको यह (पावक) पवित्र करनेवाला अग्नि(मृडय)सुखयुक्त करता है । इति द्वितीयः ॥ ९ ॥

इस मन्त्र में श्लेषालङ्कार है ।

**भावार्थ**—जो मनुष्य अपने सत्यभाव कर्म और विज्ञान से परमेश्वर का सेवन करते हैं, वे दिव्य गुणों और पवित्र कर्मों द्वारा उत्तम-उत्तम सुखों को प्राप्त होते हैं । तथा जिससे यह दिव्य गुणों का प्रकाश करनेवाला अग्नि रचा है, उस अग्नि से मनुष्यों को उत्तम-उत्तम उपकार लेने चाहियें । इस प्रकार ईश्वर का उपदेश है ॥ ९ ॥



१. 'यतोऽयं' शुद्धः पाठः स्यात् ।

पुनरेतावुपदिश्येते—

स नः पावक दीदिवोऽग्ने देवाँ इहावह । उप यज्ञं हविश्च नः ॥ १० ॥

सः । नः । पावक । दीदिऽवः । अग्ने । देवान् । इह । आ । वह ॥ उप । यज्ञम् । हविः । च । नः ॥ १० ॥

पदार्थः—(सः) जगदीश्वरो भौतिको वा (नः) अस्मभ्यम् (पावक) पवित्रकर्त्तः ! शुद्धिहेतुर्वा (दीदिवः) स्वसामर्थ्येन देदीप्यमान ! दीप्तिमान् वा (अग्ने) सर्वप्रापक ! प्राप्तिहेतुर्वा (देवान्) विदुषो दिव्यगुणान् वा (इह) अस्मिन् संसारेऽस्मत्संनिधौ (आ) समन्तात् (वह) प्रापय, प्रापयति वा । अत्र पक्षे [पुरुष]व्यत्ययः । (उप) सामीप्ये (यज्ञम्) पूर्वोक्तं त्रिविधम् (हविः) दातुमादातुमर्हम् (च) समुच्चये (नः) अस्माकम् ॥ १० ॥

अन्वयः—हे दीदिवः पावकाग्ने ! स त्वं [नोऽ]स्मभ्यमिह देवानावह, नोऽस्माकं यज्ञं हविश्चोपावह, इत्येकः ॥

यो [दीदिवः] दीदिवान् [पावक] पावकोऽ[ग्नेऽ]ग्निः सम्यक् प्रयुक्तः सन्नोऽस्मभ्यमिह देवाना[वहा]वहति, स नोऽस्माकं यज्ञं हविश्च प्राप्य सुखान्यु[पा उ]पावहति, इति द्वितीयः ॥१०॥

अतोऽग्रे (१) प्रथमाङ्केनाद्यान्वयार्थो (२) द्वितीयेन द्वितीयार्थश्च सर्वत्र वेद्यः ॥

अत्र श्लेषालङ्कारः ।

भावार्थः—यस्य प्राणिनः कस्यचित्पदार्थस्य प्राप्तीच्छा जायते, तत्सिद्धये परमेश्वरः प्रार्थ्यते पुरुषार्थश्च क्रियते । यादृशा अस्मिन् वेदे जगदीश्वरस्य गुणस्वभावा अन्येषां च प्रतिपादिता दृश्यन्ते, मनुष्यैस्तदनुकूलकर्मानुष्ठानेनाग्न्यादिपदार्थगुणान् विदित्वाऽनेकविधा व्यवहारसिद्धिः कार्य्येति ॥१०॥

फिर भी अगले मन्त्र में इन्हीं दोनों का उपदेश किया है—

पदार्थान्वयभाषा—हे ( दीदिवः ) अपने सामर्थ्य से प्रकाशवान्, ( पावक ) पवित्र करने तथा ( अग्ने ) सब पदार्थों को प्राप्त करानेवाले ( सः ) जगदीश्वर ! आप ( नः ) हम लोगों के सुख के लिये (इह) इस संसार में ( देवान् ) विद्वानों को ( आवह ) प्राप्त कराइये । तथा (नः) हमारे ( यज्ञम् ) पूर्वोक्त तीन प्रकार के यज्ञ, और ( हविः ) देने लेने योग्य पदार्थों को ( उप ) हमारे समीप प्राप्त कराइये ॥ १ ॥

जो ( दीदिवः ) प्रकाशमान तथा ( पावक ) शुद्धि का हेतु ( अग्ने ) भौतिक अग्नि अच्छी प्रकार कलायन्त्रों में युक्त किया हुआ ( नः ) हम लोगों के सुख के लिये ( इह ) हमारे समीप ( देवान् ) दिव्य गुणों को ( आवह ) प्राप्त कराता है, [ (सः) ] वह (नः) हमारे तीन प्रकार के पूर्वोक्त ( यज्ञम् ) यज्ञों को, तथा (हविः) उक्त पदार्थों को प्राप्त होकर सुखों को ( उप ) हमारे समीप प्राप्त कराता रहता है ॥ २ ॥ १० ॥

इसके आगे सर्वत्र एक ( १ ) अङ्क से पहले अन्वय का अर्थ, और दूसरे ( २ ) अङ्क से
।रे अन्वय का अर्थ जानना।

इस मन्त्र में श्लेषालङ्कार है।

**भावार्थ**—जिस प्राणी को किसी पदार्थ की [ प्राप्ति की ] इच्छा उत्पन्न हो, वह अपनी ।मसिद्धि के लिये परमेश्वर की प्रार्थना और पुरुषार्थ करे। इस वेद में जगदीश्वर तथा अन्य दार्थों के जैसे गुण स्वभाव बताये हैं, मनुष्यों को उनके अनुकूल कर्म के अनुष्ठान से अग्नि आदि दार्थों के गुणों को जान करके अनेक प्रकार की व्यवहार-सिद्धि करनी चाहिये ॥ १० ॥



पुनरेतावुपदिश्येते—

स नः स्तवान आ भर गायत्रेण नवीयसा। रयिं वीरवतीमिषम् ॥ ११ ॥

सः। नः। स्तवानः। आ। भर। गायत्रेण। नवीयसा॥ रयिम्। वीरऽवतीम्। इषम्॥ ११॥

**पदार्थः**—(सः) पूर्वोक्तः (नः) अस्मभ्यम् (स्तवान) स्तूयमानः गृहीतगुणो वा। अत्र सम्यानच् स्तुवः। उ० २। ८९ इति बाहुलकात् समुपपदाभावेऽपि कर्मण्यौणादिक आनच् प्रत्ययः[1]। अत्र सायणाचार्येण लटः स्थाने [कर्तरि] शानचमाश्रित्य [कर्मणि] स्तूयमानमिति व्याख्यानं कृतमत इदमशुद्धम्[2]। (आ) समन्तात् (भर) धारय धारयति वा (गायत्रेण) गायत्री छन्दः आविर्यस्य प्रगाथस्य[3] तेन। सोऽस्यादिरिति च्छन्दसः प्रगाथेषु। अ० ४। २। ५४ इति गायत्री-

१. आनचि चित्वादन्तोदात्तत्वे प्राप्ते 'वृषादीनां च' (अ० ६। १। १९७) इति वृषादेराकृतिगणत्वादाद्युदात्तत्वम्। ऋ० १। ३१। ८ मन्त्रव्याख्याने सायणोऽप्यानचमुक्त्वा वृषादित्वादन्तोदात्तत्वमाह।

२. सायणाचार्य इह 'स्तवानः' पदस्याद्युदात्तत्वसिद्धये विविधां कल्पनां कृतवान्। तथाहि—'ष्टुञ् स्तुतौ ······स्वरितञितः इत्यात्मनेपदम्, लटः शानच्, कर्तरि शप्, बहुलं छन्दसि इति लुगभावः, गुणावादेशौ, आने मुक् इति मुक् न भवति, अनित्यमागमशासनम्······अदुपदेशात् शपः परत्वात् लसार्वधातुकानुदात्तत्वं, धातुस्वर एव शिष्यते' इति। अस्मिन् व्याख्याने कर्त्तरि कारके स्वरितञितः इत्यादिनाऽऽत्मनेपदमुक्त्वा कर्तरि शपं च विधाय 'स्तूयमानम्' इति कर्मणि पदार्थप्रदर्शनं घोटकारूढस्य घोटकविस्मृतिरूपं मुख्यं दूषणम्। इदमेव च एतद्ग्रन्थकारेणेह प्रदर्शितम्। अपरो दोषः—स्ववचनविरोधरूपः—ऋ० १। ३१। ८ मन्त्रव्याख्याने सायणाचार्यः 'सम्यानच् स्तुवः' इत्युणादिसूत्रेणानचं विहितवान्। अर्थस्तत्रापि 'स्तूयमानः' इत्येव निदर्शितवान्। तृतीयो दोषः—'स्तवान'शब्द आद्युदात्तोऽन्तोदात्तश्चोभयथा वेदे प्रयुज्यते। सायणाचार्येण स्वरभेदेऽपि सर्वत्र समान एव 'स्तूयमान'रूपोऽर्थो निर्दिष्टः। स्वरभेदेऽर्थभेदेन भाव्यमिति स्वरज्ञानां वैदिकानां राद्धान्तः।

३. प्रगाथशब्दः छन्दःशास्त्रेषु विशिष्टछन्दःसमूहानां वाचकः। गायत्रसंज्ञकस्य प्रगाथस्य द्वौ भेदौ स्तः। एको—यत्र बृहती छन्दस्का द्वितीया ऋग्भवति। अयं गायत्रबार्हतप्रगाथ उच्यते (द्र०—ऋक्प्राति० १८। ५)। द्वितीयो—यत्र द्वितीया ऋक् ककुप्छन्दस्का भवति। अयं गायत्रकाकुभप्रगाथ उच्यते ( द्र०—ऋक्प्राति० १८। ६ )। एतद्भाष्यकृता 'गायत्र'शब्दो नेह छन्दःशास्त्रविहित-प्रगाथसंज्ञाविशेषरूपेण प्रयुक्तः,

शब्दावण्। (नवीयसा) अतिशयितेन नवीनेन[1] मन्त्रपाठगानयुक्तेन स्तवनेन (रयिम्) विद्या-चक्रवर्त्तिराज्यजन्यं धनम् (वीरवतीम्) प्रशस्ता वीरा विद्यन्ते यस्यां ताम्। अत्र प्रशंसायां मतुप्। (इषम्) इष्यते या सत्क्रिया ताम्। अत्र कृतो बहुलम् [अ० ३।३।११३ वा०] इति कर्मणि क्विप्॥ ११॥

अन्वयः—हे भगवन्! स त्वं नवीयसा गायत्रेण स्तवानः सन् नो रयिं वीरवतीमिषं चाभर, इत्येकः॥

स भौतिकोऽग्निर्नवीयसा गायत्रेणास्माभिः स्तवानो गृहीतगुणो [नोऽस्मभ्यं] रयिं वीरवती-मिषं च [भर]भरति, इति द्वितीयः॥ ११॥

अत्र श्लेषालङ्कारः।

भावार्थः—पूर्वस्मान्मन्त्राच्चकारोऽनुकृष्यते। तथा प्रतिजनं नवीनं नवीनं वेदाध्ययनं तज्जन्योच्चारणक्रिया च प्रवर्त्तते, तस्मान्नवीयसेत्युक्तम्।

यैर्धर्मात्मभिर्मनुष्यैर्यथावच्छब्दार्थसम्बन्धपुरःसरेण वेदस्याध्ययनेन तदुक्तकर्मणा च प्रीतः संपादितो जगदीश्वरः, [स तेभ्य] उत्तमानि विद्याविधनानि शूरत्वादिगुणान् सतीमिच्छां च ददाति[2]। [3]एतद्युक्तमनुष्या अग्न्यादिभ्यः सर्वपदार्थेभ्यो नानाविधाः क्रियाः संसेध्य बहूनि सुखानि प्रकाशयन्ति॥ ११॥

फिर भी अगले मन्त्र में उन्हीं दोनों का उपदेश किया है—

पदार्थान्वयभाषा—हे भगवन् (सः) जगदीश्वर! आप (नवीयसा) अच्छी प्रकार मन्त्रों के नवीन[4] गानयुक्त पाठ तथा (गायत्रेण) गायत्री छन्द [आदि में है जिनके, ऐसे छन्द]वाले प्रगाथों (=मन्त्रसमूहों) से (स्तवानः) स्तुति को प्राप्त हुए (नः) हमारे लिये (रयिम्) विद्या और चक्रवर्ति राज्य से उत्पन्न होनेवाले धन, (च) तथा (वीरवतीम्) जिसमें अच्छे-अच्छे वीर तथा विद्वान् हों, उस (इषम्) सज्जनों के इच्छा करने योग्य उत्तम क्रिया को (आभर) अच्छी प्रकार धारण कीजिये॥ १॥

(सः) उक्त भौतिक अग्नि (नवीयसा) अच्छी प्रकार मन्त्रों के नवीन-नवीन गानयुक्त पाठ और स्तुति तथा (गायत्रेण) गायत्री छन्द [आदि में है जिनके, ऐसे छन्द] वाले प्रगाथों (=मन्त्रसमूहों) से (स्तवानः) गुणों के साथ ग्रहण किया हुआ [(नः) हमारे लिये] (रयिम्)

---

अपितु गायत्रीछन्दस्का ऋग् यस्य मन्त्रसमूहस्यादौ प्रयुज्यते स सामान्येनेह गृह्यत इति तदभिप्रायो द्रष्टव्यः। छन्दोविचितिकाराणां प्रगाथानां विस्तरोऽस्मदीयायां 'वैदिकछन्दोमीमांसायां' प्रगाथनाम्नि द्वादशाध्याये द्रष्टव्यः।

१. अस्याभिप्रायो भाष्यकृता भावार्थे विशदीकृतः, स तत एव द्रष्टव्यः।

२. इच्छया स ददातिरत्र पूरणार्थको द्रष्टव्यः—सतीं शुद्धामिच्छां पूरयतीति भावः।

३. इदं वाक्यं ख.कोश उपलभ्यते। ग.कोशप्रतिलिपिकर्त्रा त्यक्तम्, अत एव मुद्रिते नोपलभ्यते। भाषार्थस्त्वस्य दृश्यते।

४. इसका भाव भावार्थ में स्पष्ट किया है।

प्रकार का धन ( च )[1] और ( वीरवतीम् ) उत्तम वीरों से युक्त (इषम्) उक्त गुणवाली क्रिया को ( आभर ) अच्छी प्रकार धारण कराता है ।।२ ।। ११ ।।

इस मन्त्र में श्लेषालङ्कार है। पिछले मन्त्र से 'चकार' की अनुवृत्ति है।

भावार्थ—हरएक मनुष्य के प्रति वेद का नवीन-नवीन अध्ययन, तथा वेद की नवीन-नवीन रणक्रिया होती है, इस कारण 'नवीयसा' इस पद का ग्रहण किया है।

जिन धर्मात्मा मनुष्यों ने यथावत् शब्दार्थपूर्वक वेद के पढ़ने और वेदोक्त कर्मों के अनुष्ठान गदीश्वर को प्रसन्न किया है, उन मनुष्यों को वह उत्तम-उत्तम विद्या आदि धन, शूरता आदि तथा श्रेष्ठ कामना को देता है[2]। जो वेद के पढ़ने और परमेश्वर के सेवन से युक्त मनुष्य [ अग्न्यादि पदार्थों से नाना प्रकार की क्रियाओं को सिद्ध करके ] अनेक सुखों का प्रकाश हैं ।। ११ ।।



पुनरेतद्गुणा[3] उपदिश्यन्ते—

अग्ने॑ शु॒क्रेण॑ शो॒चिषा॒ विश्वा॑भिर्दे॒वहू॑तिभिः । इ॒मं स्तोमं॑ जुषस्व नः ।। १२ ।।

अग्ने॑ । शु॒क्रेण॑ । शो॒चिषा॑ । विश्वा॑भिः । दे॒वहू॑तिऽभिः ।। इ॒मम् । स्तोम॑म् । जु॒ष॒स्व॒ । नः॒ ।। १२ ।।

पदार्थः—(अग्ने) प्रकाशमयेश्वर ! भौतिको वा (शुक्रेण) अनन्तवीर्य्येण सह, भास्वरेण (शोचिषा) शुद्धिकारकेण प्रकाशेन (विश्वाभिः) सर्वाभिः (देवहूतिभिः) विदुषां देवानां[4] वाग्भिराह्वानान्याहूतयस्ताभिः (इमम्) प्रत्यक्षम् (स्तोमम्) स्तुतिसमूहं, प्रशंसनीयकलाकौशलं (जुषस्व) प्रीत्या सेवस्व, जुषते वा (नः) अस्माकम् ।। १२ ।।

अन्वयः—हे अग्ने जगदीश्वर ! त्वं कृपया शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिर्न इमं मं जुषस्व, इत्याद्यः ।।

अयम[ग्नेऽ]ग्निर्विश्वाभिर्देवहूतिभिः सम्यक् साधितः सन् शुक्रेण शोचिषा न इमं स्तोमं षस्व] जुषते, इति द्वितीयः ।। १२ ।।

अत्र श्लेषालङ्कारः ।

भावार्थः—दिव्यानां विद्यानां प्रकाशकत्वाद् देवशब्देन वेदा गृह्यन्ते । यदा मनुष्यैः सत्य-नेन वेदवाण्या जगदीश्वरः स्तूयते, तदाऽयं प्रीतः संस्तान् विद्यादानेन प्रीणयति । अयं भौतिको-नरपि विद्यया कलाकौशलेन संप्रयोजित इन्धनादिस्थः सन् सर्वं क्रियाकाण्डं सेवते ।। १२ ।।

---

१. 'च' पद पूर्वमन्त्र से अनुवर्त्तमान है ।

२. इच्छा अर्थ में देता है, अर्थात् पूर्ण करता है ।

३. एतद्गुणाः=पूर्वोक्तयोरीश्वरभौतिकयोरग्न्योः ।

४. देव शब्दस्य वेदरूपार्थनिर्देशाय भावार्थो द्रष्टव्यः ।

**अस्य द्वादशसूक्तार्थस्याग्न्यर्थयोजनेनैकादशसूक्तार्थेन सह सङ्गतिरस्तीति बोध्यम्।**[1]

**इदमपि सूक्तं सायणाचार्य्यादिभिर्यूरोपवासिभिर्विलासनादिभिश्चान्यथैव व्याख्यातम् ॥१२॥**

**इत्याद्ये मण्डले द्वादशं सूक्तं त्रयोविंशो वर्गश्च समाप्तः ॥**

फिर भी अगले मन्त्र में उन्हीं दोनों के गुणों[2] का उपदेश किया है—

**पदार्थान्वयभाषा**—हे ( अग्ने ) प्रकाशमय ईश्वर ! आप कृपा करके ( शुक्रेण ) अनन्त-वीर्य के साथ ( शोचिषा ) शुद्धि करनेवाले प्रकाश, तथा ( विश्वाभिः ) सब ( देवहूतिभिः ) विद्वानों और वेदों[3] की वाणियों से सब प्राणियों के लिये ( नः ) हमारे ( इमम् ) इस प्रत्यक्ष ( स्तोमम् ) स्तुतिसमूह को ( जुषस्व ) प्रीति के साथ सेवन कीजिये ॥ १ ॥

यह ( अग्ने ) भौतिक अग्नि ( विश्वाभिः ) सब ( देवहूतिभिः ) विद्वान् तथा वेदों की वाणियों से अच्छी प्रकार सिद्ध किया हुआ ( शुक्रेण ) अपनी कान्ति वा ( शोचिषा ) पवित्र करनेवाले प्रकाश से (नः) हमारे (इमम्) इस (स्तोमम्) प्रशंसा करने योग्य कला की कुशलता को ( जुषस्व ) सेवन करता है ॥ २ ॥ १२ ॥

इस मन्त्र में श्लेषालङ्कार है।

**भावार्थ**—दिव्य विद्याओं के प्रकाशक होने से देव शब्द से वेदों का ग्रहण किया है। जब मनुष्य लोग सत्य प्रेम के साथ वेदवाणी से जगदीश्वर की स्तुति करते हैं, तब वह परमेश्वर उन मनुष्यों को विद्यादान से प्रसन्न करता है। यह भौतिक अग्नि भी विद्या से कलाकुशलता में युक्त किया हुआ इन्धन आदि पदार्थों में ठहर कर सब क्रियाकाण्ड का सेवन करता है ॥ १२ ॥

इस बारहवें सूक्त के अर्थ की अग्नि शब्द के अर्थ के योग से ग्यारहवें सूक्त के अर्थ से सङ्गति जाननी चाहिये ॥

यह भी सूक्त **सायणाचार्य्य** आदि आर्य्यावर्तवासी, तथा यूरोपवासी **विलसन** आदि ने विपरीतता से वर्णन किया है ॥ १२ ॥

यह बारहवां सूक्त, और तेईसवां वर्ग समाप्त हुआ ॥



अथास्य द्वादशर्चस्य त्रयोदशसूक्तस्य मेधातिथिः काण्व ऋषिः। १ इध्मः[4] समिद्धोऽग्निः; २ तनूनपात्; ३ नराशंसः; ४ इडः; ५ बर्हिः; ६ देवीर्द्वारः; ७ उषासानक्ता;

---

१. वै० य० मुद्रितेषु संस्करणेषु '०योजनैकादश०' इत्यपपाठः।

२. वै० य० मुद्रित संस्करण १, २ में 'उन्हीं देवों का' पाठ छपा है। संस्करण ३, ४ में 'इन्हीं के गुणों का'।

३. देव शब्द के 'वेद' अर्थ के लिये भावार्थ देखें।

४. वै० य० मुद्रितेषु संस्करणेषु देवतानिर्देशेन सह मन्त्रसंख्या न निर्दिश्यते। सा चास्माभिरिह प्रवर्धिता।

दैव्यौ होतारौ प्रचेतसौ; ९ सरस्वतीडाभारत्यस्तिस्रो देव्यः; १० त्वष्टा; ११ वनस्पतिः; १२ स्वाहाकृतयश्च द्वादश[1] देवताः । गायत्री[2] छन्दः । षड्जः स्वरः ॥

तत्र तावत् परमेश्वरभौतिकाग्न्योर्गुणा उपदिश्यन्ते—

सुसमिद्धो न आ वह देवाँ अग्ने हविष्मते । होतः पावक यक्षि च ॥ १ ॥

सुऽसमिद्धः । नः । आ । वह । देवान् । अग्ने । हविष्मते ॥ होतरिति । पावक । यक्षि । च ॥ १ ॥

पदार्थः—( सुसमिद्धः ) सम्यक् प्रदीपितः ( नः ) अस्मभ्यम् ( आ ) समन्तात् ( वह ) प्रापयसि, वहति प्रापयति वा । अत्र पक्षान्तरे पुरुषव्यत्ययः । (देवान्) दिव्यपदार्थान् विश्वेश्वर ! भौतिको वा (हविष्मते) बहूनि हवींषि विद्यन्ते यस्य तस्मै विदुषे । अत्र मतुप् । ( होतः ) दातः ! आदाता वा ( पावक ) पवित्रकारक ! पवित्रताहेतुर्वा यजामि । अत्राडभावो लुङ आत्मनेपद उत्तमपुरुषस्यैकवचने प्रयोगो लडर्थे लुङ् च[3] । समुच्चये ॥ १ ॥

अन्वयः—हे होतः पावकाग्ने विश्वेश्वर ! यतः सुसमिद्धस्त्वं कृपया नोऽस्मभ्यं हविष्मते च नावह वहसि प्रापयसि, अतोऽहं भवन्तं नित्यं यक्षि यजामि, इत्येकः ॥

यतोऽयं [पावक] पावको [होतो] होता सुसमिद्धोऽ[ग्नेऽ]ग्निर्नोऽस्मभ्यं हविष्मते च ना[वहा]वहति समन्तात् प्रापयति, तस्मादेतमहं नित्यं यक्षि यजामि सङ्गतं करोमि, द्वितीयः ॥ १ ॥

अत्र श्लेषालङ्कारः ।

भावार्थः—[4]यो मनुष्यो बहुविधां सामग्रीं संगृह्य यानादीनां वोढारमग्निं प्रयुङ्क्ते, तस्मै स वेधसुखसम्पादनहेतुर्भवतीति ॥ १ ॥

---

१. यथाक्रममिति शेषः । इमा द्वादश देवता याज्ञिकपक्षानुरोधेन पूर्वाचार्यैरुक्ताः । एतासाम् 'आप्रियः' नामधेयम् । यास्क आप्रीणामिध्मादिदेवतानां व्याख्यानं नैरुक्तयाज्ञिकोभयविधमतसंग्रहेण कृतवान् । नैरुक्तानां मते इमा आप्रियो देवता अग्निरेव इत्यपि तद्व्याख्यानेन विस्पष्टम् (द्र०—निरुक्त ८ । ४–२१) । भाष्यकारस्तु द्वादशदेवतानां क्वचित् समासेन क्वचित् भिन्नार्थेन च व्याख्यानं कृतवान् ।

२. सामान्येन । विशेषेण तु १, ६, १० गायत्री; ७, ८, ११, १२ पिपीलिकामध्यानिचृद्गायत्री; निचृद्गायत्री ।

३. अस्मिन् व्याख्याने इट उदात्तत्वे प्राप्ते छान्दसत्वादाद्युदात्तत्वं द्रष्टव्यम् । सायणस्तु लोटि सिपि व्याख्यानं कृतवान् । तथाऽञ्जसा स्वरे सिद्धेऽपि छान्दसकार्यसंख्या तु समानैव ।

४. अयं भावार्थो भौतिकार्थपरः । एतेन प्रतीयते पूर्वं भाष्यकृता भौतिकाग्निपर एव मन्त्रो व्याख्यात आसीत् । तदुत्तरमीश्वरपरमप्यस्य व्याख्यानं कृतवान् ।

अब तेरहवें सूक्त के अर्थ का आरम्भ करते हैं। इसके प्रथम मन्त्र में परमेश्वर और भौतिक अग्नि के गुणों का उपदेश किया है—

**पदार्थान्वयभाषा**—हे ( होतः ) पदार्थों को देने और ( पावक ) शुद्ध करनेवाले (अग्ने) विश्व के ईश्वर ! जिस हेतु से (सुसमिद्धः) अच्छी प्रकार प्रकाशवान् आप कृपा करके (नः) हमारे ( च ) तथा ( हविष्मते ) जिसके बहुत हवि अर्थात् पदार्थ विद्यमान हैं उस विद्वान् के लिये ( देवान् ) दिव्य पदार्थों को ( आवह ) अच्छी प्रकार प्राप्त कराते हैं, इसमें मैं आपका निरन्तर ( यक्षि ) सत्कार करता हूं ॥ १ ॥

जिससे यह (पावक) पवित्रता का हेतु, (होतः) पदार्थों का ग्रहण करने, तथा (सुसमिद्धः) अच्छी प्रकार प्रकाशवाला ( अग्ने ) भौतिक अग्नि ( नः ) हमारे ( च ) तथा ( हविष्मते ) उक्त पदार्थवाले विद्वान् के लिये ( देवान् ) दिव्य पदार्थों को ( आवह ) अच्छी प्रकार प्राप्त कराता है, इससे मैं उक्त अग्नि को कार्य्यसिद्धि के लिये नित्य ( यक्षि ) यानादि में युक्त करता हूं ॥ २ ॥ १ ॥

इस मन्त्र में श्लेषालङ्कार है।

**भावार्थ**—जो[1] मनुष्य बहुत प्रकार की सामग्री को ग्रहण करके विमान आदि यानों में सब पदार्थों के प्राप्त करानेवाले अग्नि की अच्छी प्रकार योजना करता है, उस मनुष्य के लिये वह अग्नि नाना प्रकार के सुखों की सिद्धि करनेवाला होता है ॥ १ ॥



पुनः शरीरादिसंरक्षकाग्नेर्गुणा उपदिश्यन्ते—

मधुमन्तं तनूनपाद् यज्ञं देवेषु नः कवे। अद्या कृणुहि वीतये ॥ २ ॥

मधुऽमन्तम्। तनूऽनपात्। यज्ञम्। देवेषु। नः। कवे॥ अद्य। कृणुहि। वीतये ॥ २ ॥

**पदार्थः**—( **मधुमन्तम्** ) **मधवः प्रशस्ता रसा विद्यन्ते यस्य, तम्** ( **तनूनपात्** ) **तनूनां शरीरौषध्यादीनामूनानि न्यूनान्युपाङ्गानि पाति रक्षति सः**[2]। **इमं शब्दं यास्कमुनिरेवं समाचष्टे**—तनूनपादाज्यं भवति[3]। नपादित्यनन्तरायाः प्रजाया नामधेयं निर्णततमा भवति। गौरत्र तनूरुच्यते तता अस्यां भोगाः, तस्याः पयो जायते, पयस आज्यं जायते। अग्निरिति शाकपूणिः, आपोऽत्र तन्व उच्यन्ते तता अन्तरिक्षे, ताभ्य ओषधिवनस्पतयो जायन्ते, ओषधिवनस्पतिभ्य एष जायते।

१. यह भावार्थ भौतिकाग्निपरक है।

२. भाष्यकृत् तनूनपात् पदं त्रिभिरवयवैर्व्याचष्टे—तनूनामूनम् तनूनम्; तं पाति रक्षतीति तनूनपात्। अस्मिन् विग्रहे नुगागमश्छन्दसो द्रष्टव्यः। भाष्यकारोऽयं विविधेषु स्थानेषु विविधरूपेणास्य निर्वचनं दर्शयति। तत् तत्रास्थानं द्रष्टव्यम्।

३. इदं कात्थक्यमतम्। क्वचित् 'तनूनपादाज्यमिति कात्थक्यः' इत्यपि पाठः।

उ० ८। ५। (यज्ञम्) यजनीयम् ( देवेषु ) विद्वत्सु, दिव्येषु पदार्थेषु वा ( नः ) अस्माकम् कवे ) कविः क्रान्तदर्शनः ( अद्य ) अस्मिन् दिने। अत्र[1] निपातस्य च। अ० ६। ३। १३५ सूत्रेण दीर्घः। (कृणुहि) करोति। अत्र [पुरुष]व्यत्ययः। कृवि हिंसाकरणयोश्चेत्यस्माल्लडर्थे ट्। उतश्च प्रत्ययाच्छन्दो वा वचनम्। अ० ६। ४। १०६ इति वार्त्तिकेन हेर्लुगभावः। प्राप्तये॥ २॥

अन्वयः—यस्तनूनपात्[कवे] कविरग्निर् [अस्ति, स] देवेषु सुखस्य वीतयेऽद्य नो मधुमन्तं कृणुहि कृणोति॥ २॥

भावार्थः—यदाऽग्नौ हविर्हूयते, तदैवायं वाय्वादीन् शुद्धान् कृत्वा शरीरौषध्यादीन् रक्षित्वाऽनेकविधान् रसान् जनयति। तैः शुद्धैर्भुक्तैश्च प्राणिनां विद्याज्ञानबलवृद्धिरपि जायत ते॥ २॥

फिर भी अगले मन्त्र में शरीर आदि की रक्षा करनेवाले भौतिक अग्नि के गुण वर्णन ये हैं—

पदार्थान्वयभाषा—जो ( तनूनपात् ) शरीर तथा ओषधि आदि पदार्थों के न्यून अंशों की ा करने, और ( कवे ) सब पदार्थों का दिखानेवाला अग्नि है, वह ( देवेषु ) विद्वानों वा व्य पदार्थों में ( वीतये ) सुख प्राप्त होने के लिये ( अद्य ) आज ( नः ) हमारे (मधुमन्तम्) तम-उत्तम रसयुक्त ( यज्ञम् ) यज्ञ को ( कृणुहि ) सिद्ध करता है॥ २॥

भावार्थ—जब अग्नि में सुगन्धि आदि पदार्थों का हवन होता है, तभी वह यज्ञ वायु आदि दार्थों को शुद्ध, तथा शरीर और ओषधि आदि पदार्थों की रक्षा करके अनेक प्रकार के रसों को पन्न करता है। उन शुद्ध पदार्थों के भोग से प्राणियों के विद्या ज्ञान और बल की वृद्धि भी ती है॥ २॥



नरैः प्रशंसनीयस्य भौतिकाग्नेर्गुणा उपदिश्यन्ते—

**नराशंसमिह प्रियमस्मिन् यज्ञ उप ह्वये। मधुजिह्वं हविष्कृतम्॥ ३॥**

नराशंसम्। इह। प्रियम्। अस्मिन्। यज्ञे। उप। ह्वये॥ मधुऽजिह्वम्। हविःऽकृतम्॥ ३॥

**पदार्थः**—(नराशंसम्) नरैरभितः शस्यते प्रशस्यते तं सुखसमूहकारकम्। नराशंसो यज्ञ कात्थक्यः, नरा अस्मिन्नासीनाः शंसन्ति। अग्निरिति[2] शाकपूणिः, नरैः प्रशस्यो भवति।

१. 'अद्य' शब्दं चादिगणे वर्धमानः स्वगणरत्नमहोदधौ पठति (द्र०—ग०र०म० पृष्ठ १४ पं० १०, ावा संस्करण)। सायणाचार्यस्तु प्रकृतमन्त्रे निपाताभावमुररीकृत्य 'अन्येषामपि दृश्यते' (अ० ६।३।१३६) त्यनेन दीर्घत्वमाह। उत्तरत्र ऋ० १। ३४। १ मन्त्रव्याख्याने 'निपातस्य चेति संहितायां दीर्घः' इत्याह। स्य स्ववचोविरोधादेकतरं व्याख्यानं चिन्त्यम्।

२. वै० य० मुद्रितेषु संस्करणेषु 'अग्निमिति' अपपाठः।

निरु० ८। ६। (इह) अस्मद्भोगविषये संसारे (प्रियम्) प्रीणाति सर्वान् प्राणिनस्तम् (अस्मिन्) प्रत्यक्षे (यज्ञे) यष्टव्ये (उप) उपगतभोगद्योतने (ह्वये) उपतापये (मधुजिह्वम्) मधुरगुणसंपादिका जिह्वा ज्वाला यस्य तम्। जिह्वा जोहुवा। निरु० ५। २६। काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरूपी[1] च देवी लेलायमाना इति सप्त जिह्वाः॥ इति मुण्डकोपनि० मुण्डक १। खं० २। मं० ४। (हविष्कृतम्) हविर्भिः क्रियते तम्। अत्र वर्त्तमानकाले कर्मण्यौणादिकः क्तः [2]प्रत्ययः॥ ३॥

**अन्वयः**—अहमस्मिन् यज्ञे इह संसारे च हविष्कृतं मधुजिह्वं प्रियं नराशंसमग्निमुपह्वय उपगम्योपतापये॥ ३॥

**भावार्थः**—योऽयं भौतिकोऽग्निरस्मिन् जगति [होमनिमित्तं][3] युक्त्या सेवितः प्राणिनां प्रियकारी भवति, यस्याग्नेः सप्त जिह्वाः सन्ति। काली—शुक्लादिवर्णप्रकाशिका[4], कराली—दुःसहा, मनोजवा—मनोवद्वेगवती, सुलोहिता—शोभनो लोहितो रक्तो वर्णो यस्याः सा, सुधूम्रवर्णा—शोभनो धूम्रो वर्णो यस्याः सा, स्फुलिङ्गिनी—बहवः स्फुलिङ्गाः कणा विद्यन्ते यस्यां सा। अत्र भूम्न्यर्थ इनिः। विश्वरूपी—विश्वं सर्वं रूपं यस्याः सा, इति सप्तविधा। पुनः सा किंभूता—देवी—देदीप्यमाना, लेलायमाना—लेलायति सर्वत्र प्रकाशयति या सा। अत्र 'लेला दीप्तौ' इत्यस्मात् [5]कण्ड्वादित्वाद्यक्, व्यत्ययेनात्मनेपदं च। सा जिह्वाऽर्थाज्जोहुवा पुनः पुनः सर्वान् पदार्थान् जुहोत्यादत्तेऽसाविति॥ ३॥

अब अगले मन्त्र में मनुष्यों के प्रशंसा करने योग्य भौतिक अग्नि के गुणों का उपदेश किया है—

**पदार्थान्वयभाषा**—मैं (अस्मिन्) इस (यज्ञे) अनुष्ठान करने योग्य यज्ञ तथा (इह) संसार में (हविष्कृतम्) जो कि होम करने योग्य पदार्थों से प्रदीप्त किया जाता है, और (मधुजिह्वम्) जिसकी [मधुर गुणवाली] काली, कराली, मनोजवा, सुलोहिता, सुधूम्रवर्णा, स्फुलिङ्गिनी और विश्वरूपी ये अति प्रकाशमान चपल ज्वालारूपी जीभें हैं, जो (प्रियम्) सब जीवों को प्रीति देनेवाला, और (नराशंसम्) जिसकी मनुष्य [बहुविध] प्रशंसा करते हैं, उस [सुखसमूह] के प्रकाश करनेवाले अग्नि को (उपह्वये) समीप प्रज्वलित करता हूं॥ ३॥

**भावार्थ**—जो भौतिक अग्नि इस संसार में होम के निमित्त युक्ति से ग्रहण किया हुआ प्राणियों की प्रसन्नता करानेवाला है, जिस अग्नि को सात जीभें हैं, अर्थात् काली—जोकि सुपेद आदि रङ्ग का प्रकाश करनेवाली, कराली—सहने में कठिन, मनोजवा—मन के समान वेगवाली, सुलोहिता—जिसका उत्तम रक्तवर्ण है, सुधूम्रवर्णा—जिसका सुन्दर धुएं का सा वर्ण है,

---

१. सम्प्रति 'विश्वरुची' इति प्रायेण पाठ उपलभ्यते।

२. अञ्जिघृसिभ्यः क्तः (उ० ३। ८९) इत्यनेन विहितो बाहुलकात् कर्मणोऽपि भवति।

३. वै० य० मुद्रितेषु संस्करणेषु प्रमादान्नष्टम्, भाषायां दृश्यते।

४. 'सुधूम्रवर्णा' इत्यनेन कृष्णवर्णस्योक्तत्वात् पुनरुक्तदोषपरिहाराय 'कल संख्याने' इति धात्वर्थमाश्रित्योक्तम्—शुक्लादिवर्णप्रकाशिकेत्युक्तम्।

५. कण्ड्वादिभ्यो यक् (अ० ३। १। २७)।

स्फुलिङ्गिनी—जिसमें बहुत से चिनगे उठते हैं, तथा विश्वरूपी—जिसका सब रूप हैं। ये देवी अर्थात् अतिशय करके प्रकाशमान, और लेलायमाना—सब का प्रकाश करनेवाली सात प्रकार की जिह्वा हैं, अर्थात् सब पदार्थों को ग्रहण करनेवाली होती हैं। इस उक्त सात प्रकार की अग्नि की जीभों से सब पदार्थों में उपकार लेना चाहिये॥ ३॥



स एवमुपकृतः किंहेतुको भवतीत्युपदिश्यते—

**अग्ने॑ सु॒खत॑मे॒ रथे॑ दे॒वाँ ई॑ळि॒त आ व॑ह। असि॒ होता॒ मनु॑र्हितः॥ ४॥**

अग्ने॑। सु॒खऽत॑मे। रथे॑। दे॒वान्। ई॒ळि॒तः। आ। व॒ह॥ असि॑। होता॑। [1]मनुः॑ऽहितः॥ ४॥

**पदार्थः**—( **अग्ने** ) भौतिकोऽयमग्निः ( **सुखतमे** ) अतिशयितानि सुखानि यस्मिन् ( **रथे** ) गमनहेतौ रमणसाधने विमानादौ ( **देवान्** ) विदुषो भोगान् वा ( **ईडितः** ) मनुष्यैरध्येषितोऽधिष्ठितः ( **आ** ) समन्तात् ( **वह** ) वहति प्रापयति। अत्र सर्वत्र व्यत्ययः। ( **असि** ) अस्ति ( **होता** ) सुखदाता [2]( **मनुर्हितः** ) विद्वद्भिः क्रियासिद्ध्यर्थं यो मन्यते, [ स ]" हितः धृतः सन् हितकारी॥ ४॥

**अन्वयः**—मनुष्यैर्या[ऽग्ने]ऽग्नि[3] र्होतेडितोऽ[स्य]स्ति, स सुखतमे रथे [मनुर्]हितः [विद्वद्भिर्मननीयः] स्थापितः सन् देवानावह समन्ताद्वहति देशान्तरं प्रापयति॥ ४॥

---

१. वै० य० मुद्रितेषु संस्करणेषु 'मनुः। हितः।' इत्येवमपपाठः। उत्तरत्र (ऋ० १। १४। ११; १। १०६। ५; ६। १६। ९) सर्वत्र वै० य० मुद्रितेषु संस्करणेषु पदमिदं यथावत् साधुरूपमुपलभ्यते। तस्मादत्रापि तथैवैकपद्यं युक्तम्।

२. वै० य० मुद्रितेषु संस्करणेषु '(मनुः) विद्वद्भिः क्रियासिद्धयर्थं यो मन्यते (हितः) धृतः सन् हितकारी' इत्येवं पाठ उपलभ्यते। अयं लिपिकरादिप्रमादैरपपाठत्वं गत इति प्रतीयते। उत्तरत्र (ऋ० १। १४। ११; १। १०६। ५; ६। १६। ९) सर्वत्रैकपद्यमाश्रित्य भाष्यकृतो व्याख्यानस्योपलम्भात्। वेदार्थकोषसम्पादकेन पण्डितचमूपतिना स्वीये कोषे (भाग २, पृष्ठ ३२७) अस्य शोधनमित्थं निर्दिशितम्—'मनुः विद्वद्भिः क्रियासिद्धयर्थं यो मन्यते, हितः धृतः स हितकारी' इति।

अत्र सायणाचार्यो। 'मनुर्हितः' इत्यस्य स्वरमित्थं प्रदर्शयति—'मनुना हित इति तृतीयासमासे तृतीयायाः स्थाने सुपां सुलुक्० (अ० ७। १। ३९) इत्यादिना स्यादेशः, तस्य रुत्वम्, लुगभावश्छान्दसः। तृतीया कर्मणि (अ० ६। २। ४८) इति पूर्वपदप्रकृतिस्वरत्वं च।' एवं वचनं स्ववचोविरोधात् अनावश्यकछान्दसकार्याश्रयणगौरवाच्च चिन्त्यम्। सायणः स्वयमनुषपदमेव वक्ष्यति—'मनुषा हितो मनुर्हितः······तृतीया कर्मणि (अ० ६। २। ४८) इति पूर्वपदप्रकृतिस्वरत्वम् ( ऋग्भाष्य १। १४ ११ )। उसिप्रत्ययान्ते षकारान्ते 'मनुष्'शब्दे स्वीकृते सति न किञ्चिदकल्पनीयं कल्पनीयं भवति। प्रयोगसिद्धिरञ्जसा सम्पद्यते। प्रकृतभाष्ये स्वरश्छान्दसः कल्पनीयः।

३. वै० य० मुद्रिते चतुर्थ संस्करणे भाषार्थमनुसृत्येतोऽग्रे कोष्ठके '[मनु]' इत्येवं पाठः परिवर्धितः।

भावार्थः—मनुष्यैर्बहुकलासमन्वितो भूजलान्तरिक्षगमनहेतुरग्निर्जलादिना सह संप्रयोजितस्त्रीविधे रथे हितकारी सुखतमो भूत्वा बहुकार्यसिद्धिप्रापको भवतीति बोध्यम् ॥ ४ ॥

उक्त अग्नि इस प्रकार उपकार में लिया हुआ किसका हेतु होता है, सो उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—[मनुष्यों से] जो (अग्ने) भौतिक अग्नि[1] (होता) सब सुखों का देनेवाला, और (ईडितः) [2]मनुष्यों से कलायन्त्रों में प्रेरित वा नियन्त्रित (असि) है, वह (सुखतमे) अत्यन्त सुख देने, तथा (रथे) गमन और विहार करानेवाले विमान आदि सवारियों में (मनुर्हितः) [विद्वानों से ज्ञानपूर्वक] स्थापित किया हुआ (देवान्) [विद्वानों वा] दिव्य भोगों को (आवह) अच्छे प्रकार देशान्तर में प्राप्त कराता है ॥ ४ ॥

**भावार्थ**—मनुष्यों के द्वारा बहुत कलाओं से संयुक्त, पृथिवी जल और अन्तरिक्ष में गमन का हेतु अग्नि, जल आदि पदार्थों से संयुक्त [किया हुआ] तीन प्रकार के रथों में कल्याणकारक तथा अत्यन्त सुख देनेवाला होकर बहुत उत्तम कार्यों की सिद्धि को प्राप्त करानेवाला होता है ॥४॥



पुनः स एवं संप्रयुक्तः किं करोतीत्युपदिश्यते—

स्तृणीत बर्हिरानुषग् घृतपृष्ठं मनीषिणः । यत्रामृतस्य चक्षणम् ॥५॥

स्तृणीत । बर्हिः । आनुषक् । घृतऽपृष्ठम् । मनीषिणः ॥ यत्र । अमृतस्य । चक्षणम् ॥ ५ ॥

**पदार्थः**—(स्तृणीत) आच्छादयत (बर्हिः) अन्तरिक्षम् (आनुषक्) अभितो यदनुषक्तं तत् (घृतपृष्ठम्) घृतमुदकं पृष्ठे यस्मिँस्तत् (मनीषिणः) मेधाविनो विद्वांसः। मनीषीति मेधाविनामसु पठितम्। निघं० ३ । १५ । (यत्र) यस्मिन्नन्तरिक्षे (अमृतस्य) उदकसमूहस्य। अमृतमित्युदकनामसु पठितम्। निघं० १ । १२ । (चक्षणम्) दर्शनम्। 'चक्षिङ् दर्शने' इत्यस्माल्ल्युटि प्रत्यये परे असनयोश्च। अ० २ । ४ । ५४ इति वार्त्तिकेन ख्याञादेशाभावः ॥ ५ ॥

**अन्वयः**—हे मनीषिणः! यत्रामृतस्य चक्षणं वर्तते, तदानुषग्घृतपृष्ठं बर्हिः स्तृणीताच्छादयत ॥ ५ ॥

**भावार्थः**—विद्वद्भिरग्नौ यद् घृतादिकं प्रक्षिप्यते, तदन्तरिक्षानुगतं भूत्वा तत्रस्थस्य जलसमूहस्य शोधकं जायते। तच्च सुगन्ध्यादिगुणैः सर्वान् पदार्थानाच्छाद्य सर्वान् प्राणिनः सुखयुक्तान् सद्यः संपादयतीति ॥ ५ ॥

---

१. वै० य० मुद्रित संस्करणों में इसके आगे 'मनुर्हितः' पद के एकदेश का व्याख्यान '(मनुः) विद्वान् लोग जिसे मानते हैं तथा' मिलता है। यह पाठ अयुक्त है। विशेष विचार संस्कृत टिप्पणी में दर्शाया है।

२. वै० य० मुद्रित संस्करणों में 'मनुष्यों को स्तुति करने योग्य' पाठ संस्कृतपदार्थ तथा भाष्यकार के सिद्धान्त से विपरीत है।

फिर वह भौतिक अग्नि उक्त प्रकार से क्रिया में प्रयुक्त किया हुआ क्या करता है, सो अगले मन्त्र में उपदेश किया है—

**पदार्थान्वयभाषा**—हे ( मनीषिणः ) बुद्धिमान् विद्वानो ! ( यत्र ) जिस अन्तरिक्ष में ( अमृतस्य ) जलसमूह का ( चक्षणम् ) दर्शन होता है, उस ( आनुषक् ) चारों ओर से घिरे, और ( घृतपृष्ठम् ) जल से भरे हुए ( बर्हिः ) अन्तरिक्ष को (स्तृणीत) होम के धूम से आच्छादन करो, उसी अन्तरिक्ष में अन्य भी बहुत पदार्थ जल आदि को जानो ॥ ५ ॥

**भावार्थ**—विद्वान् लोग अग्नि में जो घृत आदि पदार्थ छोड़ते हैं, वे अन्तरिक्ष को प्राप्त होकर वहां के ठहरे हुए जल को शुद्ध करते हैं। और वह शुद्ध हुआ जल सुगन्धि आदि गुणों से सब पदार्थों को आच्छादन करके सब प्राणियों को सुखयुक्त करता है ॥ ५ ॥



**अथ[1] [गृहं] यज्ञशाला यानानि चानेकद्वाराणि रचनीयानीत्युपदिश्यते—**

## वि श्र॑यन्तामृता॒वृधो॒ द्वारो॑ दे॒वीर॑स॒श्चतः॑ । अ॒द्या नू॒नं च॒ यष्ट॑वे ॥ ६ ॥

वि । श्र॒य॒न्ता॒म् । ऋ॒त॒ऽवृधः॑ । द्वारः॑ । दे॒वीः । अ॒स॒श्चतः॑ ॥ अ॒द्य । नू॒नम् । च॒ । यष्ट॑वे ॥ ६ ॥

**पदार्थः**—( वि ) विविधार्थे ( श्रयन्ताम् ) सेवन्ताम् ( ऋतावृधः ) या ऋतं सत्यं सुखं जलं वा वर्धयन्ति ताः । अत्र अन्येषामपि० । [अ० ६ । ३ । १३६] इति दीर्घः । (द्वारः) द्वाराणि ( देवीः ) द्योतमानाः । अत्र वा छन्दसि [अ० ६ । १ । १०२] इति जसः पूर्वसवर्णत्वम् । (असश्चतः) विभागं प्राप्ताः । अत्र सस्ज गतौ इत्यस्य व्यत्ययेन जकारस्य चकारः । (अद्य) अस्मिन्नहनि । अत्र निपातस्य च [अ० ६ । ३ । १३५] इति दीर्घः । ( नूनम् ) निश्चये ( च ) समुच्चये (यष्टवे) यष्टुम् । अत्र 'यज' धातोस्तवेन् प्रत्ययः ॥ ६ ॥

**अन्वयः**—हे मनीषिणः ! अद्य [च सर्वदा] यष्टवे गृहादेरसश्चत ऋतावृधो देवीर्द्वारो नूनं विश्रयन्ताम् ॥ ६ ॥

**भावार्थः—मनुष्यैरनेकद्वाराणि गृहयज्ञशालायानानि रचयित्वा तत्र स्थितिं हवनं गमनागमने च कर्त्तव्ये ॥ ६ ॥**

**[इति] चतुर्विंशो वर्गः समाप्तः ॥**

अब अगले मन्त्र में घर यज्ञशाला और विमान आदि रथ अनेक द्वारों के सहित बनाने चाहियें, इस विषय का उपदेश किया है—

**पदार्थान्वयभाषा**—हे बुद्धिमान् विद्वानो ! ( अद्य ) आज [ ( च ) और सब कालों में ] ( यष्टवे ) यज्ञ करने के लिये घर आदि के ( असश्चतः ) अलग-अलग, ( ऋतावृधः )

---

१. वै० य० मुद्रिते चतुर्थसंस्करणेऽत्र कोष्ठके '[गृह]' इत्यविभक्त्यन्तः पाठः परिवर्धितः ।

सत्य सुख और जल की वृद्धि करनेवाले, तथा ( देवीः ) प्रकाशित ( द्वारः ) दरवाजों का ( नूनम् ) निश्चय से ( विश्रयन्ताम् ) सेवन करो, अर्थात् अच्छी रचना से उनको बनाओ ॥ ६ ॥

**भावार्थ**—मनुष्यों को अनेक प्रकार के द्वारों वाले घर, यज्ञशाला और विमान आदि यानों को बनाकर उनमें स्थिति, होम और देशान्तर में जाना आना करना चाहिये ॥ ६ ॥

यह चौबीसवां वर्ग समाप्त हुआ ॥



**तत्रैतेनाहोरात्रे[1] सुखं भवतीत्युपदिश्यते—**

## नक्तोषसा सुपेशसाऽस्मिन् यज्ञ उप ह्वये । इदं नो बर्हिरासदे ॥ ७ ॥

नक्तोषसा । सुऽपेशसा । अस्मिन् । यज्ञे । उप । ह्वये ॥ इदम् । नः । बर्हिः । आऽसदे ॥ ७ ॥

**पदार्थः**—( नक्तोषसा ) नक्तं चोषाश्चाहश्च रात्रिश्च ते । अत्र सुपां सुलुग्० [अ० ७ । १ । ३९] इति औकारस्थाने आकारादेशः । नक्तमिति रात्रिनामसु पठितम् । निघं० १ । ७ । उषासानक्तोषाश्च नक्ता च, उषा व्याख्याता, नक्तेति रात्रिनामानक्ति भूतान्यवश्यायेनापि वा नक्ता व्यक्तवर्णा । निरु० ८।१०। (सुपेशसा) शोभनं सुखदं पेशो रूपं ययोस्ते । अत्र पूर्ववदाकारादेशः । पेश इति रूपनामसु पठितम् । निघं० ३ । ७ । ( अस्मिन् ) प्रत्यक्षे गृहे ( यज्ञे ) सङ्गन्तुं कर्त्तव्ये (उप) सामीप्ये (ह्वये) स्पर्द्धे (इदम्) प्रत्यक्षम् (नः) अस्माकम् (बर्हिः) निवासप्रापकं स्थानम् । बर्हिरिति पदनामसु पठितम् । निघं० ५ । २ । अतः प्राप्त्यर्थो गृह्यते । ( आसदे ) समन्तात्सीदन्ति प्राप्नुवन्ति सुखानि यस्यां साऽऽसत्तस्यै ॥ ७ ॥

**अन्वयः**—अहमस्मिन् गृहे यज्ञे [सुपेशसा] सुपेशसौ [नक्तोषासा] नक्तोषसावुपह्वय उपस्पर्द्धे । यतो नोऽस्माकमिदं बर्हिरासदे भवेत् ॥ ७ ॥

**भावार्थः**—मनुष्यैरत्र विद्ययोपकृतेऽहोरात्रे[2] सर्वप्राणिनां सुखहेतू भवत इति बोध्यम् ॥७॥

उक्त कर्म से दिनरात सुख होता है, सो अगले मन्त्र में प्रकाशित है—

**पदार्थान्वयभाषा**—मैं ( अस्मिन् ) इस घर, तथा ( यज्ञे ) सङ्गत करने योग्य कर्मों में (सुपेशसा) अच्छे सुखद रूपवाले (नक्तोषसा) रात्रिदिन को (उपह्वये) उपकार में लाता हूं । जिस कारण ( नः ) हमारा ( बर्हिः ) निवासस्थान (आसदे) सुख की प्राप्ति के लिये हो ॥७॥

**भावार्थ**—मनुष्यों को [जानना] उचित है कि इस संसार में विद्या से सदैव उपकार लिये हुए, रात्रि और दिन सब प्राणियों के सुख के हेतु होते हैं ॥ ७ ॥



१. एतद्विषयेऽस्यैव मन्त्रस्य भावार्थे टिप्पणी द्रष्टव्या ।

२. पाणिनिना 'हेमन्तशिशिरावहोरात्रे च च्छन्दसि' (अ० २ । ४ । २८) इत्यनेन छन्दसि नपुंसकत्वं, 'रात्राह्नाहाः पुंसि' (अ० २ । ४ । २९) इत्यनेन च लोके पुंस्त्वमुक्तम् । तथापि क्वचिच्छान्दसा अपि भाषायां प्रयुज्यन्ते, इत्युत्सर्गेण लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य इति महाभाष्यकारनिर्दिष्टेन पथा नपुंसकप्रयोगो ज्ञेयः ।

तत्र शोधकौ प्रसिद्धाप्रसिद्धावग्नी उपदिश्येते—

## ता सुजिह्वा उप ह्वये होतारा दैव्या कवी । यज्ञं नो यक्षतामिमम् ॥८॥

ता । सुऽजिह्वौ । उप । ह्वये । होतारा । दैव्या । कवी इति ॥ यज्ञम् । नः । यक्षताम् । इमम् ॥८॥

**पदार्थः**—( ता ) तौ । अत्र सर्वत्र द्वितीयाया द्विवचनस्य स्थाने सुपां सुलुग्० [अ० ७ । ३९] इत्याच् आदेशः । ( सुजिह्वौ ) शोभनाः पूर्वोक्ताः सप्त जिह्वा ययोस्तौ ( उप ) सामीपगमनार्थे ( ह्वये ) स्पर्द्धे (होतारा) आदातारौ (दैव्या) दिव्येषु पदार्थेषु भवौ। देवाद्यञञौ । ४ । १ । ८५ इति वार्त्तिकेन प्राग्दीव्यतीयेष्वर्थेषु यञ् प्रत्ययः । ( कवी ) क्रान्तदर्शनौ (यज्ञम) हवनशिल्पविद्यामयम् (नः) अस्माकम् (यक्षताम्) यजतः संगमयतः । अत्र सिब्बहुलं लेटि [अ० ३ । १ । ३४] इति बहुलग्रहणाल्लोटि प्रथमपुरुषस्य द्विवचने शपः पूर्वं सिप् । (इमम्) प्रत्यक्षम् ॥ ८ ॥

**अन्वयः**—अहं क्रियाकाण्डाऽनुष्ठातास्मिन् गृहे यौ नोऽस्माकमिमं यज्ञं यक्षतां संगमयतः, तौ [सुजिह्वा] सुजिह्वौ [होतारा] होतारौ कवी दैव्यावुपह्वये सामीप्ये स्पर्द्धे ॥ ८ ॥

**भावार्थः**—यथैका विद्युद्वेगाद्यनेकदिव्यगुणयुक्ताऽस्त्येवं प्रसिद्धोऽग्निरपि वर्त्तते । एतौ सकलपदार्थदर्शनहेतू अग्नी सम्यङ् नियुक्तौ शिल्पाद्यनेककार्य्यसिद्धिहेतू भवतः, तस्मादेताभ्यां मनुष्यैः सर्वोपकारा ग्राह्या इति ॥ ८ ॥

अब अगले मन्त्र में उन अग्नियों का उपदेश किया है कि जो शुद्ध करनेवाले विद्युद्रूप से प्रसिद्ध और प्रत्यक्ष स्थूलरूप से प्रसिद्ध हैं—

**पदार्थान्वयभाषा**—मैं क्रियाकाण्ड का अनुष्ठान करनेवाला इस घर में जो ( नः ) हमारे ( इमम् ) प्रत्यक्ष ( यज्ञम् ) हवन वा शिल्पविद्यामय यज्ञ को ( यक्षताम् ) प्राप्त करते हैं, [(ता)] उन (सुजिह्वौ) सुन्दर पूर्वोक्त सात जीभवाले, (होतारा) पदार्थों का ग्रहण करने, (कवी) सब दर्शन देने, और ( दैव्या ) दिव्य पदार्थों में रहनेवाले प्रसिद्ध और अप्रसिद्ध अग्नियों को ( उपह्वये ) समीप से उपकार में लाता हूं ॥ ८ ॥

**भावार्थ**—जैसे एक बिजुली वेग आदि अनेक दिव्य गुणवाला अग्नि है, इसी प्रकार प्रसिद्ध अग्नि भी है । ये दोनों सकल पदार्थों के देखने में [ हेतुरूप अग्नियां ] अच्छे प्रकार क्रियाओं में नियुक्त की हुई शिल्प आदि अनेक कार्यों की सिद्धि में हेतु होती हैं। इसलिये इन से मनुष्यों को सब उपकार लेने चाहियें ॥ ८ ॥



तत्र त्रिधा क्रिया प्रयोज्येत्युपदिश्यते—

## इळा सरस्वती मही तिस्रो देवीर्मयोभुवः । बर्हिः [1]सीदन्त्वस्रिधः ॥९॥

इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः ॥ बर्हिः । सीदन्तु । अस्रिधः ॥ ९ ॥

१. वै० य० मुद्रितेषु सर्वसंस्करणेषु 'सीदन्तु अस्रिधः' इत्यपपाठ दृश्यते ।

**पदार्थः**—(इडा) ईड्यते स्तूयतेऽनया सा वाणी। इडेति वाङ्नामसु पठितम्। निघ० १।११। अत्र 'ईड' धातोः कर्मणि बाहुलकादौणादिकोऽन्[1] प्रत्ययो ह्रस्वत्वं च। वा छन्दसि सर्वे विधयो भवन्ति [महा० १।४।९] इति गुणादेशाभावश्च[2]। अत्र सायणाचार्य्येण टाप चैव हलन्तानामित्यशास्त्रीयवचनस्वीकारादशुद्धमेवोक्तम्[3]। (सरस्वती) सरो बहुविधं विज्ञानं विद्यते यस्याः सा। अत्र भूम्न्यर्थे मतुप् (मही) महती पूज्या नीतिर्भूमिर्वा (तिस्रः) त्रिप्रकारकाः (देवीः) देदीप्यमाना दिव्यगुणहेतवः। अत्र वा छन्दसि [अ० ६।१।१०२] इति जसः पूर्वसवर्णत्वम्। (मयोभुवः) या मयः सुखं भावयन्ति ताः। मय इति सुखनामसु पठितम्। निघं० ३।६। (बर्हिः) [4]प्रति गृहादिकम्। बर्हिरिति पदनामसु पठितम्। निघं० ५।२। तस्मादत्र ज्ञानार्थो गृह्यते। (सीदन्तु) सादयन्तु। अत्रान्तर्गतो ण्यर्थः। (अस्रिधः) अहिंसनीयः ॥९॥

**अन्वयः**—हे विद्वांसः! भवन्त इडा सरस्वती मह्यस्रिधो मयोभुवस्तिस्रो देवीर्बर्हिः प्रतिगृहादिकं सीदन्तु सादयन्तु ॥ ९ ॥

**भावार्थः**—मनुष्यैरिडापठनपाठनप्रेरिका सरस्वती ज्ञानप्रकाशिकोपदेशाख्या मही सर्वथा पूज्या कुतर्केण ह्यखण्डनीया सर्वसुखा [वाणीर्] नीतिश्चेति त्रिविधा सदा स्वीकार्य्या। यतः खल्वविद्यानाशो विद्याप्रकाशश्च भवेत् ॥ ९ ॥

वहां तीन प्रकार की क्रिया का प्रयोग करना चाहिये, इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे विद्वानो! तुम लोग एक (इडा) जिससे स्तुति की जाती है, दूसरी (सरस्वती) जिसमें अनेक प्रकार का विज्ञान है, और तीसरी (मही) बड़ी पूजनीय नीति है, जो (अस्रिधः) हिंसारहित और (मयोभुवः) सुखों का सम्पादन करानेवाली (तिस्रः) तीन प्रकार की (देवीः) प्रकाशवान्, तथा दिव्य गुणों को सिद्ध कराने में हेतुरूप वाणी [और नीति] है, उसको (बर्हिः) घर-घर के प्रति (सीदन्तु) यथावत् प्रकाशित करो ॥९॥

---

१. विलशेरन लो लोपश्च (उ० ५।३३) इत्यनेन विहितोऽन्प्रत्ययः।

२. इह ह्रस्वत्वविधानसामर्थ्यादेव गुणो न भविष्यति, किं गुणाभावविधानेन, इति चेन्न, 'यस्य विधेर्निमित्तं नासौ विधानसामर्थ्याद् बाध्यते' (द्र०—व्याडिपरिभाषासूचन सं० ४९) इति नियमेन न ह्रस्वादेशेन गुणः शक्यते बाधितुम्। यतो हि ईडो ह्रस्वादेशे कृतएव लघूपधगुणः प्राप्नोति, नाकृते। अतो उभे अपि कार्ये वक्तव्ये एव।

३. पाणिनीयसम्प्रदाये हलन्तात् स्त्रियां टापोऽनुपलब्धत्वादशुद्धत्वमुक्तम्। भागुर्यादीनां प्राचीनानां मते हलन्तादाप् स्त्रियां विहित आसीत, न टाप। तथा च तेषां वचनम्—'आपं चैव हलन्तानाम्'। ४।१।१ महाभाष्यात् प्रतीयते यत्केचन आचार्या उष्णिहा देवविशा इत्यादिषु हलन्तेभ्य टापमिच्छन्ति स्म। अपरे पुनस्तेषां पुंसि अकारान्तरूपं निष्पाद्य ततष्टाप् विदधति स्म।

४. 'प्रति विज्ञानम्' इति भूतपूर्वः पाठः। अनेनैव च भूतपूर्वपाठेन संबद्धोत्तरा पङ्क्तिः—'बर्हिरिति ··· गृह्यते'। 'विज्ञान'स्थाने 'गृहादिक' परिवर्तने कृते उत्तरा 'बर्हिरिति ···· गृह्यते' पङ्क्तिरसम्बन्धा बभूव। अत इयं भूतपूर्वपाठसंबद्धेति कृत्वा निष्काशनार्हा समजायत।

भावार्थ—मनुष्यों को 'इडा' जो कि पठन-पाठन की प्रेरणा देनेहारी, 'सरस्वती' जो उपदेशान का प्रकाश करने, और 'मही' जो सब प्रकार से प्रशंसा करने योग्य, और कुतर्क इन करने के अयोग्य, तथा सब सुख से युक्त तीनों प्रकार की वाणी और नीति सदैव स्वीकार चाहिये। जिससे निश्चलता से अविद्या का नाश [और विद्या का प्रकाश होवे] ॥ ९ ॥



पुनस्तत्र किं किं कार्य्यमित्युपदिश्यते—

**इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये । अस्माकमस्तु केवलः ॥ १० ॥**

इह । त्वष्टारम् । अग्रियम् । विश्वऽरूपम् । उप । ह्वये ॥ अस्माकम् । अस्तु । केवलः ॥ १० ॥

पदार्थः—(इह) अस्यां शिल्पविद्यायामस्मिन् गृहे[1] वा (त्वष्टारम्) दुःखानां छेदकं सर्वर्थानां विभाजितारं वा (अग्रियम्) सर्वेषां वस्तूनां साधनानां वा अग्रे भवम्। घच्छौ च। ४।४।११७ इति सूत्रेण भावार्थे घः प्रत्ययः। (विश्वरूपम्) विश्वस्य रूपं यस्मिन् ात्मनि वा विश्वः सर्वो रूपगुणो यस्य तम् (उप) सामीप्ये (ह्वये) स्पर्द्धे (अस्माकम्) सकानां हवनशिल्पविद्यासाधकानां वा (अस्तु) भवतु भवति [वा]। अत्र पक्षे व्यत्ययः। (केवलः) एवेष्टोऽसाधारणसाधनो वा ॥ १० ॥

अन्वयः—अहं यं विश्वरूपमग्रियं त्वष्टारमग्निं परमात्मानमिहोपह्वये सम्यक् स्पर्द्धे, स ऽस्माकं केवल इष्टोऽस्तु, इत्येकः ॥

अहं यं विश्वरूपमग्रियं त्वष्टारं भौतिकमग्निमिहोपह्वये, सोऽस्माकं केवलोऽसाधारणनोऽस्तु भवति, इति द्वितीयः ॥ १० ॥

अत्र श्लेषालङ्कारः।

भावार्थः—मनुष्यैरनन्तानन्वप्रव ईश्वर एवोपास्योऽस्ति। तथाऽयमग्निः सर्वपदार्थच्छेदको गुणः सर्वद्रव्यप्रकाशकोऽनुत्तमः शिल्पविद्याया अद्वितीयसाधनोऽस्माकं यथावदुपयोक्तव्योऽस्तीति व्यम् ॥ १० ॥

फिर यहां क्या-क्या करना चाहिये, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—मैं जिस (विश्वरूपम्) सर्वव्यापक, (अग्रियम्) सब वस्तुओं के पूर्व विद्यमान, तथा (त्वष्टारम्) सब दुःखों के नाश करनेवाले परमात्मा को (इह) इस में (उपह्वये) अच्छी प्रकार आह्वान करता हूं, वही (अस्माकम्) उपासना करनेवाले लोगों का (केवलः) एक ही इष्ट और स्तुति करने योग्य (अस्तु) हो ॥१॥

मैं जिस (विश्वरूपम्) सब रूप गुणवाले, (अग्रियम्) सब साधनों में उत्तम, तथा त्वष्टारम्) सब पदार्थों को अपने तेज से अलग-अलग करनेवाले भौतिक अग्नि को (इह)

१. हृदय-मन्दिरे इति भावः। २. अर्थात् हृदय-मन्दिर में।

इस शिल्पविद्या में ( उपह्वये ) युक्त करता हूं, वह ( अस्माकम् ) हवन तथा शिल्पविद्या के सिद्ध करनेवाले हम लोगों का ( केवलः ) अत्युत्तम साधन ( अस्तु ) होता है ॥ २ ॥ १० ॥

इस मन्त्र में श्लेषालङ्कार है ।

**भावार्थ**—मनुष्यों को अनन्त सुख देनेवाले ईश्वर ही की उपासना करनी चाहिये । तथा जो यह भौतिक अग्नि सब पदार्थों का छेदन करने, सब रूप गुण और पदार्थों का प्रकाश करने, तथा सबसे उत्तम, और हम लोगों की शिल्पविद्या का अद्वितीय साधन है, उसका उपयोग शिल्पविद्या में यथावत् करना चाहिये ॥ १० ॥



सोऽग्निः केन प्रदीप्तः सन्नेतत्कार्य्यं साधयतीत्युपदिश्यते—

अव सृजा वनस्पते देव देवेभ्यो हविः । प्र दातुरस्तु चेतनम् ॥ ११ ॥

अव । सृज । वनस्पते । देव । देवेभ्यः । हविः ॥ प्र । दातुः । अस्तु । चेतनम् ॥ ११ ॥

**पदार्थः**—( अव ) विनिग्रहार्थीयः ( सृजः ) सृजति । अत्र व्यत्ययः । द्व्यचोऽतस्तिङः [अ० ६ । ३ । १३५] इति दीर्घः । ( वनस्पते ) यो वनानां वृक्षौषध्यादिसमूहानामधिकवृष्टि-हेतुत्वेन पालयितास्ति[1] सोऽपुष्पः[2] फलवान् । अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः । मनुः अ० १ । श्लो० ४७ । (देव) देवः फलादीनां दाता (देवेभ्यः) दिव्यगुणेभ्यः (हविः) हवनीयम् (प्र) प्रकृष्टार्थे (दातुः) शोधयितुः । 'दैप् शोधने' इत्यस्य रूपम् । (अस्तु) भवति । अत्र लडर्थे लोट् । (चेतनम्) चेतयति येन तत् ॥ ११ ॥

**अन्वयः**—अयं [ देव ] देवो [ वनस्पते ] वनस्पतिर्देवेभ्यस्तद्धविरव[ सृजाव ]सृजति, यत्प्रदातुः सर्वपदार्थशोधयितुर्विदुषश्चेतनमस्तु भवति ॥ ११ ॥

**भावार्थः**—मनुष्यैः पृथिवीजलमयाः सर्वे पदार्था युक्त्या [क्रियासु] संप्रयोजिता अग्नेः प्रदीपका भूत्वा रोगाणां विनिग्रहेण बुद्धिबलप्रदत्वाद् विज्ञानवृद्धिहेतवो भूत्वा दिव्यगुणान् प्रकाशयन्तीति ॥ ११ ॥

वह अग्नि किससे प्रज्वलित हुआ इन कार्य्यों को सिद्ध करता है, इसका उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—यह ( देव ) फल आदि पदार्थों को देनेवाला, ( वनस्पतिः ) वनों=वृक्ष

१. वनशब्दो वृक्षादिसमूहे प्रसिद्धः, निघण्टौ (१ । १२) वनं उदकनामस्वपि पठ्यते । अकारान्त-वनशब्दसमानार्थकः 'वनस्' सान्तोऽपि शब्दः । तेन वनानां वृक्षसमूहानाम् उदकानां च पतिः पालयिता इति समासेनार्थः । वनस्पत्यादिभ्यो भूमिगर्भस्थस्य जलस्य रक्षणं भवति, वृष्टेराधिक्यमपि । एवमुभयथा जलानां रक्षकत्वाद् वनस्पतिरुच्यते ।

२. वै० य० मुद्रितेषु संस्करणेषु 'अपुष्पफलवान्' इत्यपपाठः ।

यादि समूहों को अधिक वृष्टि के द्वारा पालन करनेवाला [ पुष्परहित फलवान् वृक्ष ] भ्यः ) दिव्यगुणों के लिये ( हविः ) हवन करने योग्य पदार्थों को ( अवसृज ) उत्पन्न है। वह ( प्रदातुः ) सब पदार्थों की शुद्धि चाहनेवाले विद्वान् जन के ( चेतनम् ) विज्ञान त्पन्न करानेवाला ( अस्तु ) होता है॥ ११ ॥

भावार्थ—मनुष्यों से पृथिवीमय तथा जलमय सब पदार्थ युक्ति से क्रियाओं में युक्त किए ग्नि के प्रदीप्त करनेहारे होकर रोगों की निर्मूलता से बुद्धि और बल को देने के कारण के बढ़ाने के हेतु होकर दिव्यगुणों का प्रकाश करते हैं॥ ११ ॥



एतं क्रियाकाण्डं मनुष्याः कथं कुर्युरित्युपदिश्यते—

स्वाहा॑ य॒ज्ञं कृ॑णोत॒नेन्द्रा॑य॒ यज्व॑नो गृ॒हे। तत्र॑ दे॒वाँ उप॑ ह्वये ॥ १२ ॥

स्वाहा॑। य॒ज्ञम्। कृ॒णो॒त॒न॒। इन्द्रा॑य। यज्व॑नः। गृ॒हे॥ तत्र॑। दे॒वान्। उप॑। ह्व॒ये ॥ १२ ॥

पदार्थः—( स्वाहा ) या सत्क्रियासमूहास्ति तया ( यज्ञम् ) त्रिविधम् ( कृणोतन ) । अत्र तकारस्थाने तनबादेशः[1]। (इन्द्राय) परमैश्वर्य्यकरणाय (यज्वनः) यज्ञाऽनुष्ठातुः। सुयजोर्ङ्वनिप्। अ० ३। २। १०३ अनेन 'यज'धातोर्ङ्वनिप् प्रत्ययः। (गृहे) निवासस्थाने ालायां कलाकौशलसिद्धविमानादियानसमूहे वा (तत्र) तेषु कर्मसु (देवान्) परमविदुषः निकटार्थे (ह्वये) आह्वये ॥ १२ ॥

अन्वयः—हे शिल्पकारिणः ऋत्विजः! यथा यूयं यत्र यज्वनो गृह इन्द्राय देवानाहूय स्वाहा कृणोतन, तथा तत्राऽहं तानुपह्वये ॥ १२ ॥

अत्र लुप्तोपमालङ्कारः।

भावार्थः—मनुष्या विद्याक्रियावन्तो भूत्वा सम्यग्विचारेण क्रियासमूहजन्यं कर्मकाण्डं नित्यं [2]कुर्वन्तस्तत्र च विदुषामाह्वानं कृत्वा स्वयं वा तत्समीपं गत्वा तद्विद्याक्रियाकौशले वन्तु। नैव कदाचिद् युष्माभिरालस्येनैते उपेक्षणीये, इति परमेश्वर उपदिशति ॥१२॥

अस्य त्रयोदशसूक्तार्थस्याग्न्यादिदिव्यपदार्थोपकारग्रहणार्थस्योक्तरीत्या द्वादशसूक्तार्थेन सह तरस्तीति बोध्यम् ॥१२॥

इदमपि सूक्तं सायणाचार्य्यादिभिर्यूरोपदेशवासिभिर्विलसनादिभिश्चान्यथैव व्याख्यातम् ॥

इति त्रयोदशं सूक्तं पञ्चविंशो वर्गश्च समाप्तः ॥

---

१. द्र०—अ० ७। १। ४५॥

२. वै० य० मुद्रितेषु संस्करणेषु 'कुर्वन् तत्र' इत्यपपाठः।

इस क्रियाकाण्ड को मनुष्यलोग किस प्रकार से करें, सो उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे शिल्पविद्या से सिद्ध यज्ञ के करने और करानेवाले विद्वानो! जैसे तुम लोग जहां ( यज्वनः ) यज्ञकर्त्ता के ( गृहे ) घर यज्ञशाला तथा कलाकुशलता से सिद्ध किये हुए विमान आदि यानों में ( इन्द्राय ) परमैश्वर्य्य की प्राप्ति के लिये ( देवान् ) परम विद्वानों को बुलाके ( स्वाहा ) उत्तम क्रियासमूह के साथ ( यज्ञम् ) जिस तीनों प्रकार के यज्ञ को (कृणोतन) सिद्ध करनेवाले हो, वैसे [(तत्र)] वहां मैं उन उक्त चतुर श्रेष्ठ विद्वानों को ( उपह्वये ) प्रार्थना के साथ बुलाता रहूं ॥ १२ ॥

[इस मन्त्र में लुप्तोपमालङ्कार है ।]

**भावार्थ**—मनुष्य लोग विद्या तथा क्रियावान् होकर यथायोग्य विचार से बने हुए स्थानों में उत्तम विचार से क्रियासमूह से सिद्ध होनेवाले कर्मकाण्ड को नित्य करते हुए वहां विद्वानों को बुलाकर, वा आपही उनके समीप जाकर, उनकी विद्या और क्रिया की चतुराई को ग्रहण करें । हे सज्जन लोगो ! तुमको विद्या और क्रिया की कुशलता आलस्य से कभी नहीं छोड़नी चाहिये। क्योंकि ऐसी ही ईश्वर की आज्ञा सब मनुष्यों के लिये है ॥ १२ ॥

इस तेरहवें सूक्त के अर्थ की अग्नि आदि दिव्य पदार्थों के उपकार लेने के विधान से बारहवें सूक्त के अभिप्राय के साथ संगति जाननी चाहिये ॥

यह भी सूक्त **सायणाचार्य्य** आदि तथा यूरोपदेशवासी **विलसन** आदि साहबों ने विपरीत ही वर्णन किया है ॥१२॥

यह तेरहवां सूक्त और पच्चीसवां वर्ग पूरा हुआ ॥



अथास्य द्वादशर्चस्य चतुर्दशसूक्तस्य 'काण्वो मेधातिथिर्ऋषिः[1] ।
विश्वेदेवा देवताः । गायत्री[2] छन्दः । षड्जः स्वरः ॥

**तत्राविनौ बहुभिः पदार्थैः सह [3]संयोगिनावीश्वरभौतिकावग्नी उपदिश्येते—**

**ऐभिरग्ने दुवो गिरो विश्वेभिः सोमपीतये । देवेभिर्याहि यक्षि च ॥ १ ॥**

आ । एभिः । अग्ने । दुवः । गिरः । विश्वेभिः । सोमऽपीतये ॥ देवेभिः । याहि । यक्षि । च ॥१॥

१. वै० य० मुद्रितेषु संस्करणेषु 'कण्वो' इत्यपपाठः ।

२. सामान्येनेति शेषः । विशेषेण तु—१-६, ९ गायत्री; ७, ८ पिपीलिकामध्या निचृद्गायत्री; १०, ११ विराड्गायत्री; १२ निचृद्गायत्री ।

३. वै० य० मुद्रितेषु संस्करणेषु 'संयोगीश्वरभौतिकावग्नी' इति पाठः ।

पदार्थः—( आ ) समन्तात् ( एभिः ) प्रत्यक्षैः। अत्र 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ २। ४। ३२ अनेन अशादेशः। ( अग्ने ) सर्वत्र व्याप्तेश्वर! भौतिको वा। अत्रान्त्यपक्षे अ व्यत्ययः। ( दुवः ) परिचर्य्याम् ( गिरः ) वेदवाणीः ( विश्वेभिः ) सर्वैः। अत्र बहुलं दसि [अ० ७। १। १०] इति भिस ऐस् [न] भवति। (सोमपीतये) सोमानां सुखकारकाणां तेः पानं यस्माद् यज्ञात्, तस्मै। अत्र सह सुपा [अ० २। १। ४] इति समासः। (देवेभिः) र्गुणैः पदार्थैर्विद्वद्भिर्वा सह (याहि) प्राप्तो भव भवति वा (यक्षि) यजामि संगमयामि वा। लडर्थे लुङडभावश्च। (च) पूर्वार्थाकर्षणे ॥ १ ॥

अन्वयः—हे अग्ने जगदीश्वर! त्वमेभिर्विश्वेभिर्देवेभिः सह सोमपीतये दुवो गिरो वाणीर्[आ]याहि प्राप्तो भव। [2]ईश्वरस्य दुवः परिचर्यां गिरो वेदवाणीश्चाहं यक्षि संगमयामि, प्रेकः ॥

[योऽ]यम[ग्नेऽ]ग्निरेभिर्विश्वेभिर्देवेभिः सह समागमेन सोमपीतये[दुवः परिचर्यां गिरः तीश्चायाहि प्रापयति, तम]हं यक्षि यजामि[3], इति द्वितीयः ॥ १ ॥

अत्र श्लेषालङ्कारः।

भावार्थः—मनुष्याणां या या व्यावहारिकपारमार्थिकसुखेच्छा भवेत्, [तदर्थं] यैर्वायुजल-थवीमयादिभिर्यन्त्रयानैः सहाग्निं संगतं कृत्वा क्रियाः क्रियन्ते, ईश्वरस्याज्ञासेवनं वेदानामध्ययना-।पने तदुक्तानुष्ठानं च त एवाभित आनन्दं प्राप्नुवन्ति ॥ १ ॥

अब चौदहवें सूक्त का आरम्भ है। उसके पहिले मन्त्र में बहुत पदार्थों के साथ संयोग रनेवाले ईश्वर और भौतिक अग्नि का उपदेश किया है—

पदार्थान्वयभाषा—हे (अग्ने) सर्वव्यापक जगदीश्वर! आप (एभिः) इन (विश्वेभिः) सब देवेभिः ) दिव्यगुणों और विद्वानों के साथ ( सोमपीतये ) सुख करनेवाले पदार्थों के पीने के नये ( दुवः ) सत्कारादि व्यवहार, तथा ( गिरः ) वेदवाणियों को ( आयाहि ) प्राप्त हूजिये। [4]ईश्वर की परिचर्या=सत्कारादि व्यवहार और वेदवाणियों को (यक्षि) संगत करता हूं, अर्थात् पने मन और कर्मों में अच्छी प्रकार सदैव यथाशक्ति धारण करता हूं ॥१॥

जो यह ( अग्ने ) भौतिक अग्नि ( एभिः ) इन ( विश्वेभिः ) सब ( देवेभिः ) दिव्य-और पदार्थों के साथ ( सोमपीतये ) जिससे सुखकारक पदार्थों का पीना हो, उस यज्ञ के लिये

---

१. वै० य० मुद्रितेषु संस्करणेषु 'एमन्नादिषु छन्दसि पररूपं वक्तव्यम्। अ० ६। १। ९४। अनेन ररूपम्' इति मुद्रयते। अयमपपाठः। नह्यत्र क्वचित् पररूपकार्यं विद्यते। अपि च १, २, ३ संस्करणेषु तिकस्थानसंकेतः अ० ६। ३। १४ उपलभ्यते, स तु सर्वथा चिन्त्यः। एतेनाप्यस्य पाठश्रंश प्रमाणीक्रियते।

२. 'ईश्वरस्य······संगमयामि' एतावान् पाठो वै० य० मुद्रितेषु संस्करणेषु द्वितीयान्वये दृश्यते। तत्र तिकार्थेऽस्य पाठस्यासम्बन्धादिह नाठोऽयमानीतः।

३. अत्र पूर्वा टिप्पणी २ द्रष्टव्या।

४. यह प्रथम अन्वय की भाषा द्वितीय भावार्थ के अन्त में वै० य० मुद्रित संस्करणों में मिलती है।

(दुवः) सत्कारादि व्यवहार तथा (गिरः) वेदवाणियों को (आयाहि) प्राप्त कराता है, उसको मैं इन सब विद्वानों के साथ उक्त सोम के पीने के लिये ( यक्षि ) स्वीकार करता हूं[1] ॥ २ ॥ १ ॥

इस मन्त्र में श्लेषालङ्कार है ।

**भावार्थ**—जिन मनुष्यों को व्यवहार और परमार्थ के सुख की इच्छा हो, वे यदि वायु जल और पृथिवीमयादि यन्त्र तथा विमान आदि रथों के साथ अग्नि को संगत करके उत्तम क्रियाओं को सिद्ध करते, और ईश्वर की आज्ञा का सेवन, वेदों का पढ़ना-पढ़ाना और वेदोक्त कर्मों का अनुष्ठान करते रहते हैं, तो सब प्रकार से आनन्द भोगते हैं ।। १ ॥



अथाग्निशब्देनोभावर्थावुपदिश्येते—

आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धियः । देवेभिरग्न आ गहि ।।२।।

आ । त्वा । कण्वाः । अहूषत । गृणन्ति । विप्र । ते । धियः ॥ देवेभिः । अग्ने । आ । गहि ॥२॥

**पदार्थः**—( आ ) आभिमुख्ये ( त्वा ) त्वां जगदीश्वरं, तं भौतिकं वा ( कण्वाः ) मेधाविनो विद्वांसः । कण्व इति मेधाविनामसु पठितम् । निघं० ३ । १५ । ( अहूषत ) आह्वयन्ति, शिल्पार्थं स्पर्धयन्ति वा । अत्र लडर्थे लुङ्, बहुलं छन्दसि [अ० ६ । १ । ३३] इति संप्रसारणं च । (गृणन्ति) अर्चन्ति शब्दयन्ति वा । गृणातीत्यर्चतिकर्मसु पठितम् । निघं० ३ । १४ । गॄ शब्दे इति पक्षे[2] शब्दार्थः । (विप्र) विविधज्ञानेन पदार्थान् प्राति पूरयति स विद्वान्, तत्संबुद्धौ (ते) तव तस्य वा [3][(धियः) प्रज्ञाः (देवेभिः) दिव्यगुणैर्भोगैर्विद्वद्भिश्च सह] (अग्ने) विज्ञान-स्वरूप ! प्राप्तिहेतुर्भौतिकोऽग्निर्वा (आ) क्रियायोगे (गहि) प्राप्नुहि, प्रापयति वा । अत्र पक्षे व्यत्ययः । बहुलं छन्दसि [अ० २ । ४ । ७३] इति शपो लुक् । वा छन्दसि । अ० ३ । ४ । ८८ इति हेरपित्त्वात्, अनुदात्तोपदेश० । ६ । ४ । ३७ अनेनानुनासिकलोपश्च ॥ २ ॥

**अन्वयः**—हे अग्ने ईश्वर ! यथा कण्वा मेधाविनस्त्वा त्वां गृणन्त्याहूषताह्वयन्ति, तथैव वयमपि गृणीम आह्वयामः । हे विप्र मेधाविन् ! तथा [च] ते तव धियो यं गृणन्त्याह्वयन्ति, तथा सर्वे वयं मिलित्वा तमेव नित्यमुपास्महे । हे मङ्गलमय परमात्मंस्त्वं कृपया देवेभिः सहागहि समन्तात् प्राप्तो भव, इत्येकः ।।

हे विप्र विद्वन् ! यथा कण्वा अन्ये विद्वांसस् [त्वा तम]ग्निं गृणन्त्याहूषताह्वयन्ति, तथैव त्वमपि गृणीह्याह्वय । यथा देवेभिः सहाग्न आगह्ययं भौतिकोऽग्निः समन्ताद्विदितगुणो भूत्वा

१. वै० य० मुद्रित संस्करणों में यहां से आगे प्रथम मन्त्रार्थ के उत्तरार्ध की शेष पङ्क्तियां छपी हुई मिलती है।

२. धातुस्तूभयत्र समान एव, निघण्ट्वनुसारं गृणातेरर्चत्यर्थः, धातुपाठानुसारं शब्दार्थः इत्येव भेदः ।

३. अयं कोष्ठान्तर्गतः पाठो वै० य० मुद्रितेषु संस्करणेषु प्रमादान्नष्टम् । भाषापदार्थे तूपलभ्यते ।

यगुणसुखप्रापको भवति. यमग्निं ते तव धियो बुद्धयो गृणन्ति स्पर्धन्ते, [तथा] तेन त्वं बहूनि र्य्याणि साधय, इति द्वितीयः ॥ २ ॥

अत्र श्लेषालङ्कारः ।

भावार्थः—मनुष्यैरस्यां सृष्टावीश्वररचितान् पदार्थान् दृष्ट्वेदं वाच्यमिमे सर्वे धन्यवादाः तयश्चेश्वरायैव संगच्छन्त इति ॥ २ ॥

अब अगले मन्त्र में अग्नि शब्द से दो अर्थों का उपदेश किया है—

पदार्थान्वयभाषा-- हे (अग्ने) जगदीश्वर ! जैसे (कण्वाः) मेधावी विद्वान् लोग (त्वा) पका (गृणन्ति) पूजन करते,तथा (आहूषत) प्रार्थना करते हैं, वैसे ही हम लोग भी आपका तन और प्रार्थना करें। हे (विप्र) मेधाविन् विद्वन् ! और जैसे (ते) तेरी (धियः) बुद्धि जिस ःवर के (गृणन्ति) गुणों का कथन और प्रार्थना करती हैं, वैसे हम सब लोग परस्पर मिलकर त्य उसी की उपासना करते रहें। हे मङ्गलमय परमात्मन् ! आप कृपा करके (देवेभिः) उत्तम गों के प्रकाश और भोगों के देने के लिये हम लोगों को (आगहि) अच्छी प्रकार प्राप्त जिये ॥ १ ॥

हे (विप्र) मेधावी विद्वान् मनुष्य ! जैसे (कण्वाः) अन्य विद्वान् लोग (त्वा) उस ग्नि के (गृणन्ति) गुणों का प्रकाश और (आहूषत) शिल्पविद्या के लिये उसे युक्त करते हैं, वैसे म भी करो। और जैसे (देवेभिः) दिव्य गुणों के साथ (अग्ने) यह अग्नि (आगहि) अच्छी प्रकार ादित गुणोंवाला होकर दिव्य गुणों और सुखों को प्राप्त कराता है, तथा जिस अग्नि के (ते) री (धियः) बुद्धि गुणों का कथन तथा स्पर्धा करती हैं, वैसे उससे तुम बहुत से कार्य्यों को ाद्ध करो ॥ २ ॥ २ ॥

इस मन्त्र में श्लेषालङ्कार है।

भावार्थ-- मनुष्यों को इस संसार में ईश्वर के रचे हुए पदार्थों को देखकर यह कहना हिये कि ये सब धन्यवाद और स्तुति ईश्वर ही में घटती हैं ॥ २ ॥



अथ विश्वेषां देवानां मध्यात् कांश्चिदुपदिशति—

इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भगम् । आदित्यान् मारुतं गणम् ॥३॥

इन्द्रवायू इति । बृहस्पतिम् । मित्रा । अग्निम् । पूषणम् । भगम् ॥ आदित्यान् । मारुतम् । गणम् ॥३॥

पदार्थः—(इन्द्रवायू) इन्द्रश्च वायुश्च तौ विद्युत्पवनौ (बृहस्पतिम्) बृहतां पालनहेतुं सूर्य्यप्रकाशम् । तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च । अ० ६ । १ । १५७ अनेन वार्तिकेन बृहस्पतिः सिद्धः । पातेर्डतिः । उ० ४ । ५७ अनेन पतिशब्दश्च (मित्रा) मित्रं प्राणम् । अत्र सुपां सुलुग्० [अ० ७।१।३९] इत्यमः स्थान आकारादेशः । (अग्निम्) भौतिकम् (पूषणम्)

ओषध्यादिसमूहपुष्टिप्रापकं[1] चन्द्रलोकम्। पूषेति पदनामसु पठितम्। निघं० ५।६ अनेन पुष्टिप्राप्त्यर्थश्चन्द्रो गृह्यते। (भगम्) भजते सुखानि येन तच्च सत्यविराज्यधनम्। भग इति धननामसु पठितम्। निघं० २।१०। अत्र 'भज'धातोः 'पुंसि संज्ञायां घः प्रायेण।' अ० ३।३।११८ अनेन घः प्रत्ययः[2]। भगो भजतेः। निरु० १।७। (आदित्यान्) द्वादशमासान् (मारुतम्) मरुतामिमम्[3] (गणम्) वायुसमूहम्॥ ३॥

**अन्वयः**—हे कण्वा भवन्तः[4] क्रियानन्दसिद्धय इन्द्रवायू बृहस्पतिं [मित्रा] मित्रमग्निं पूषणं भगमादित्यान्मारुतं गणमहूषत स्पर्धध्वं गृणीत॥ ३॥

**अत्र पूर्वस्मान्मन्त्रात्** 'कण्वा अहूषत गृणन्ति' इति पदत्रयमनुवर्तते।

**भावार्थः**—ये मनुष्या एतानिन्द्रादिपदार्थानीश्वररचितान् विदितगुणान् कृत्वा क्रियासु संप्रयोजयन्ति[5], ते सुखिनो भूत्वा सर्वान् प्राणिनो मृडयन्ति॥ ३॥

अब अगले मन्त्र में विश्वे देवों में से कोई एक देवों का उपदेश किया है—

**पदार्थान्वयभाषा**—हे (कण्वाः[6]) बुद्धिमान् विद्वान् लोगो! आप क्रिया तथा आनन्द की सिद्धि के लिये (इन्द्रवायू) बिजुली और पवन, (बृहस्पतिम्) बड़े से बड़े पदार्थों के पालनहेतु सूर्य के प्रकाश, (मित्रा) प्राण, (अग्निम्) प्रसिद्ध अग्नि, (पूषणम्) ओषधियों के समूह की पुष्टि करनेवाले चन्द्रलोक, (भगम्) सुखों के प्राप्त करानेवाले धनयोग्य राज्य आदि धन, (आदित्यान्) बारहों महीने, और (मारुतम्) पवनों के (गणम्) समूह को (अहूषत[6]) ग्रहण तथा (गृणन्ति[6]) अच्छी प्रकार जानके संयुक्त करो॥ ३॥

इस मन्त्र में पूर्व मन्त्र से 'कण्वाः'; 'अहूषत' और 'गृणन्ति' इन तीन पदों की अनुवृत्ति आती है।

**भावार्थ**—जो मनुष्य ईश्वर के रचे हुए उक्त इन्द्र आदि पदार्थों, और उनके गुणों को जानकर क्रियाओं में संयुक्त करते हैं, वे आप सुखी होकर सब प्राणियों को सुखयुक्त सदैव करते हैं॥३॥



१. वै० य० मुद्रितेषु संस्करणेषु 'पुष्टयोषध्यादिसमूहप्रापकम्' इत्यपपाठः।

२. केचन वैयाकरणाः 'खनो घ च' (अ० ३।३।१२५) इति सूत्रे चित्करणसामर्थ्यात् 'खलः, भगः' पदं च साधयन्ति।

३. अत्र सायणः 'मारुतं मरुतां विकारः, अनुदात्तादेश्च (अ० ४।३।१३८) इत्यञ्, ञित्त्वादाद्युदात्तत्वम्' इति व्याख्यातवान्, तच्चिन्त्यम्। 'मारुतं गणम्' इति मन्त्रे श्रवणात् मारुतस्य वाच्यो गणः। न च गणो विकारो भवति। तस्मादत्र 'अनुदात्तादेरञ्' (अ० ४।२।४३) इत्यनेन समूहेऽञ् प्रत्ययो द्रष्टव्यः।

४. अत्र यूयमित्यपेक्षते।

५. वै० य० मुद्रितेषु संस्करणेषु 'संप्रयुज्यन्ते' अपपाठः।

६. इस पद की अनुवृत्ति पूर्व मन्त्र से आती है।

एवं संप्रयोजिता एते किंहेतुका भवन्तीत्युपदिश्यते—

प्र वो भ्रियन्त इन्दवो मत्सरा मादयिष्णवः । द्रप्सा मध्वश्चमूषदः ॥४॥

प्र । वः । भ्रियन्ते । इन्दवः । मत्सराः । मादयिष्णवः ॥ द्रप्साः । मध्वः । चमूऽसदः ॥४॥

पदार्थः—( प्र ) प्रकृष्टार्थे ( वः ) युष्मभ्यम् ( भ्रियन्ते ) ध्रियन्ते ( इन्दवः ) रसवन्तः माद्योषधिगणाः ( मत्सराः ) माद्यन्ति हर्षन्ति यैस्ते । अत्र कृधूमदिभ्यः कित् । उ० ३ । ७३ नेन मदेः सरन् [1]प्रत्ययः । (मादयिष्णवः) हर्षनिमित्ताः । अत्र णेश्छन्दसि । अ० ३ । २ । १३७ नेन ण्यन्तान्मदेरिष्णुच् प्रत्ययः । ( द्रप्साः ) दृप्यन्ति संहृष्यन्ते बलानि सैन्यानि वा यैस्ते । अ दृप हर्षणमोहनयोः इत्यस्माद् बाहुलकात् करणकारक औणादिकः सः[2] प्रत्ययः । ( मध्वः ) धुरगुणवन्तः ( चमूषदः ) [3]यैश्चमूषु सेनासु सीदन्ति ते । अत्र कृतो बहुलम् [अ० ३ । ३ । १३ वा०] इति वार्त्तिकमाश्रित्य सत्सूद्विष० । अ० ३ । २ । ६१ अनेन करणे क्विप् । कृषिचमि- नि० । उ० १ । ८१ अनेन चमूशब्दश्च सिद्धः । चमन्त्यदन्ति विनाशयन्ति शत्रुबलानि याभिस्ता- वम्वः ॥ ४ ॥

अन्वयः—हे मनुष्याः ! यथा मया वो युष्मभ्यं पूर्वमन्त्रोक्तैरिन्द्रादिभिरेव मध्वो मत्सरा मादयिष्णवो द्रप्साश्चमूषद इन्दवः प्रभ्रियन्ते प्रकृष्टतया ध्रियन्ते, तथा युष्माभिरपि [4]मदर्थमेते म्यग्धार्य्याः ॥ ४ ॥

भावार्थः—ईश्वरोऽभिवदति—मया धारितैर्मन्त्रचितैः पूर्वमन्त्रप्रतिपादितैर्विद्युदादिभिर्ये सर्वे दार्थाः पोष्यन्ते, ये तेभ्यो वैद्यकशिल्पशास्त्ररीत्या प्रकृष्टरसोत्पादनेन शिल्पकार्यसिद्ध्योत्तम- सेनासंपादनाद्[5] रोगनाशविजयप्राप्ति[6] कुर्वन्ति, ते[7] विविधम् आनन्दं भुञ्जते इति ॥ ४ ॥

---

१. अत्र पूर्वसूत्रात् (उ० ३ । ७२) चितोऽनुवृत्त्याऽन्तोदात्तत्वम् ।

२. वृतृवदिवचि० (उ० ३ । ६२) इत्यादिना विहितः सः दृपेरपि भवति । 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' (अ० ६ । १ । ५९) इत्यनेन रमागमः ।

३. वै० य० मुद्रितेषु संस्करणेषु 'ये चमूषु' इत्यपपाठः, अनुपदं करणे क्विपो विधानात् ।

४. 'हे मनुष्याः !' इति ईश्वरवचनम् (द्र०—भावार्थः) । तथा सति 'मदर्थम्' इत्यस्य अभिप्रायो ईश्वरार्थमिति निष्पद्यते, तच्चायुक्तम् । अतः ईश्वरवचने 'मदर्थम्' नान्वेति, अन्यवचने तु समन्वेति ।

५. विविभक्ति-विषये पूर्वमुक्तम् ( पृष्ठ ५७१ टि० १ ) ।

६. रोगनाशश्च विजयप्राप्तिश्चेति समाहारे नपुंसकत्वात् 'रोगनाशविजयप्राप्ति' इत्येवं पाठेन भाव्यम्, इतरेतरयोगे च 'रोगनाशविजयप्राप्ती' इत्यनेन । यद्वा—लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति वैयाकरण- राद्धान्तात् समाहारे नपुंसकत्वाभावो द्रष्टव्यः । तथा च पाणिनीयं सूत्रम्—'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' ( अ० १।२।२७ ) इति समाहारेऽपि पुंस्त्वं श्रूयते ।

७. वै० य० मुद्रितेषु संस्करणेषु 'तैर्विविध आनन्दं भुञ्जते' इत्यसम्बद्धः पाठः ।

उक्त पदार्थ इस प्रकार संप्रयुक्त किये हुए किस-किस कार्य को सिद्ध करते हैं, इस विषय का उपदेश अगले मन्त्र में किया है —

**पदार्थान्वयभाषा**—हे मनुष्यो ! जैसे मैंने ( वः ) तुम लोगों के लिये, जो पूर्व मन्त्र में इन्द्र आदि पदार्थ कहे गये हैं, उन्हीं से ( मध्वः ) मधुर गुणवाले, ( मत्सराः ) जिनसे उत्तम आनन्द को प्राप्त होते हैं, ( मादयिष्णवः ) आनन्द के निमित्त, ( द्रप्साः ) जिनसे बल अर्थात् सेना के लोग अच्छी प्रकार आनन्द को प्राप्त होते हैं, और ( चमूषदः ) जिनसे विजय शत्रुओं की सेनाओं में स्थिर होते हैं, उन ( इन्दवः ) रसवाले सोम आदि ओषधियों के समूहों को ( [प्र] भ्रियन्त ) अच्छी प्रकार धारण कर रक्खा है, वैसे तुम लोग भी मेरे लिये इन पदार्थों को धारण करो ॥ ४ ॥

**भावार्थ**—ईश्वर सब मनुष्यों के प्रति कहता है कि— पूर्व मन्त्र में प्रकाशित किये, मेरे द्वारा रचे और धारण किये गये बिजुली आदि पदार्थों से जो सब पदार्थ संप्रयुक्त किये हैं, जो मनुष्य इनसे वैद्यक वा शिल्पशास्त्रों की रीति से उत्तम रस के उत्पादन और शिल्प कार्यों की सिद्धि के साथ उत्तम सेना के संपादन होने से रोगों का नाश तथा विजय की प्राप्ति करते हैं, वे लोग नाना प्रकार के सुख को भोगते है ॥ ४ ॥



अथाग्निशब्देनेश्वर उपदिश्यते—

ईळते त्वामवस्यवः कण्वासो वृक्तबर्हिषः । हविष्मन्तो अरंकृतः ॥५॥

ईळते । त्वाम् । अवस्यवः । कण्वासः । वृक्तऽबर्हिषः ॥ हविष्मन्तः । अरम्ऽकृतः ॥५॥

**पदार्थः**—( ईळते ) स्तुवन्ति ( त्वाम् ) सर्वस्य जगत उत्पादकं धारकं जगदीश्वरम् ( अवस्यवः ) आत्मनोऽवो रक्षणादिकमिच्छन्तस्तच्छीलाः । अत्र 'अव' धातोः सर्वधातुभ्योऽसुन् । उ० ४ । १८९ इति भावेऽसुन्, ततः सुप आत्मनः क्यच् इति क्यच्, ततः क्याच्छन्दसि । अ० ३ । २ । १७० अनेन ताच्छील्य उः प्रत्ययः (कण्वासः) मेधाविनो विद्वांसः (वृक्तबर्हिषः) ऋत्विजः (हविष्मन्तः) हवींषि दातुमादातुमत्तुं योग्यान्यतिशयितानि वस्तूनि विद्यन्ते येषान्ते । अत्रातिशायने मतुप् । (अरंकृतः) सर्वान् पदार्थानलं कर्त्तुं शीलं येषां ते । अत्र अन्येभ्योऽपि दृश्यते । अ० ३ । २ । १७८ अनेन ताच्छील्ये[1]ऽर्थे क्विप् ॥ ५ ॥

**अन्वयः**—हे जगदीश्वर ! [2]वयं हविष्मन्तोऽरंकृतोऽवस्यवः कण्वासो वृक्तबर्हिषो विद्वांसो यं त्वामीळते, तमीडीमहि ॥ ५ ॥

**भावार्थः**—हे सर्वसृष्ट्युत्पादक ! यतो भवता सर्वप्राणिसुखार्थं सर्वे पदार्था रचयित्वा धारितास्तस्मात्त्वामेव स्तुवन्तः सर्वस्य रक्षणमिच्छन्तः शिक्षाविद्याभ्यां सर्वान् मनुष्यान् भूषयन्तो वयं नित्यं प्रयतामह इति ॥ ५ ॥

---

१. 'आ क्वेस्तच्छील०' (अ० ३।२।१३४) इत्यधिकारविधायकः सूत्राश्रयात् (द्र०—काशिका ३।२।१३४) क्विप् पर्यन्ताः प्रत्ययास्ताच्छील्ये भवन्ति ।

२. पदमिदम् 'ईडीमहि' पदेन संबध्यते ।

अब अगले मन्त्र में अग्निशब्द से ईश्वर का उपदेश किया है—

**पदार्थान्वयभाषा**—हे जगदीश्वर ! ( हविष्मन्तः ) जिनके देने-लेने और भोजन करने य उत्तम पदार्थ विद्यमान हैं, ( अरंकृतः ) जो सब पदार्थों को सुशोभित करनेवाले हैं, वस्यवः) जिनका अपनी रक्षा चाहने का स्वभाव है, वे (कण्वासः) बुद्धिमान् और (वृक्तबर्हिषः) थाकाल यज्ञ करनेवाले विद्वान् ऋत्विक् लोग जिस ( त्वाम् ) सब जगत् के उत्पन्न करनेवाले पकी ( ईडते ) स्तुति करते हैं, उसी आपकी हम लोग स्तुति करें ॥ ५ ॥

**भावार्थ**—हे सब सृष्टि के उत्पन्न करनेवाले परमेश्वर ! जिससे आपने सब प्राणियों के सुख लिये सब पदार्थों को रचकर धारण किया है, इससे हम लोग आपही की स्तुति, सब की रक्षा की च्छा, शिक्षा और विद्या से सब मनुष्यों को भूषित करते हुए उत्तम क्रियाओं के लिये निरन्तर च्छी प्रकार यत्न करते हैं ॥ ५ ॥



ईश्वररचिता विद्युदादयः कीदृग्गुणाः सन्तीत्युपदिश्यते—

घृतपृष्ठा मनोयुजो ये त्वा वहन्ति वह्नयः । आ देवान्त्सोमपीतये ॥६॥

घृतऽपृष्ठाः । मनःऽयुजः । ये । त्वा । वहन्ति । वह्नयः ॥ आ । देवान् । सोमऽपीतये ॥६॥

**पदार्थः**—( घृतपृष्ठाः ) घृतमुदकं पृष्ठ आधारे येषां ते ( मनोयुजः ) मनसा विज्ञानेन ज्यन्ते ते । अत्र सत्सूद्विष० । अ० ३ । २ । ६१ अनेन कृतो बहुलम् [अ० ३ । ३ । ११३ वा०] कर्मणि क्विप् । ( ये ) विद्युदादयस्तृतीयमन्त्रोक्ताः[1] ( त्वा ) तमलं[2]कर्त्तुं योग्यं यज्ञम् वहन्ति ) प्रापयन्ति । अत्रान्तर्गतो ण्यर्थः । ( वह्नयः ) वहन्ति प्रापयन्ति वार्त्ताः पदार्थान् नानि च यैस्ते । अत्र वहिश्रिश्रुयु० । उ० ४ । ५१ । अनेन करणे निः प्रत्ययः[3] । ( आ ) मन्तात् क्रियायोगे (देवान्) दिव्यगुणान् भोगान् ऋतून् वा । ऋतवो वै देवाः । श० ७ । २ । । २६[4] (सोमपीतये) सोमानां पदार्थानां पीतिः पानं यस्मिंस्तस्मै यज्ञाय ॥६॥

**अन्वयः**—हे विद्वांसो य इमे युक्त्या संप्रयोजिता घृतपृष्ठा मनोयुजो वह्नयो विद्युदादयः मपीतये त्वा तमेतं यज्ञं देवांश्चावहन्ति, ते सर्वैर्मनुष्यैर्यथावद्[5] विदित्वा कार्य्यसिद्धये म्प्रयोज्याः ॥ ६ ॥

**भावार्थः**—ये स्तनयित्न्वादयस्त एव जलमुपरि गमयन्त्यागमयन्ति वा ताराख्येन यन्त्रेण

---

१. एतत्पूर्वतस्येति शेषः । वै० य० मुद्रितेषु संस्करणेषु 'चतुर्थमन्त्रोक्ताः' इत्यपपाठः ।

२. अयमभिप्रायः पूर्वमन्त्रपठितम् 'अरङ्कृतः' पदं मनसि निधायोक्तः ।

३. अत्रैव सूत्रे 'नित्' पाठान्नित्वे आद्युदात्तत्वम् ।

४. अध्यायानुसारम्—श० ७।२।४।२६ ॥

५. वै० य० मुद्रितेषु १-२-३ संस्करणेषु 'यथा तद्विदित्वा' इत्यपपाठः ।

संचालिता विद्युन्मनोवेगवद्वार्त्तां देशान्तरं प्रापयति[1]। एवं सर्वेषां पदार्थानां गुणानां च प्रापका एत एव सन्तीतीश्वराज्ञापनम् ॥ ६ ॥

इति षड्विंशो वर्गः समाप्तः ॥

ईश्वर के रचे हुए बिजुली आदि पदार्थ कैसे गुणवाले हैं, सो अगले मन्त्र में उप किया है—

पदार्थान्वयभाषा—हे विद्वानो ! [(ये)] जो युक्ति से संप्रयुक्त किये हुए, (घृतपृष्ठाः) जिनके पृष्ठ अर्थात् आधार में जल है, तथा (मनोयुजः) जो उत्तम ज्ञान से रथों में युक्त कि जाते है, ऐसे (वह्नयः) जो वार्त्ता पदार्थ वा यानों को दूर देश में पहुंचानेवाले विद्युत् अग्नि आ पदार्थ (सोमपीतये) जिसमें सोम आदि पदार्थों का पीना होता है उस यज्ञ के लिये (त्वा) भूषित करने योग्य यज्ञ को, और (देवान्) दिव्यगुण दिव्यभोग और गमन आदि ऋतुओं (आवहन्ति) अच्छी प्रकार प्राप्त कराते हैं, उनको सब मनुष्यों को यथार्थ जानके कार्यों सिद्ध करने के लिये ठीक-ठीक प्रयुक्त करना चाहिये ॥ ६ ॥

भावार्थ—जो मेघ आदि पदार्थ हैं, वे ही जल को अन्तरिक्ष अर्थात् अन्तरिक्ष को पहुंच और वहां से वर्षाते हैं। और ताराख्य यन्त्र से चलाई हुई बिजुली मन के वेग के समान वार्त्ता को एक देश से दूसरे देश में प्राप्त कराती है[2]। इस प्रकार सब पदार्थों और गुणों को प्रा करानेवाले ये ही पदार्थ हैं, ऐसी ईश्वर की आज्ञा है ॥ ६ ॥

यह छब्बीसवां वर्ग समाप्त हुआ ॥



अथाग्निशब्देनेश्वरभौतिकावुपदिश्येते—

तान् यजत्राँ ऋतावृधोऽग्ने पत्नीवतस्कृधि । मध्वः सुजिह्व पायय ॥७॥

तान् । यजत्रान् । ऋतऽवृधः । अग्ने । पत्नीऽवतः । कृधि ॥ मध्वः । सुऽजिह्व । पायय ॥७॥

पदार्थः—(तान्) विद्वदादीन् (यजत्रान्) यष्टुं संगमयितुमर्हान्। अत्र अमिनक्षि यजिवधि०। उ० ३। १०५ अनेन यजधातोरत्रन् प्रत्ययः। (ऋतावृधः) ऋतमुदकं सत्यं यज्ञं वर्धयन्ति तान्। अत्र अन्येषामपि दृश्यते [अ० ६। ३। १३६] इति दीर्घः। (अग्ने) जगदीश्वर भौतिको वा (पत्नीवतः) प्रशस्ताः पत्न्यो विद्यन्ते येषां तानस्मान्। अत्र प्रशंसार्थे मतुप्। (कृधि) करोषि करोति वा। अत्र लडर्थे लोट्, पक्षे व्यत्ययः, विकरणाभावः,[3] श्रुशृणुपृकृ०। अ० ६। ४

---

१. पूर्वत्र भूमिकायां २३४ तमे पृष्ठे 'तारविद्यामूलं संक्षेपतः' इति भाष्यकारीयो लेखः, अस्यास्तृतीया टिप्पणी द्रष्टव्या।

२. इस विषय में पूर्व पृष्ठ २३४-२३६ पर निर्दिष्ट 'तारविद्यामूल' विषय, तथा पृष्ठ २३५ पर छपा टि० २ देखनी चाहिये।

३. द्र०—पूर्वत्र पृष्ठ ५८६, टि० १।

अनेन हेत्वर्थादेशश्च। (मध्वः) उत्पन्नस्य मधुरादिगुणयुक्तस्य पदार्थसमूहस्य रसभोगम् सुजिह्व ) सुष्ठु जोहूयन्ते धार्यन्ते यया जिह्वया शक्त्या तत्सहित ! सुष्ठु हूयन्ते जिह्वायां वालायां यस्य सोऽग्निः। (पायय) पाययति वा। [1]अत्र पक्षे लडर्थे लोट्[पुरुष व्यत्ययश्च]॥७॥

अन्वयः—हे अग्ने ! त्वं तान् यजत्रानृतावृधो देवान् करोषि, तैर्नः पत्नीवतः कृधि। हे जिह्व ! मध्वो रसभोगं कृपया पायय, इत्येकः॥

अयम[ग्नेऽ]ग्निः [सुजिह्व] सुजिह्वस्तानृतावृधो यजत्रान् देवान् [कृधि] करोति, स सम्यक् प्रयुक्तः सन्नस्मान् पत्नीवतः सुगृहस्थान् करोति, मध्वो रसं [पायय] पाययते तत्पाने हेतुरस्ति, इति द्वितीयः॥ ७॥

अत्र श्लेषालङ्कारः।

भावार्थः—मनुष्यैरीश्वराराधनेन सम्यगग्निप्रयोगेण च रससारादीन् रचयित्वोपकृत्य गृहाश्रमे सर्वाणि कार्य्याणि निर्वर्त्तयितव्यानीति॥ ७॥

अब अगले मन्त्र में अग्नि शब्द से ईश्वर और भौतिक अग्नि का उपदेश किया है—

पदार्थान्वयभाषा—हे ( अग्ने ) जगदीश्वर ! आप ( तान् ) जिन विद्युत् आदि दिव्य, (यजत्रान्) कला आदि पदार्थों में संयुक्त करने योग्य, तथा ( ऋतावृधः ) सत्यता और यज्ञादि उत्तम कर्मों की वृद्धि करनेवाले पदार्थों को रचते हैं, उन से हम लोगों को ( पत्नीवतः ) उत्तम प्रशंसायुक्त स्त्रीवाले अर्थात् गृहस्थ (कृधि) बनाइये। और हे (सुजिह्व) श्रेष्ठता से पदार्थों को धारण करने की शक्तिवाले ईश्वर ! आप ( मध्वः ) मधुरादि गुणयुक्त पदार्थों के रसभोग को कृपा करके ( पायय ) पिलाइये॥ १॥

यह ( अग्ने ) भौतिक अग्नि, ( सुजिह्व ) जिसकी लपट में अच्छे प्रकार होम करते हैं, वह ( तान् ) विद्युत् आदि पदार्थों, ( ऋतावृधः ) जो जल की वृद्धि करानेवाले, ( यजत्रान् ) कलाओं में संयुक्त करने योग्य हैं, उनको उत्तम ( कृधि ) बनाता है। वह अच्छे प्रकार कला-यंत्रों में संयुक्त किया हुआ हम लोगों को ( पत्नीवतः ) श्रेष्ठ (=सुखी) गृहस्थ ( कृधि ) करता है, तथा ( मध्वः ) मीठे-मीठे पदार्थों के रस को ( पायय ) पिलाने का हेतु होता है॥ २॥ ७॥

इस मन्त्र में श्लेषालङ्कार है।

भावार्थ—मनुष्यों को अच्छे प्रकार ईश्वर के आराधन, और अग्नि के सम्यक् प्रयोग से रस सारादि को रचकर तथा उपकार में लाकर गृहस्थ आश्रम में सब कार्यों को सिद्ध करना चाहिये॥ ७॥



पुनस्ते कीदृशाः सन्तीत्युपदिश्यते—

ये यज॑त्रा य ईड्या॒स्ते ते॑ पिबन्तु जि॒ह्वया॑। मधो॑रग्ने॒ वष॑ट्कृति॥८॥

१. अयं पाठो वै० य० मुद्रितेषु संस्करणेषु नास्ति, ख.कोशे तूपलभ्यते।

ये । यर्जत्राः । ये । ईड्याः । ते । तु । पिबन्तु । जिह्वया ॥ मधोः । अग्ने । वषट्ऽकृति ॥८॥

पदार्थः—(ये) विद्युदादयः (यजत्राः) सङ्गमयितुं योग्याः । [1]पूर्ववदस्य सिद्धिः ।[ (ये) ...] (ईड्याः) अध्येषितुं योग्याः (ते) पूर्वोक्ता जगदीश्वरेणोत्पादिताः (ते) वर्त्तमानाः (पिबन्तु) पिबन्ति । अत्र लडर्थे लोट् । (जिह्वया) ज्वालाशक्त्या (मधोः) मधुरगुणांशान् (अग्ने) अग्नौ । अत्र व्यत्ययः । (वषट्कृति) वषट् करोति येन यज्ञेन तस्मिन् । अत्र कृञो बहुलम् [अ० ३ । ३ । ११३ वा०] इति वार्त्तिकमाश्रित्य करणे क्विप् ॥ ८ ॥

अन्वयः—ये मनुष्या यजत्रास्ते तथा य ईड्यास्ते जिह्वयाऽग्नेऽग्नौ वषट्कृति मधोर्मधुरगुणांशान् पिबन्तु यथावत् पिबन्ति ॥ ८ ॥

भावार्थः—मनुष्यैरस्मिन् जगति सर्वेषु पदार्थेषु द्विविधं कर्म योजनीयमेकं गुणज्ञानं, द्वितीयं तेभ्यः कार्य्यसिद्धिकरणम् । ये विद्युदादयः सर्वेभ्यो मूर्त्तद्रव्येभ्यो रसं संगृह्य पुनर्विमुञ्चन्ति, तेषां शुद्ध्यर्थं सुगन्ध्यादिपदार्थानां [2][ अग्नौ ] प्रक्षेपणं नित्यं कार्यम्, [3]यतस्ते सुखसाधिनो भवेयुः ॥ ८ ॥

फिर उक्त पदार्थ किस प्रकार के हैं, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—(ये) जो मनुष्य विद्युत् आदि पदार्थों को (यजत्राः) कलादिकों में संयुक्त करने योग्य हैं ( ते ) वे, तथा ( ये ) जो गुणवाले ( ईड्याः ) सब प्रकार से खोजने योग्य हैं ( ते ) वे, ( जिह्वया ) ज्वालारूपी शक्ति से ( वषट्कृति ) यज्ञ में विशेष कर्म जिसमें किये जाते हैं उस ( अग्ने ) अग्नि में ( मधोः ) मधुरगुणों के अंशों को ( पिबन्तु ) पीते हैं अर्थात् यथावत् प्राप्त करते हैं ॥ ८ ॥

भावार्थ—मनुष्यों को इस जगत् में सब पदार्थों में दो प्रकार के कर्मों को युक्त करना चाहिये, अर्थात् एक तो उनके गुणों का जानना, दूसरा उनसे कार्य की सिद्धि करना। जो विद्युत् आदि पदार्थ सब मूर्तिमान् पदार्थों से रस को ग्रहण करके फिर लौटा देते हैं, उनकी शुद्धि के लिये सुगन्धि आदि पदार्थों का अग्नि में होम निरन्तर करना चाहिये, जिससे वे सब प्राणियों को सुख सिद्ध करनेवाले हों ॥ ८ ॥



कीदृशा मनुष्यास्तद्गुणान् ग्रहीतुं योग्या भवन्तीत्युपदिश्यते—

आकीं सूर्य्यस्य रोचनाद् विश्वान् देवाँ उषर्बुधः । विप्रो होतेह वक्षति ॥९॥

आकीम् । सूर्य्यस्य । रोचनात् । विश्वान् । देवान् । उषःऽबुधः ॥ विप्रः । होता । इह । वक्षति ॥९॥

पदार्थः—(आकीम्) समन्तात् (सूर्य्यस्य) चराचरस्यात्मनः परमेश्वरस्य, सूर्यलोकस्य वा

१. पूर्वत्र पृष्ठ ६३६, मन्त्र ७ ।  २. वै० य० मुद्रिते चतुर्थसंस्करणे परिवर्धितः ।
३. वै० य० मुद्रिते चतुर्थसंस्करणे 'यस्ते' इत्यपपाठः ।

नात्) प्रकाशनात् (विश्वान्) सर्वान् (देवान्) दिव्यभोगान् (उषर्बुधः) उषः संप्राप्य न्ति तान् (विप्रः) मेधावी (होता) हवनस्य दाताऽऽदाता वा (इह) अस्मिन् जन्मनि लोके वक्षति) प्राप्नोति प्रापयति वा । अत्र लडर्थे लेट् ॥ ९ ॥

अन्वयः—यो होता विप्रो विद्वान् सूर्यस्य रोचनादिहोपर्बुधो विश्वान् देवान् [आकीं नाद्] वक्षति प्राप्नोति, स सर्वा विद्याः प्राप्यानन्दी भवति ॥ ९ ॥

अत्र श्लेषालङ्कारः ।

भावार्थः—यदीश्वर इमान् पदार्थान्नोत्पादयेत्तर्हि कश्चिदपि जन उपकारं ग्रहीतुं कथं यात् । यदा मनुष्या निद्रास्था भवन्ति, तदा न किमपि भोक्तव्यं द्रव्यं प्राप्तुमर्हन्ति, किञ्च रणं प्राप्य भोगकरणे समर्था भवन्त्येतस्मादुषर्बुध इत्युक्तम् । एतेभ्यः पदार्थेभ्यो धीमान् पुरुष क्रियासिद्धिं कर्तुं शक्नोति नेतर इति ॥ ९ ॥

किस प्रकार के मनुष्य उन गुणों का ग्रहण कर सकते हैं, इस विषय का उपदेश अगले मन्त्र या है—

पदार्थान्वयभाषा—जो (होता) होम में छोड़ने योग्य वस्तुओं का देने-लेनेवाला (विप्रः) ान् विद्वान् पुरुष (सूर्य्यस्य) चराचर के आत्मा परमेश्वर वा सूर्य्यलोक के (रोचनात्) श से (इह) इस जन्म वा लोक में (उषर्बुधः) प्रातःकाल को प्राप्त होकर को चितानेवाले (विश्वान्) समस्त (देवान्) श्रेष्ठ भोगों को [(आकीम्) सब ओर से] क्षति) प्राप्त होता वा कराता है, वही सब विद्याओं को प्राप्त होके आनन्दयुक्त होता है ॥९॥

इस मन्त्र में श्लेषालङ्कार है ।

भावार्थ—यदि ईश्वर इन पदार्थों को उत्पन्न नहीं करता, तो कोई भी पुरुष उपकार लेने को समर्थ हो सकता ? और जब मनुष्य निद्रा में स्थित होते हैं, तब कोई मनुष्य किसी भोग करने पदार्थ को प्राप्त नहीं हो सकता । किन्तु जागृत अवस्था को प्राप्त होकर उनके भोग करने समर्थ होते हैं । इसरो इस मन्त्र में 'उषर्बुधः' इस पद का उच्चारण किया है । संसार के पदार्थों से बुद्धिमान् मनुष्य ही क्रिया की सिद्धि कर सकता है, अन्य कोई नहीं ॥ ९ ॥



केन सहैतत् क्रियाहेतुर्भवतीत्युपदिश्यते—

विश्वेभिः सोम्यम् मध्वऽग्न इन्द्रेण वायुना । पिबा मित्रस्य धामभिः ॥१०॥

विश्वेभिः । सोम्यम् । मधु । अग्ने । इन्द्रेण । वायुना ॥ पिब । मित्रस्य । धामऽभिः ॥१०॥

पदार्थः—(विश्वेभिः) सर्वैः । अत्र बहुलं छन्दसि [अ० ७ । १ । १०] इत्यैसभावः । म्यम्) सोमसम्पादनार्हम् । सोममर्हति यः । अ० ४ । ४ । १३७ इति यः प्रत्ययः । (मधु) ादिगुणयुक्तम् (अग्ने) अग्निः प्रत्यक्षाप्रत्यक्षः (इन्द्रेण) परमैश्वर्य्यहेतुना (वायुना) स्पर्शवता

गतिमता पवनेन सह (पिब) पिबति गृह्णाति। अत्र पुरुषव्यत्ययौ लडर्थे लोट्, द्व्यचोऽतस्तिङः [अ० ६ । ३ । १३५] इति दीर्घश्च। (मित्रस्य) सर्वगतस्य सर्वप्राणभूतस्य (धामभिः) स्थानैः ॥१०॥

अन्वयः—अयम[ग्ने] ऽग्निरिन्द्रेण वायुना सह मित्रस्य विश्वेभिर्धामभिः सोम्यं मधु [पिब] पिबति [गृह्णाति] ॥ १० ॥

भावार्थः—अयं विद्युदाख्योऽग्निर्ब्रह्माण्डस्थेन वायुना शरीरस्थैः प्राणैः सह वर्तमानः सन् सर्वेषां पदार्थानां सकाशाद् रसं गृहीत्वोद्गिरति, तस्मादयं मुख्यं शिल्पसाधनमस्तीति ॥१०॥

किसके साथ में यह विद्युत् अग्नि क्रियाओं की सिद्धि करानेवाला होता है, सो अगले मन्त्र में कहा है—

पदार्थान्वयभाषा—यह (अग्ने) अग्नि (इन्द्रेण) पवन [illegible] करानेवाले, (वायुना) स्पर्शवान् वा गमन करनेहारे, और (मित्रस्य) सब में रहनेवाले तथा सब के प्राणरूप होकर वर्त्तनेवाले वायु के साथ (विश्वेभिः) सब (धामभिः) स्थानों से (सोम्यम्) सोमसम्पादन के योग्य (मधु) मधुर आदि गुणयुक्त पदार्थ को (पिब) ग्रहण करता है ॥ १० ॥

भावार्थ—यह विद्युत्‌रूप अग्नि ब्रह्माण्ड में रहनेवाले पवन तथा शरीर में रहनेवाले प्राणों के साथ वर्त्तमान होकर सब पदार्थों से रस को ग्रहण करके उगलता है, इससे यह मुख्य शिल्पविद्या का साधन है ॥ १० ॥

अथाग्निशब्देनेश्वर उपदिश्यते—

त्वं होता मनुर्हितोऽग्ने यज्ञेषु सीदसि । सेमं नो अध्वरं यज ॥११॥

त्वम् । होता । मनुःऽहितः । अग्ने । यज्ञेषु । सीदसि ॥ सः । इमम् । नः । अध्वरम् । यज ॥११॥

पदार्थः—(त्वम्) जगदीश्वरः (होता) सर्वस्य दाता (मनुर्हितः) मनवो मननकर्त्तारो मनुष्यादयो हिता धृता येन सः (अग्ने) पूजनीयतम (यज्ञेषु) क्रियाकाण्डादिविज्ञानान्तेषु सङ्गमनीयेषु (सीदसि) अवस्थितोऽसि (सः) जगत्स्रष्टा धर्त्ता च (इमम्) अस्मदनुष्ठीयमानम्। अत्र सोऽचि लोपे चेत्पादपूरणम्। अ० ६ । १ । १३० अनेन सोर्लोपः। (नः) अस्माकम् (अध्वरम्) अहिंसनीयं सुखहेतुम् (यज) सङ्गमयास्य सिद्धिं संपादय ॥ ११ ॥

अन्वयः—हे अग्ने! यस्त्वं मनुर्हितो होता यज्ञेषु सीदसि, स त्वं नोऽस्माकमिममध्वरं यज संगमय ॥ ११ ॥

भावार्थः—येनेश्वरेण सर्वे मनुष्यव्यस्त्रावय उत्पाद्य धारिता, यस्मादयं सर्वेषु कर्मोपासनाज्ञानकाण्डेषु पूज्यतमोऽस्ति, तस्मात् स एवेदं जगदाख्यं यज्ञं संगमयित्वा[1]ऽस्मान् सुखयतीति ॥ ११ ॥

१. संगम करोति संगमयति । 'प्रातिपदिकाद् धात्वर्थे०' ( अ० ३।१।२६ वा० ) इत्यादिना णिच्, ततः क्त्वा । अत एवात्र ल्यपोऽभावः ।

अब अगले मन्त्र में अग्नि शब्द से ईश्वर का उपदेश किया है—

**पदार्थान्वयभाषा**—हे ( अग्ने ) अतिशय करके पूजन करने योग्य जगदीश्वर ! जो (त्वम्) प ( मनुर्हितः ) मनुष्य आदि के धारण करनेवाले, और ( होता ) सब पदार्थों के देनेवाले, यज्ञेषु ) क्रियाकाण्ड से लेकर विज्ञान पर्य्यन्त ग्रहण करने योग्य यज्ञों में ( सीदसि ) वस्थित हो रहे हो, ( सः ) सो आप ( नः ) हमारे ( इमम् ) इस (अध्वरम्) ग्रहण योग्य सुख हेतु यज्ञ को ( यज ) संगत कीजिये, अर्थात् इसकी सिद्धि को दीजिये ॥ ११ ॥

**भावार्थ**—जिस ईश्वर ने सब मनुष्य आदि प्राणियों के शरीर आदि पदार्थों को उत्पन्न रके धारण किया है, तथा जो यह सब कर्म उपासना तथा ज्ञानकाण्ड में अतिशय से पूजने के ोग्य है, वही इस जगत्‌रूपी यज्ञ को सिद्ध करके हम लोगों को सुखयुक्त करता है ॥ ११ ॥



पुनरेकस्य भौतिकस्याग्नेर्गुणा उपदिश्यन्ते—

युक्ष्वा ह्यरु॑षी॒ रथे॑ ह॒रितो॑ देव रो॒हितः॑ । ताभि॑र्दे॒वाँ इ॒हा व॑ह ॥ १२ ॥

युक्ष्व । हि । अरु॑षीः । रथे॑ । ह॒रितः॑ । दे॒व॒ । रो॒हितः॑ ॥ ताभिः॑ । दे॒वान् । इ॒ह । आ । व॒ह ॥ १२ ॥

**पदार्थः**—( युक्ष्व ) योजय । अत्र बहुलं छन्दसि [अ० २।४।७३] इति शपो लुकि नमभावः[1] । ( हि ) यतः ( अरुषीः ) रक्तगुणा अरुष्यो गमनहेतवः । अत्र बाहुलकादुषच्[2] त्ययः । अन्यतो ङीप् । अ० ४ । १ । ४० अनेन ङीष्[3] प्रत्ययः । वा च्छन्दसि । अ० ६।१।१०२ नेन जसः पूर्वसवर्णम् । ( रथे ) भूसमुद्रान्तरिक्षेषु गमनार्थे याने ( हरितः ) हरन्ति यास्ता वालाः ( देव ) विद्वन् ( रोहितः ) रोहयन्त्यारोहयन्ति यानानि यास्ताः । अत्र हृसृरुहियुषिभ्य तिः । उ० १ । ९७ अनेन 'रुह' धातोरितिः प्रत्ययः । ( ताभिः ) एताभिः ( देवान् ) दिव्यान् क्र्यासिद्धान् व्यवहारान् (इह) अस्मिन् संसारे (आ) समन्तात् (वह) प्रापय ॥१२॥

**अन्वयः**—हे देव ! विद्वँस्त्वं रथे रोहितो हरितोऽरुषीर्युक्ष्व, ताभिरिह देवानावह प्रापय ॥१२॥

१. अत्र पूर्वत्र ५३१ पृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या।

२. वै० य० मुद्रितेषु संस्करणेषु 'उषन्' इत्यपपाठः । अत्र 'पृनहिकलिभ्य: उपच्' ( उ० ४।७५ ) इत्यनेन विहितोऽर्त्तेरपि द्रष्टव्यः । चित्त्वादन्तोदात्तोऽरुषशब्दः ।

३. प्रत्ययस्वरेणान्तोदात्तत्वे प्राप्ते छान्दसत्वाद् वृषादेराकृतिगणत्वाद् (अ० ६।१।१९७) वाऽऽद्युदात्तत्वम् । वस्तुतस्तु अरुष—अरुषी, आयस—आयसी इत्यादिषु अन्तोदात्तानां स्त्रियामाद्युदात्तत्वं दृश्यते, तस्मादत्र स्त्रियां ङीनुपसंख्येयः । सायणस्तु 'अर्त्तिनिभ्यामुषन्' ( उ० १।७३ ) इत्युषन् विधाय 'नित्वादाद्युदात्तोऽरुषशब्दः' इत्याह, तदरुषशब्दस्य सर्वत्रैवान्तोदात्तत्वदर्शनाच्चिन्त्यम् । अरुषोऽन्तोदात्तत्वे च ङीपः स्थाने ङीन् छान्दसो विधेयः । ४. अन्वये 'हि' पदं त्यक्तम् ।

भावार्थः—विद्वद्भिरग्न्यादिपदार्थान् कलायन्त्रयानेषु संयोज्य तैरिहास्मिन् संसारे मनुष्याणां सुखाय दिव्याः पदार्थाः प्रकाशनीया इति ॥ १२ ॥

अथ चतुर्दशस्यास्य सूक्तस्य विश्वेषां देवानां गुणप्रकाशनेन क्रियार्थसमुच्चयात् त्रयोदश-सूक्तार्थेन सह संगतिरस्तीति बोध्यम् ॥

इदमपि सूक्तं सायणाचार्य्यादिभिर्यूरोपदेशनिवासिभिर्विलसनादिभिश्चान्यथैव व्याख्यातम् ॥

इति चतुर्दशं सूक्तं सप्तविंशो वर्गश्च समाप्तः ॥

फिर अगले मन्त्र में अकेले भौतिक अग्नि के गुणों का उपदेश किया है—

**पदार्थान्वयभाषा**—हे ( देव ) विद्वान् मनुष्य ! तू ( रथे ) पृथिवी समुद्र और अन्तरिक्ष में जाने आने के लिये विमान आदि यान में ( रोहितः ) नीची-ऊंची जगह उतारने-चढ़ाने, (हरितः) पदार्थों को हरने, ( अरुषीः ) लालरङ्गयुक्त तथा गमन करानेवाली ज्वाला अर्थात् लपटों को ( युक्ष्व ) युक्त कर। और ( ताभिः ) इनसे ( इह ) संसार में ( देवान् ) दिव्यक्रियासिद्ध व्यवहारों को ( आवह ) अच्छी प्रकार प्राप्त कर ॥ १२ ॥

**भावार्थ**—विद्वानों को कला और विमान आदि यानों में अग्नि आदि पदार्थों को संयुक्त करके इनसे इस संसार में मनुष्यों के सुख के लिये दिव्य पदार्थों का प्रकाश करना चाहिये ॥१२॥

सब देवों के गुणों के प्रकाश तथा क्रियाओं के समुच्चय से इस चौदहवें सूक्त की सङ्गति पूर्वोक्त तेरहवें सूक्त के साथ जाननी चाहिये ॥

इस सूक्त का भी अर्थ **सायणाचार्य्य** आदि विद्वान् तथा यूरोपदेशनिवासी **विलसन** आदि ने विपरीत ही वर्णन किया है ॥

यह चौदहवां सूक्त और सत्ताईसवां वर्ग पूरा हुआ ॥



अथ द्वादशर्चस्य पञ्चदशसूक्तस्य कण्वो मेधातिथिर्ऋषिः । ऋतवः[1]; १ इन्द्रः, २ मरुतः, ३ त्वष्टा, ४ अग्निः, ५ इन्द्रः, ६ मित्रावरुणौ, ७–१० द्रविणोदाः, ११ अश्विनौ, १२ अग्निश्च देवताः । गायत्री[2] छन्दः । षड्जः स्वरः ॥

तत्र प्रत्यृतु रसोत्पत्तिर्गमनं च भवतीत्युपदिश्यते—

**इन्द्र सोमं पिब॑ ऋतुनाऽऽ त्वा॑ विशन्त्विन्द॑वः । मत्सरासस्तदो॑कसः ॥१॥**

इन्द्र॑ । सोम॑म् । पिब॑ । ऋतुना॑ । आ । त्वा॒ । विशन्तु । इन्द॑वः ॥ मत्सरासः॑ । तत्ऽओ॑कसः ॥१॥

१. प्रतिदैवतं प्रतिमन्त्रं सम्बन्धः ।

२. सामान्येनेति शेषः । विशेषेण तु—१, १२ निचृद्गायत्री; २, ४ पिपीलिकामध्या निचृद्गायत्री; ३, ५-१० गायत्री; ११ पिपीलिकामध्या निचृद्गायत्री ॥

पदार्थः—(इन्द्र) कालविभागकर्त्ता सूर्यलोकः (सोमम्) ओषध्यादिरसम् (पिब) पिबति। व्यत्ययः, लडर्थे लोट् च। (ऋतुना) वसन्तादिभिः सह। अत्र जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्। अ० १।२।५८ अनेन जात्यभिप्रायेणैकत्वम्। (आ) समन्तात् (त्वा) त्वां जनमिमम्प्राणिनं पदार्थं सूर्य्यस्य किरणसमूहं वा (विशन्तु) विशन्ति। अत्र लडर्थे लोट्। (इन्दवः) जलानि, उन्दन्ति आर्द्रीकुर्वन्ति पदार्थास्ते[1]। अत्र उन्देरिच्चादेः। उ० १।१२ इत्युः प्रत्यय आदेरिकारादेशश्च। इन्दव[2] इत्युदकनामसु पठितम्। निघं० १।१२। (मत्सरासः) (तदोकसः) तान्यन्तरिक्षवाय्वादीन्योकांसि येषां ते ॥ १ ॥

अन्वयः हे [3]मनुष्य! अयमिन्द्र ऋतुना सोमं पिब पिबति। इमे तदोकसो मत्सरास इन्दवो ऋतुना सह त्वा त्वां तं वा प्रतिक्षणमाविशन्त्वाविशन्ति ॥ १ ॥

भावार्थः—अयं सूर्य्यः संवत्सरायनर्तुपक्षाहोरात्रमुहूर्त्तकलाकाष्ठानिमेषादिकालविभागान् करोति। अत्राह मनुः—'निमेषा दश चाष्टौ च काष्ठा त्रिंशत्तु ताः कला। त्रिंशत्कला मुहूर्त्तः स्यादहोरात्रं तु तावतः।' [१।६४] इति। तैस्सह सर्वौषधिभ्यो रसान् सर्वस्थानेभ्य उदकानि चाकर्षति। तानि किरणैः सहान्तरिक्षे निवसन्ति, वायुना सह गच्छन्त्यागच्छन्ति च ॥१॥

अब पन्द्रहवें सूक्त का आरम्भ है। उसके प्रथम मन्त्र में ऋतु-ऋतु में रस की उत्पत्ति करने वाले सूर्य्य के गुणों की स्थिति का वर्णन किया है—

पदार्थान्वयभाषा—हे मनुष्य! यह (इन्द्र) समय का विभाग करनेवाला सूर्य्य (ऋतुना) वसन्त आदि ऋतुओं के साथ (सोमम्) ओषधि आदि पदार्थों के रस को (पिब) पीता है। और ये (तदोकसः) जिनके अन्तरिक्ष वायु आदि निवास के स्थान हैं, तथा जो (मत्सरासः) आनन्द के उत्पन्न करनेवाले (इन्दवः) जलों के रस हैं, वे वसन्त आदि ऋतुओं के साथ (त्वा) इस प्राणी को वा सूर्य की किरणों को क्षण-क्षण (आविशन्तु) आवेश करते (=प्राप्त होते) हैं ॥१॥

भावार्थ—यह सूर्य्य वर्ष, उत्तरायण दक्षिणायन, वसन्त आदि ऋतु, चैत्र आदि बारहों महीने, शुक्ल और कृष्णपक्ष, दिनरात [4][जो ३० मुहूर्त्त का संयोग], मुहूर्त जो कि तीस कलाओं का संयोग, कला जो ३० (तीस) काष्ठा का संयोग, काष्ठा जो कि अठारह निमेष का संयोग, तथा निमेष आदि समय के विभागों को प्रकाशित करता है, जैसे कि मनुजी ने कहा है। और उन्हीं के साथ सब ओषधियों के रस और सब स्थानों से जलों को खींचता है। वे किरणों के साथ अन्तरिक्ष में स्थित होते हैं, तथा वायु के साथ आते-जाते हैं ॥ १ ॥



१. 'इन्दवः' पदमभिप्रेत्य पुंस्त्वम्। 'जलानि' पदमपेक्ष्य 'तानि' पाठेन भाव्यम्।

२. निघण्टौ 'इन्दुः' इत्येकवचनं दृश्यते।

३. वै० य० मुद्रितयोः १-२ संस्करणयो 'हे मनुष्या यमिन्द्र' इति प्रमादान्मुद्रणे संश्लिष्टः पाठः (=हे मनुष्य+अयमिन्द्र=हे मनुष्याऽयमिन्द्र)। ३-४ संस्करणयोः 'हे मनुष्या! यमिन्द्र' इत्येवं भ्रष्टतरं मुद्रितम्।

४. वै० य० मुद्रित चतुर्थसंस्करण में कोष्ठान्तर्गत पाठ बढ़ाया गया।

अथ ऋतुभिः सह मरुतः पदार्थानाकर्षन्ति पुनन्ति चेत्युपदिश्यते—

मरुतः पिबत ऋतुना पोत्राद् यज्ञं पुनीतन । यूयं हि ष्ठा सुदानवः ॥२॥

मरुतः । पिबत । ऋतुना । पोत्रात् । यज्ञम् । पुनीतन ॥ यूयम् । हि । स्थ । सुऽदानवः ॥२॥

**पदार्थः**—(मरुतः) वायवः । मृग्रोरुतिः । उ० १ । ९४ इति 'मृङ्' धातोरुति. प्रत्ययः । मरुत इति पदनामसु पठितम् । निघं० ५ । ५, अनेन गमनागमनक्रियाप्रापका वायवो गृह्यन्ते । (पिबत) पिबन्ति । अत्र व्यत्ययो लडर्थे लोट् च । (ऋतुना) ऋतुभिः सह (पोत्रात्) पुनाति येन गुणेन तस्मात् । अत्र सर्वधातुभ्यः ष्ट्रन् । उ० ४ । १५९ इति पूञ्धातोः ष्ट्रन् प्रत्ययः, स्वर-व्यत्ययश्च[2] । (यज्ञम्) त्रिविधं पूर्वोक्तम् (पुनीतन) पुनन्ति पवित्रीकुर्वन्ति । अत्र व्यत्ययो लडर्थे लोट् तकारस्य तनबादेशश्च[3] । (यूयम्) एते (हि) यतः (स्थ) सन्ति । अत्र पुरुषव्यत्ययो लडर्थे लोट्, अन्येषामपि दृश्यते [अ० ६ । ३ । १३६] इति दीर्घश्च । (सुदानवः) सुष्ठु दानहेतवः । दाभाभ्यां नुः । उ० ३ । ३१ इति सूत्रेण नुः प्रत्ययः ॥ २ ॥

**अन्वयः**—इमे मरुत ऋतुना सर्वान् पिबत पिबन्ति, त एव पोत्राद्यज्ञं पुनीतन पुनन्ति, हि यतो यूयमेते सुदानवः स्थ सन्ति, तस्माद् युक्त्या योजिता [एते] कार्य्यसाधका भवन्तीति ॥२॥

**भावार्थः**—ऋतुपर्यायेण वायुष्वपि गुणा यथाक्रममुत्पद्यन्ते । तद्विशिष्टाः सर्वदा त्रस-रेण्वादीनां चेष्टानां च हेतवः सन्ति । अग्नौ सुगन्ध्यादिहोमद्वारा पवित्रीभूत्वा सर्वान् सुखयुक्तान् कृत्वा त एव दानादानहेतवो भवन्ति ॥ २ ॥

अब ऋतुओं के साथ पवन आदि सब पदार्थों को खींचते और पवित्र करते हैं, इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—ये ( मरुतः ) पवन ( ऋतुना ) वसन्त आदि ऋतुओं के साथ सब रसों को ( पिबत ) पीते हैं। वे ही ( पोत्रात् ) अपने पवित्रकारक गुण से ( यज्ञम् ) उक्त तीन प्रकार के यज्ञ को ( पुनीतन ) पवित्र करते हैं। तथा ( हि ) जिस कारण ( यूयम् ) ये ( सुदानवः ) पदार्थों के अच्छी प्रकार दिलाने [=प्राप्त कराने] वाले ( स्थ ) हैं, इससे ये युक्ति के साथ क्रियाओं में युक्त किए हुए कार्य्यों को सिद्ध करते हैं ॥ २ ॥

१. वै० य० मुद्रिते चतुर्थसंस्करणे 'सुदाऽनवः' इत्येवं पाठो भ्रष्टः ।

२. ष्ट्रनि नित्त्वादाद्युदात्तत्वे प्राप्ते स्वरव्यत्ययेनान्तोदात्तत्वमित्यर्थः । यद्वा—'दाधिष्यदश्छन्दसि' (उ० ४।१७०) इति सूत्रेण 'अः' प्रत्ययः (द्र०—दशपादी उ० वृ० ८।९०, पृष्ठ ३४८) । से प्रत्ययस्वरेणान्तो-दात्तत्वमञ्जसा सिद्ध्यति । सायणस्तु 'पोत्रात् पोतृसम्बन्धिपात्रं पोत्रम् । तस्येदम् (अ० ४।३।१२०) इत्यण्' इत्युक्त्वाऽऽद्यवृद्ध्यभावाय, वृद्धिं विधाय पुनर्ह्रस्वत्वाय च प्रयतितवान्, तत्सर्वं चिन्त्यम् । मन्त्रे 'पोत्रात् यज्ञं पुनीतन' इत्यनेन स्पष्टमेव यत् पुनातेरत्र पोत्रशब्दः । न तु पोतृ-ऋत्विक्सम्बन्धात् सोमपात्रं पोत्रम् ।

३. द्र०—अष्टा० ७।१।४५ ॥

ावार्थ—ऋतुओं के अनुक्रम से पवनों में भी यथायोग्य गुण उत्पन्न होते हैं। इसी से वे ादि पदार्थों या क्रियाओं के हेतु होते हैं। तथा अग्नि के बीच में सुगन्धित पदार्थों के होम ावित्र होकर प्राणीमात्र को सुखसंयुक्त करते हैं, और वे ही पदार्थों के देने-लेने में हेतु २ ॥



अथर्तुना सह विद्युत् किं करोतीत्युपदिश्यते—

ाभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना। त्वं हि रत्नधा असि ॥३॥

ाभि। यज्ञम्। गृणीहि। नः। ग्नावः। नेष्टरिति। पिब। ऋतुना॥ त्वम्। हि। रत्नऽधाः।

ादार्थः—(अभि) आभिमुख्ये (यज्ञम्) संगम्यमानं पूर्वोक्तं [त्रिविधं यज्ञम्] (गृणीहि) स्तुतिहेतुर्भवति। अत्र व्यत्ययो लडर्थे लोट् च। (नः) अस्माकम् (ग्नावः) सर्वपदार्थ-स्य[1] व्यवहारे [नः]। ग्ना इति उत्तरपदनामसु[2] पठितम्। निघं० ३। २९[3]। (नेष्टः) ादार्थशोधकत्वात् पोषकत्वाच्च नेनेक्ति सर्वान् पदार्थानिति। नप्तृनेष्टृ०। उ० २। ९६ ापातनम्। (पिब) पिबति। अत्र व्यत्ययो लडर्थे लोट् च। (ऋतुना) ऋतुभिः सह सोऽयम् (हि) यतः (रत्नधाः) रत्नानि रमणार्थानि पृथिव्यादीनि वस्तूनि दधातीति सः अस्ति। अत्र व्यत्ययः ॥ ३ ॥

अन्वयः—हे विद्वन्! [हि] यत इयं नेष्टर्नेष्ट्री[4] विद्युद् ऋतुना सह रसान् पिब पिबति, अस्यस्ति, [त्वं] सा ग्नावो ग्नावती[5] न इमं यज्ञमभिगृणीहि गृणाति। तस्मात् त्वमेतया ग साधय ॥ ३ ॥

भावार्थः—इयं विद्युदग्नेः सूक्ष्मावस्था वर्त्तते। सा सर्वान् मूर्त्तद्रव्यसमूहावयवानभिव्याप्य छिनत्ति वा, अत[6] एव चाक्षुषो[7]ऽग्निः प्रादुर्भवत्यत्रैवान्तर्दधाति चेति ॥३॥

१. अनेन गत्यर्थो निर्दिशितः। ग्नाशब्दात् मतुपि वत्वे च 'मतुवसो रु संबुद्धौ छन्दसि' (अ० ८।३।१) रुत्वम्। आमन्त्रितस्वरः। अत्र व्यत्ययेन प्रथमार्थः। 'यस्य' स्थाने 'यस्मिन्' पदं साधु स्यात्।

२. निघण्टौ 'उत्तराणि नामानि' इत्येव पाठः। विभक्त्यन्तपाठात् स्वतः प्राप्तं पदत्वं भाष्यकृता 'उत्तरपदनामसु' इत्युक्तम्।

३. वै० य० मुद्रितेषु १, २, ३ संस्करणेषु '१६' संख्या निर्दिश्यते, साऽशुद्धा ज्ञेया।

४. भाष्यकारेण अग्निपदस्य 'विद्युद्' अर्थकरणात् नेष्टरिति पुंल्लिगं स्त्रीलिङ्गे परिवर्तितम्।

५. वै० य० मुद्रितेषु संस्करणेषु 'स ग्नावो ग्नावान्' इत्यपपाठः। विद्युदर्थेऽत्राऽपि स्त्रीत्वं युक्तम्, इति माभिस्तथा पाठः शोधितः।

६. अयं पार्थिवोऽग्निश्चाक्षुष मध्यमस्थानीयाद् विद्युत उत्तमस्थानीयात् सूर्याच्चोत्पद्यते। अस्य जन्म यास्केन 'कथं त्वेताभ्यां जायते' (निरु० ७। २२) इत्यादिनोपपादितम्। तत्रैव द्रष्टव्यम्।

७. शेषे (अ० ४। २। ९२) इति लक्षणमधिकारश्च। तेन चक्षुषा गृह्यते चाक्षुषः प्रत्यक्ष इति द्र०—काशिका ४। २। ९२॥

अब ऋतुओं के साथ विद्युत् अग्नि क्या करता है, इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे विद्वन् ! ( हि ) जिस कारण यह (नेष्टः) शुद्धि और पुष्टि आदि हेतुओं से सब पदार्थों का प्रकाश करनेवाली बिजुली (ऋतुना) ऋतुओं के साथ रसों को (पिब) पीती है, तथा (रत्नधाः) उत्तम पृथिव्यादि पदार्थों को धारण करने [वा देनेवाली[1]] (असि) है, [(त्वम्)] सो यह ( ग्नावः ) सब पदार्थों को प्राप्त करानेहारी ( नः ) हमारे इस ( यज्ञम् ) यज्ञ को (अभिगृणीहि) सब प्रकार से ग्रहण करती है, इसलिये तुम लोग इससे सब कार्यों को सिद्ध करो ॥ ३ ॥

**भावार्थ**—यह बिजुली अग्नि की सूक्ष्म अवस्था है। सो सब स्थूल पदार्थों के अवयवों में व्याप्त होकर उनको धारण और छेदन करती है। इसी[2] से यह प्रत्यक्ष अग्नि उत्पन्न होके उसी में विलीन जाता है ॥ ३ ॥



अग्निरपि ऋतुयोजको भवतीत्युपदिश्यते—

अग्ने॑ दे॒वाँ इ॒हाव॑ह सा॒दया॒ योनि॑षु त्रि॒षु। परि॑ भू॒ष पिब॑ ऋ॒तुना॑ ॥४॥

अग्ने॑। दे॒वान्। इ॒ह। आ। व॒ह॒। सा॒दय॑। योनि॑षु। त्रि॒षु॥ परि॑। भू॒ष॒। पिब॑। ऋ॒तुना॑ ॥४॥

**पदार्थः**—(अग्ने) अग्निर्भौतिको विद्युत्प्रसिद्धो वा (देवान्) दिव्यगुणसहितान् पदार्थान् (इह) अस्मिन् संसारे ( आ ) समन्तात् ( वह ) वहति प्रापयति ( सादय ) हन्ति। अत्रोभयत्र व्यत्ययः, लडर्थे लोट् च[3], अन्येषामपि दृश्यते [अ० ६। ३। १३६] इति दीर्घश्च[4]। (योनिषु) युवन्ति मिश्रीभवन्ति येषु कार्य्येषु कारणेषु वा तेषु। अत्र वहिश्रिश्रु०। उ० ४। ५१ अनेन 'यु' धातोर्निः प्रत्ययो निच्च। (त्रिषु) नामजन्मस्थानेषु त्रिविधेषु लोकेषु (परि) सर्वतोभावे (भूष) भूषत्यलंकरोति (पिब) पिबति। अत्रापि व्यत्ययः[5]। (ऋतुना) ऋतुभिः सह ॥ ४ ॥

**अन्वयः**—[अग्ने] भौतिकोऽयमग्निरिहर्तुना त्रिषु योनिषु देवान् दिव्यान् सर्वान् पदार्थान् आवह समन्तात् प्रापयति, सादय स्थापयति, परिभूष सर्वतो भूषत्यलंकरोति, सर्वेभ्यो रसं पिब पिबति ॥ ४ ॥

---

१. डुधाञ् धातु के प्राचीनाचार्यों के मत में दान और धारण दोनों अर्थ हैं।

२. इसी से अर्थात् विद्युद्रूप अग्नि से यह चाक्षुष पार्थिव अग्नि उत्पन्न होती है। पार्थिव अग्नि की विद्युत् और सूर्य से कैसे उत्पत्ति होती है, इसका निरूपण यास्क ने निरुक्त ७।२२ में किया है।

३. ख.कोशे सम्पूर्णः पाठो दृश्यते। ग.कोशे प्रतिलिपिकर्त्रा त्यक्तः, इति कृत्वा नोपलभ्यते। अतः 'अत्रोभयत्र व्यत्ययः' पुनर्वर्धितः।

४. दीर्घत्वं केवलं 'सादया' इत्यत्रैव ज्ञेयम्।

५. लडर्थे लोट् चेति शेषः।

भावार्थः—अयमग्निर्दाहगुणयुक्तो रूपप्रकाशेन सर्वान् पदार्थानुपर्य्यधोमध्यस्थान् शोभितान् हवने शिल्पविद्यायां च संयोजितः सन् दिव्यानि सुखानि प्रकाशयतीति ॥ ४ ॥

फिर भी ऋतुओं का संयोजक होता है, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—यह ( अग्ने ) प्रत्यक्ष अथवा अप्रत्यक्ष भौतिक अग्नि वा विद्युत् ( इह ) इस संसार में ( ऋतुना ) ऋतुओं के साथ ( त्रिषु ) तीन प्रकार के ( योनिषु ) जन्म नाम और स्थान लोकों में ( देवान् ) श्रेष्ठ गुणों से युक्त पदार्थों को ( आ वह ) अच्छी प्रकार प्राप्त करता ( सादय ) स्थापित करता, ( परिभूष ) सब ओर से भूषित करता, और सब पदार्थों के रस को ( पिब ) पीता है ॥ ४ ॥

भावार्थ—दाहगुणयुक्त यह अग्नि अपने रूप के प्रकाश से ऊपर-नीचे वा मध्य में रहनेवाले पदार्थों को अच्छी प्रकार सुशोभित करता है। तथा होम और शिल्पविद्या में संयुक्त किया हुआ सुखों का प्रकाश करता है ॥ ४ ॥



ऋतुना सह वायुः किं करोतीत्युपदिश्यते—

ब्राह्मणादिन्द्र राधसः पिबा सोमम्ृतूँरनु । तवेद्धि सख्यमस्तृतम् ॥५॥

ब्राह्मणात् । इन्द्र । राधसः । पिब । सोमम् । ऋतून् । अनु ॥ तव । इत् । हि । सख्यम् । अस्तृतम् ॥ ५ ॥

पदार्थः—(ब्राह्मणात्)[1] ब्रह्मणो [2]बृहतोऽवयवात् । अत्र अनुदात्तादेश्च[3] । अ० ४ । ३ । १४० । अनेनावयवार्थेऽञ् प्रत्ययः । (इन्द्र) ऐश्वर्य्यजीवनहेतुत्वाद् वायुः । (राधसः) पृथिव्यादिधनात् । अत्र सर्वधातुभ्योऽसुन् [उ० ४ । १८९ । इत्यसुन्[5]] प्रत्ययः । (पिब) पिबति गृह्णाति । अत्र व्यत्ययो लडर्थे लोट्, द्व्यचोऽतस्तिङः [अ० ६ । ३ । १३४] इति दीर्घश्च । ( सोमम् ) पदार्थरसम् (ऋतून्) रसाहरणसाधकान् (अनु) पश्चात् (तव) तस्य प्राणरूपस्य (इत्) एव (हि) खलु (सख्यम्) मित्रस्य भाव इव (अस्तृतम्) हिंसारहितम् ॥५॥

---

१. वै० य० मुद्रितेषु सर्वसंस्करणेषु 'ब्राह्मणो' इत्यपपाठः । ख.ग.कोशयोः 'ब्रह्मणो' इति शुद्धः पाठः ।

२. वै० य० मुद्रितयोः १, २ संस्करणयोः 'बृअहतोऽवयवात्' अपपाठः ।

३. ब्रह्मन् नपुंसकलिङ्ग आद्युदात्तः, पुंल्लिङ्गश्चान्तोदात्तो मन्त्रेष्वसकृत् प्रयुज्यते । अत्रान्तोदात्ताद् ब्रह्मणः सम्भावनेनावयवार्थेऽञ् प्रत्ययो द्रष्टव्यः ।

४. धात्वर्थयोगाद् धनशब्दोऽत्र 'पृथिव्यादिषु निहितात् जलात्' इत्येवंरूपेण व्याख्येयः । यद्वा—निघण्टौ (१ । १२ ) उदकनामसु धनपर्यायस्य 'रयिः' पदस्य पाठात् तथाऽर्थो नेयः ।

५. 'इत्यसुन्' इति पाठो वै० य० मुद्रिते तृतीयसंस्करणे वर्धितः ।

अन्वयः—य इन्द्र वायुर्ब्राह्मणाद् राधसोऽनुऋतून् सोमं पिब पिबति गृह्णाति, [अत इत् एव] हि खलु [तव] तस्य वायोर् [ऋतुभिर्] अस्तृतं सख्यमस्ति ॥ ५ ॥

भावार्थः—मनुष्यैर्जगत्स्रष्ट्रेश्वरेण ये ये यस्य यस्य वाय्वादेः पदार्थस्य मध्ये नियमाः स्थापितास्तान् विदित्वा[1] कार्य्याणि साधनीयानि । तत्सिद्धचा सर्वर्त्तुषु सर्वप्राण्यनुकूलं हितसंपादनं कार्य्यम् । युक्त्या सेविता एते मित्रवद्भवन्त्ययुक्त्या च शत्रुवदिति वेद्यम् ॥ ५ ॥

ऋतुओं के साथ वायु कैसा-कैसा कार्य करता है, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा — जो (इन्द्र) ऐश्वर्य वा जीवन का हेतु वायु (ब्राह्मणात्) बड़े [ब्रह्माण्ड] के अवयवरूप (राधसः) पृथिवी आदि लोकों में निरन्तर जलों से (अनुऋतून्) अपने-अपने प्रभाव से पदार्थों के रस को हरनेवाले वसन्त आदि ऋतुओं के अनुक्रम से (सोमम्) सब पदार्थों के रस को (पिब) ग्रहण करता है, इससे (इत् हि) निश्चय करके (तव) उस वायु का ऋतुओं के साथ (अस्तृतम्) अविनाशी (सख्यम्) मित्रपन है ॥ ५ ॥

भावार्थ—मनुष्यों को योग्य है कि[2] जगत् के रचनेवाले परमेश्वर ने जो-जो जिस-जिस वायु आदि पदार्थों में नियम स्थापन किये हैं, उन-उन को जानकर कार्यों की सिद्धि, और उस सिद्धि से सब ऋतुओं में सब प्राणियों के अनुकूल हित सम्पादन करना चाहिये । युक्ति के साथ सेवन किये हुए ये पदार्थ मित्र के समान होते हैं । और इससे विपरीत शत्रु के समान होते हैं, ऐसा जानना चाहिये ॥ ५ ॥



इदानीं वायुविशेषौ प्राणोदानावृतुना सह किं कुरुत इत्युपदिश्यते—

युवं दक्षं धृतव्रत मित्रावरुण दूळभम् । ऋतुना यज्ञमाशाथे ॥६॥

युवम् । दक्षम् । धृतऽव्रता । मित्राऽवरुणा । दुःऽदभम् ॥ ऋतुना । यज्ञम् । आशाथे इति ॥६॥

पदार्थः—(युवम्) ताविमौ । अत्र व्यत्ययः, प्रथमायाश्च द्विवचने भाषायाम् । अ० ७ । २ । ८८ इति भाषायामाकारस्य विधानाद्वेदेऽऽकारादेशो न । (दक्षम्) बलम् (धृतव्रता) धृतानि

१. अयं भावार्थो 'ब्राह्मणात्' पदस्य भूतपूर्वव्याख्यानुसारं ज्ञेयः । ख.ग.कोशयोः 'ब्राह्मणात्' पदस्येत्थं व्याख्यानं दृश्यते—'ब्रह्मणो जगत्स्रष्टुरिद नियमस्थापनं तस्मात् । अत्र 'तस्येदम्' [अ० ४।१।१२०] इत्यण् ।' पदार्थे परिवर्तिते भावार्थस्य तथा परिवर्तनमावश्यकमासीत्, तच्चाऽत्र नाभूदिति कृत्वा भेदः प्रतीयते ।

२. यह भावार्थ ख.ग.कोशस्थ 'ब्राह्मणात्' पद के व्याख्यानानुसार है । भाषा-पदार्थ भी ख. ग.कोश में संस्कृत-पदार्थ के समान '(ब्राह्मणात्)' जगत् के रचनेवाले परमेश्वर के नियमों के स्थापन से सम्पादित' पाठ था । परन्तु मुद्रणकाल में संस्कृत और भाषा-पदार्थ वर्तमान पाठानुसार बना दिया । भावार्थ पूर्ववत् ही रह गया ।

ने बलानि याभ्यां तौ ( मित्रावरुणा ) मित्रश्च वरुणश्च तौ प्राणोदानौ[1]। अत्रोभयत्र सुपां सुलुग्० इति विभक्तेराकारादेशो व्यत्ययेन ह्रस्वत्वं[2] च। ( दूडभम् ) शत्रुभिर्दुःखेन दम्भितुमर्हम् । दुरो दाशनाशदभध्येषूत्वं वक्तव्यमुत्तरपदादेश्च ष्टुत्वम् । अ० ६ । ३ । १०६ वार्तिकेन दुर इत्यस्य रेफस्योकारः सवर्णदीर्घादेशो धातोर्दकारस्य डकारश्च, खलन्तं रूपम्[3]। सायणाचार्य्येण दूडभपदस्य 'दह' धातो रूपमिति साधितं, तन्महाभाष्यकारव्याख्यानविरुद्धत्वाद-शुद्धमेव[4]। (ऋतुना) ऋतुभिः[5] सह (यज्ञम्) पूर्वोक्तं त्रिविधं क्रियाजन्यम् (आशाथे) व्याप्त-वन्तौ स्तः। अत्र व्यत्ययः ॥ ६ ॥

अन्वयः—युवमिमौ [धृतव्रता] धृतव्रतौ [मित्रावरुणा] मित्रावरुणावृतुना दूडभं दक्षं यज्ञमाशाथे व्याप्तवन्तौ स्तः ॥ ६ ॥

भावार्थः—सर्वमित्रो बाह्यगतिः प्राणः, आभ्यन्तरगतिर्बलसाधको वरुण उदानः, एताभ्यां प्राणिभिः सर्वजगदाख्यो यज्ञो बलं चर्तुयोगेन धृत्वा व्याप्यते, येन सर्वे व्यवहाराः सिध्यन्तीति ॥ ६ ॥

इत्यष्टाविंशो वर्गः समाप्तः ॥

अब वायुविशेष प्राण वा उदान ऋतुओं के साथ क्या-क्या करते हैं, इस बात का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—( युवम् ) ये ( धृतव्रता ) बलों को धारण करनेवाले ( मित्रावरुणा ) प्राण और उदान ( ऋतुना ) ऋतुओं के साथ ( दूडभम् ) शत्रुओं से दुःख के साथ धर्षण करने योग्य (दक्षम्) बल, तथा (यज्ञम्) उक्त तीन प्रकार के यज्ञ को (आशाथे) व्याप्त होते हैं ॥६॥

भावार्थ—सब का मित्र बाहर आनेवाला प्राण, तथा शरीर के भीतर रहनेवाला उदान है। इन्हीं से प्राणी सब संसाररूप यज्ञ और बल को ऋतुओं के साथ धारण करके व्याप्त होते हैं। जिससे सब व्यवहार सिद्ध होते हैं ॥ ६ ॥

यह अट्ठाईसवां वर्ग पूरा हुआ ॥



---

१. प्राणोदानौ वै मित्रावरुणौ । श० १ । ८ । ३ । १२ ॥

२. इदमाकारादेशस्य ह्रस्वत्वं पदपाठानुसारं ज्ञेयम् । मन्त्रपाठस्तु द्विवचनस्य लुकाऽप्युपपद्यते ।

३. वार्तिके 'दभ' निपातनादेव च दम्भेरनुनासिकलोपोऽपि द्रष्टव्यः ।

४. तथा चाह सायणाचार्यः—'दुःखेन दह्यते इति दुर्दहः। ······व्यत्ययो बहुलम् इति उकारस्य ऊकारो रेफस्य लोपो दकारस्य डकारो हकारस्य च भकारः' इति । इदं व्याख्यानं महाभाष्यात् पदपाठात् स्ववचो-विरुद्धं च। महाभाष्यविरोध उपरि निर्दिष्टः। पदपाठविरोधस्त्वित्थं ज्ञेयः—पदकारो ह्यत्रोत्तरपदं दम्भेर-नुजानानः 'दुःऽदभः' इत्येवं निर्दिशति। दहे रूपे तु पदपाठे यथाऽन्यच्छान्दसकार्याण्यपहाय रूपं प्रदर्शयति, तथा दहेर्भत्वमपि निराकृत्य 'दुःऽदहः' रूपं प्रादर्शयिष्यत् । स्ववचोविरोधस्तु—इदमेकं विहायान्यत्र सर्वत्र 'दूडभ'-व्याख्याने प्रत्यक्षाप्रत्यक्षरूपेण दम्भेरेवार्थनिर्देशात् स्पष्ट एव ।

५. जातावेकवचनमाश्रित्य बहुवचनेनार्थनिर्देशः ।

पुनरीश्वरभौतिकगुणा उपदिश्यन्ते—

द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे । यज्ञेषु देवमीळते ॥७॥

द्रविणःऽदाः । द्रविणसः । ग्रावऽहस्तासः । अध्वरे ॥ यज्ञेषु । देवम् । ईळते ॥७॥

पदार्थः—(द्रविणोदाः) द्रविणांसि विद्याबलराज्यधनानि ददातीति स परमेश्वरो भौतिको वा । द्रविणमिति बलनामसु पठितम् । निघं० २ । ९ । द्रविणोदा इति पदनामसु पठितम् । निघं० ५ । २ । द्रविणं करोति द्रविणति, अस्मात् सर्वधातुभ्योऽसुन् [उ० ४ । १८९] इत्यसुन् प्रत्ययः, तद्ददातीति निरुक्त्या, पदनामसु पठितत्वाज्ज्ञानस्वरूपत्वादीश्वरो ज्ञानक्रियाहेतुत्वादग्न्यादयश्च[1] गृह्यन्ते । द्रूयन्ते प्राप्यन्ते यानि तानि द्रविणानि[2] । द्रुदक्षिभ्यामिनन् । उ० २ । ५० अनेन 'द्रु' धातोरिनन् प्रत्ययः । (द्रविणसः) यज्ञकर्तारः द्रविणसंपादकाः[3] । (ग्रावहस्तासः) ग्रावा स्तुतिसमूहो ग्रहणं हननं वा[4], ग्रावाणः पाषाणादयो यज्ञशिल्पविद्यासिद्धिहेतवो हस्तेषु येषां ते । ग्रावाणो हन्तेर्वा गृणातेर्वा गृह्णातेर्वा । निरु० ९ । ८ । (अध्वरे) अनुष्ठातव्ये क्रियासाध्ये यज्ञे (यज्ञेषु) अग्निहोत्राद्यश्वमेधान्तेषु शिल्पविद्यामयेषु वा (देवम्) दिव्यगुणवन्तम (ईळते) स्तुवन्ति अध्येषन्ति वा ।

एतद्विषयान् मन्त्रान् यास्कमुनिरेवं व्याख्यातवान्—द्रविणोदाः कस्मात् ? धनं द्रविणमुच्यते यदेनदभिद्रवन्ति । बलं वा द्रविणं यदेनेनाभिद्रवन्ति । तस्य दाता द्रविणोदास्तस्यैषा भवति—'द्रविणोदा द्रवि०' । द्रविणोदा यस्त्वं द्रविणस इति द्रविणसादिन इति वा द्रविणसानिन इति वा द्रविणसस्तस्मात् पिबत्विति वा । यज्ञेषु देवमीडते याचन्ति स्तुवन्ति वर्धयन्ति पूजयन्तीति वा ।

तत्को द्रविणोदाः ? इन्द्र इति क्रौष्टुकिः, स बलधनयोर्दातृतमस्तस्य च सर्वा बलकृतिः, 'ओजसो जातमुत मन्य एनम्[5]' इति चाह । अथाप्यग्निं द्राविणोदसमाह । एष पुनरेतस्माज्जायते—'यो अश्मनोरन्तरग्निं जजान[6]' इत्यपि निगमो भवति । अथाप्यृतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति, तेषां पुनः पात्रस्यैन्द्रपानमिति भवति । अथाप्येनं सोमपानेन स्तौति । अथाप्याह—'द्रविणोदाः पिबतु द्राविणोदसः[7]' इति । अयमेवाग्निर्द्रविणोदा इति शाकपूणिः । आग्नेयेष्वेव हि

१. प्रकृतमन्त्रेऽग्निरेव गृह्यते, यथा पूर्वं 'भौतिको वा' इत्युक्तम् । तथाप्यत्र द्रविणोदाःपदेन भिन्नार्थोऽपि ग्रहीतुं शक्य इति निदर्शयितुमिहादिपदस्य निर्देशो ज्ञेयः ।

२. ख.कोशे 'द्रूयते प्राप्यते यत्तद् द्रविणम्' इत्येकवचनान्तः पाठः ।

३. निरुक्ते द्रविणसादिनः, द्रविणसानिन इत्युभयथा निर्देशः (द्र०—उद्ध्रियमाणो निरुक्तपाठः)। तत्र द्रविणपदस्य द्रविणसाधके यज्ञे लक्षणया प्रयोगे 'यज्ञकर्त्तारः' इत्यर्थः । भवत्वर्थोऽपरो 'द्रविणसम्पादिनः' इत्यर्थो ज्ञेयः ।

४. 'हस्तेषु येषां ते' इत्युत्तरेण पाठेन सम्बन्धः । अत्र 'ग्रावापदस्य' 'गॄ शब्दे' इत्यस्मान्निर्वचने स्तुतिसमूहोऽर्थः', 'गॄ निगरणे' इत्यस्मान्निर्वचने ग्रहणं हननं वा लाक्षणिकोऽर्थो ज्ञेयः । यो निगीर्यते स मुखेन गृह्यते, दन्तैश्च हिंस्यते चर्व्यते ।

५. ऋ० १० । ७३ । १० ॥ ६. ऋ० २ । १२ । १३ ॥ ७. ऋ० २ । ३७ । ४ ॥

तेषु द्राविणोदसाः प्रवादा भवन्ति—'देवा अग्निं धारयन् द्रविणोदाम्[1]' इत्यपि निगमो भवति।
एतत्स बलधनयोर्दातृतम इति ? सर्वासु देवतास्वैश्वर्यं विद्यते। यथो एतदोजसो जातमुत मन्य मिति चाहेति ? अयमप्यग्निरोजसा बलेन मथ्यमानो जायते। तस्मादेनमाह—'सहसस्पुत्रं[2]'; हसः सूनुं[3]'; 'सहसो यहुम्[4]'। यथो एतदग्निं द्राविणोदसमाहेति ? ऋत्विजोऽत्र द्रविणोदस यन्ते, हविषो दातारस्ते चैनं जनयन्ति। 'ऋषीणां पुत्रो अधिराज एषः[5]' इत्यपि निगमो भवति।
एतत्तेषां पुनः पात्रस्थेन्द्रपानमिति भवतीति ? भक्तिमात्रं तद्भवति। यथा वायव्यानीति षां सोमपात्राणाम्। यथो एतत्सोमपानेनैनं स्तौतीति ? अस्मिन्नप्येतदुपपद्यते—'सोमं पिब दसानो गणश्रिभिः[6]' इत्यपि निगमो भवति। यथो एतद् द्रविणोदाः पिबतु द्रविणोदस इत्यस्यैव द्भवति॥ निरु० ८। १-२ **अनेन निरुक्तेनैवमेव द्रविणोदश्शब्दस्य यथायोग्यं सर्वत्रार्थान्वयो ज्ञेयः।**

सायणाचार्येण **द्रविणोदा इति पदं क्विबन्तं साधितं, तदप्यत्राशुद्धमेवास्ति। कुतः ?** निरुक्त-रस्य **द्राविणोदसम्[7]' इत्यादिव्याख्यानविरोधात्[8]। स्वरस्तु** गतिकारकोपपदात्० [अ० ६। । १३८] **इति सिद्ध एव॥ ७॥**

**अन्वयः—यो** द्रविणोदा **देवः परमेश्वरो भौतिको वास्ति, यं** देवं ग्रावहस्तासो द्रविणस ऋत्विजोऽध्वरे यज्ञेष्वीळते **पूजयन्त्यध्येष्य योजयन्ति वा, तमुपास्योपयुज्य एव मनुष्याः सदानन्दिता वन्ति॥ ७॥**

**अत्र श्लेषालङ्कारः।**

**भावार्थः—सकलैर्मनुष्यैः सर्वेषु कर्मोपासनाज्ञानकाण्डसाध्येषु यज्ञेषु परमेश्वरः पूज्यः, मशिल्पादिषु यज्ञेषु भौतिकोऽग्निः सुयोजनीयश्चेति॥ ७॥**

---

१. ऋ० १। ९६। १॥ २. ऋ० २। ७। ६॥ ३. ऋ० ८। ७५। ३॥
४. ऋ० १। ७९। ४॥ ५. अ० ४। ३९। ६॥ ६. ऋ० ५। ६०। ८॥
७. वै० य० मुद्रितेषु संस्करणेषु 'द्रविणोदम्' इत्यपपाठः।
८. निरुक्तकारेण 'अग्निं द्राविणोदसमाह' इत्युक्तम्। 'द्राविणोदस' इत्येतत् 'द्रविणोदस्' इति सान्त-ब्दादेव तस्येदमित्यर्थे तद्धितप्रत्यये उपपद्यते। क्विबन्ते 'द्रविणोदा' इत्याकारान्तात् तद्धिते सति 'द्राविणोदः' ति रूपमुपपद्येत। तस्मात् निरुक्तोक्ताद् 'द्राविणोदसम्' प्रयोगात् 'द्रविणोदस्' शब्दः सान्त इति निश्चीयते। च 'भूरञ्जिभ्यां कित्' ( उ० ४। २१७ ) सूत्रेण असुनः कित्वे 'आतो लोप इटि च' (अ० ६। ४। ६४) त्याकारलोपे सिद्ध्यति। न चात्र 'गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च' ( उ० ४। २२७ ) इत्यनेन पूर्व-दप्रकृतिस्वरत्वं शङ्क्यम्, तस्यानुवर्तमानेऽसिप्रत्यये विधानात्। अतएवायं भाष्यकारः स्वरविषयेऽनुपदं भवित—'स्वरस्तु गतिकारकोपपदात्' (अ० ६।२।१३८) सिद्ध एव' इति। अपि च वेदे 'द्रविणोदा द्रविणोदस्' इत्युभौ शब्दावुपलभ्येते। तत्राकारान्तः क्विपा विचा च सिद्ध्यति, सान्तस्त्वसुनि। आकारान्तोऽपि क्विपैव साधनीयः, न विचा। यतो वेदे आकारान्तस्य द्रविणोदाशब्दस्य अजादावसर्वनामस्थाने 'द्रविणोदः' ( ऋ० १। १५। १० ) प्रयोगस्योपलम्भात्। क्विबन्तस्यैव तत्राकारलोपः संभवति, न विजन्तस्य। 'क्विबन्तो धातुत्वं न जहाति' इति परिभाषया धातुत्वमाश्रित्यैव 'आतो धातोः' ( अ० ६। ४। १४० ) इत्याकारलोपः प्रवर्तते। अतः सायणाचार्यस्य ऋ० १। ९६। १ मन्त्रव्याख्याने विज्विधानमपि चिन्त्यमेव।

फिर अगले मन्त्र में ईश्वर और भौतिक अग्नि के गुणों का उपदेश किया है—

**पदार्थान्वयभाषा**—जो ( द्रविणोदाः ) विद्या बल राज्य और धनादि पदार्थों का देनेवाला ज्ञानस्वरूप परमेश्वर, तथा उत्तम धन आदि पदार्थ देनेवाला, ज्ञान तथा क्रिया का हेतु भौतिक अग्नि है, जिस (देवम्) देव को (ग्रावहस्तासः) स्तुति-समूह, ग्रहण वा हनन[कर्म,] और पत्थर आदि यज्ञरूप शिल्पविद्या की सिद्धि के हेतुरूप पदार्थ हाथ में हैं जिनके ऐसे जो ( द्रविणसः ) यज्ञ करनेवाले वा द्रव्यसंपादक विद्वान् ( अध्वरे ) अनुष्ठान करने योग्य, क्रियासाध्य, हिंसा के के अयोग्य यज्ञ, और (यज्ञेषु) अग्निहोत्र आदि अश्वमेध-पर्य्यन्त वा शिल्पविद्यामय यज्ञों में (ईळते) पूजन वा उसके गुणों का उपयोग करते हैं, वे ही मनुष्य सदा आनन्दयुक्त रहते हैं ॥ ७ ॥

इस मन्त्र में श्लेषालङ्कार है ।

**भावार्थ**—सब मनुष्यों को सब कर्म उपासना तथा ज्ञानकाण्ड [से साध्य] यज्ञों में परमेश्वर ही पूजा [ के योग्य है । ] तथा होम वा शिल्पादि कर्मों में भौतिक अग्नि अच्छी प्रकार युक्त करने योग्य है ॥ ७ ॥



स एव सर्वेषां पदार्थानां प्रदातेत्युपदिश्यते—

द्रविणोदा ददातु नो वसूनि यानि शृण्विरे । देवेषु ता वनामहे ॥८॥

द्रविणःऽदाः । ददातु । नः । वसूनि । यानि । शृण्विरे ॥ देवेषु । ता । वनामहे ॥८॥

**पदार्थः**—(द्रविणोदाः) सुष्ठूपासितो जगदीश्वरः, सम्यग्योजितो भौतिको वा (ददातु) ददाति वा । अत्र पक्षे लडर्थे लोट् । (नः) अस्मभ्यम् (वसूनि) विद्याचक्रवर्त्तिराज्यप्राप्याण्युत्तमानि धनानि (यानि) परोक्षाणि[1] (शृण्विरे) श्रूयन्ते । अत्र 'श्रु' धातोः छन्दसि लुङ्लङ्लिटः [अ० ३ । ४ । ६ ] इति लडर्थे लिट्[2], छन्दस्युभयथा [ अ० ३ । ४ । ११७ ] इति सार्वधातुकत्वेन श्नुविकरणः, आर्द्धधातुकत्वाद्यगभावः, विकरणव्यवहितत्वाद्[3] द्वित्वं च न भवति । (देवेषु) विद्वत्सु दिव्येषु सूर्यादिपदार्थेषु वा (ता) तानि । अत्र शेश्छन्दसि बहुलम् [अ० ६ । १ । ६८] इति लोपः । (वनामहे) संभजामहे । अत्र व्यत्ययेनात्मनेपदम् ॥८॥

**अन्वयः**—अस्माभिर्यानि देवेषु दिव्येषु कर्म्मसु राज्येषु वा शिल्पविद्यासिद्धेषु विमानादिषु

---

१. यच्छब्दः परोक्षार्थेऽपि प्रयुज्यते । तदुक्तम्—'प्रत्यक्षे च परोक्षे च समीपे दूरतस्तथा । सर्वेषां च प्रयोक्तव्यस्तथा पुंस्त्रीनपुंसके' इति दशपाद्युणादिवृत्तिः । ६ । ४३, पृष्ठ २३६ ।

२. यद्वाऽत्र छान्दसत्वात् 'विदो लटो वा' (अ० ३ । ४ । ८३) इत्यनेन विदो लटः स्थाने णलादयस्ते शृणोतेरपि लटः स्थाने भवन्ति । अस्मिन् पक्षे प्रयोगकल्पना लघीयसी भवति ।

३. 'लिटि धातोरनभ्यासस्य' ( अ० ६ । १ । ८ ) इत्यत्राव्यवहिते लिटि धातोर्द्वित्वविधानात् ।

वसूनि शृण्विरे श्रूयन्ते, ता तानि वयं वनामहे, एतानि च द्रविणोदा जगदीश्वरो नोऽस्मभ्यं भौतिकश्च ददाति ॥८॥

[अत्र श्लेषालङ्कारः[२]]।

**भावार्थः**—परमेश्वरेणास्मिन् जगति प्राणिभ्यो ये पदार्था दत्तास्तेभ्य उपकारे संयोजितेभ्यो ान्ति प्रत्यक्षाप्रत्यक्षाणि वस्तुजातानि वर्त्तन्ते, तानि देवेषु विद्वत्सु स्थित्वैव सुखप्रदानि न्तीति ॥८॥

उक्त अग्नि ही सब पदार्थों का देने वा दिलानेवाला है, इस विषय का उपदेश अगले मन्त्र किया है—

**पदार्थान्वयभाषा**—हम लोग (देवेषु) विद्वानों वा दिव्य कर्म राज्य तथा सूर्य्य आदि, र शिल्पविद्या से सिद्ध विमान आदि पदार्थों में (यानि) जिन (वसूनि) विद्या वा क्रवर्ति राज्य से प्राप्त होने योग्य उत्तम धनों को (शृण्विरे) सुनते, और [(ता) उनका] वनामहे) सेवन करते हैं, भली-भांति उपासना किया हुआ (द्रविणोदाः) जगदीश्वर (नः) लोगों के लिये [उन धनों को] (ददातु) देवे, तथा अच्छी प्रकार सिद्ध किया हुआ भौतिक ग्न भी देता है ॥ ८ ॥

[इस मन्त्र में श्लेषालंकार है।[३]]

**भावार्थ**—परमेश्वर ने इस संसार में जीवों के लिये जो पदार्थ दिये हैं, उपकार में संयुक्त ये उन पदार्थों से जितने प्रत्यक्ष वा अप्रत्यक्ष वस्तुसमूह उत्पन्न होते हैं, वे विद्वानों ही के सङ्ग सुख देनेवाले होते हैं ॥ ८ ॥



यज्ञकर्तॄणामृतुषु कर्त्तव्यान्युपदिश्यन्ते—

द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥९॥

द्रविणःऽदाः । पिपीषति । जुहोत । प्र । च । तिष्ठत ॥ नेष्ट्रात् । ऋतुऽभिः । इष्यत ॥९॥

**पदार्थः**—(द्रविणोदाः) यज्ञानुष्ठाता मनुष्यः (पिपीषति) सोमादिरसान् पातुमिच्छति । अत्र 'पीङ्' धातोः सन्, व्यत्ययेन परस्मैपदं च । (जुहोत) दत्त आदत्त वा[४]।

---

१. सच्छब्दोऽत्र पदार्थवाचकः ।

२. पदार्थेऽन्वये च द्विविधार्थ-निर्देशात् पूर्वमन्त्रभाष्य इवेहापि श्लेषालङ्कारो वक्तव्यः ।

३. यहां दो प्रकार का मन्त्रार्थ होने से पूर्वमन्त्र के समान श्लेषालङ्कार का निर्देश होना चाहिये ।

४. इतोऽग्रे वै० य० मुद्रितेषु संस्करणेषु 'अत्र तत् पिबतीति तम्' इत्यसंबद्धः पाठ उपलभ्यते । ह.कोशे यं न दृश्यते । लिपिकरप्रमादात् सन्निविष्टं स्यात् ।

( प्र ) प्रकृष्टार्थे ( च ) समुच्चयार्थे ( तिष्ठत ) प्रतिष्ठां प्राप्नुत । अत्र वा च्छन्दसि सर्वे विधयो भवन्ति [महा० १ । ४ । ९] इति नियमात्[1] समवप्रविभ्यः स्थः । अ० १ । ३ । २२ इत्यात्मनेपदं न भवति । ( नेष्ट्रात् ) विज्ञानहेतोः । अत्र णेषृ[2] गतौ इत्यस्मात् सर्वधातुभ्यः ष्ट्रन् । उ० ४ । १५९ इति 'ष्ट्रन्[3]' प्रत्ययः, बाहुलकात् [प्रत्ययस्वरः] । (ऋतुभिः) वसन्तादिभिर्योगे (इष्यत) विजानीत ॥ ९ ॥

**अन्वयः**—हे मनुष्याः ! यथा द्रविणोदा यज्ञानुष्ठाता विद्वान् मनुष्यो यज्ञेषु सोमादिरसं पिपीषति, तथैव यूयमपि तान् यज्ञान् नेष्ट्रात् जुहोत । तत्कृत्वर्त्तुभिर्योगे सुखैः [प्र] प्रकृष्टतया तिष्ठत प्रतिष्ठध्वं, तद्विद्यामिष्यत च ॥ ९ ॥

**अत्र वाचकलुप्तोपमालङ्कारः ।**

**भावार्थः**—मनुष्यैः सत्कर्मण एवा[4]ऽनुकरणं कर्त्तव्यं, नासत्कर्मणः । सर्वेष्वृतुषु यथायोग्यानि कर्म्माणि कर्त्तव्यानि । यस्मिन्नृतौ यो देशः स्थातुं गन्तुं योग्यस्तत्र स्थातव्यं गन्तव्यं च, तत्तद्देशानुसारेण भोजनाच्छादनविहाराः कर्त्तव्याः, इत्यादिभिर्व्यवहारैः सुखानि सततं सेव्यानीति ॥ ९ ॥

यज्ञ करनेवाले मनुष्यों को ऋतुओं में करने योग्य कार्य्यों का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे मनुष्यो ! जैसे ( द्रविणोदाः ) यज्ञ का अनुष्ठान करनेवाला विद्वान् मनुष्य, यज्ञों में सोम आदि ओषधियों के रस को ( पिपीषति ) पीने की इच्छा करता है, वैसे ही तुम लोग भी उन यज्ञों को (नेष्ट्रात्) विज्ञान से जानकर (जुहोत) करो कराओ । तथा उन यज्ञों

---

१. समवप्रविभ्यः स्थः ( अ० १ । ३ । २२ ) इति पञ्चमीश्रवणाद् अव्यवहिताद् उपसर्गात् परे धातौ सत्यात्मनेपदं भवति । इह च चशब्दव्यवधानादुपसर्गात् परो धातुर्नास्तीति नैवात्मनेपदस्य प्राप्तिरस्ति । परन्तु महाभाष्यकारेण 'नेरिति नैषा पञ्चमी, का तर्हि विशेषणषष्ठी—'नेर्यो विशिः' कश्च नेर्विशिः ? विशेष्यः । व्यवहिताश्चापि शक्यन्ते विशेषयितुम्' (महा० १ । ३ । ६०) इत्यपि पक्ष उपस्थापितः । अस्मिन् पक्षे च यत्र यत्र सूत्रेषु पञ्चमी श्रूयते, सा षष्ठ्यर्थे व्याख्येया । अस्मिश्च पक्षे व्यवहितेऽप्यात्मनेपदस्य प्राप्तिर्भवति । तं निराकर्त्तुं भाष्यकारस्य (दयानन्दस्य) अयं प्रयत्नः । एवं च कृत्वाऽस्य भाष्यकारस्य सायणस्य च 'सं वो मदासो अग्मत' (ऋ० १ । २० । ५) इति मन्त्रव्याख्याने । 'समो गम्यृच्छिभ्याम्' (अ० १ । ३ । २९) इति सूत्रेणात्मनेपदविधानमप्युपपद्यते ।

२. वै० य० मुद्रितेषु संस्करणेषु 'नेष्टृ' इत्यपपाठः ।

३. वै० य० मुद्रितेषु संस्करणेषु 'इति बाहुलकात् 'ष्ट्रन्' प्रत्ययः' इत्युपलभ्यते । ष्ट्रनः सर्वधातुभ्यो विधानान्नात्र 'बाहुलकात्' पदमपेक्षते । ष्ट्रनि नित्त्वादाद्युदात्तत्वं ( ६।१।१९१ ) प्राप्नोति, इष्यते चात्रान्तोदात्तत्वम् । अतोऽस्माभिः 'बाहुलकात्' पदमुपरिष्टान्नीत्वा 'प्रत्ययस्वरः' इति पदं प्रपूर्य स्वरदोषनिराकरणं विहितम् । भाष्यकारेण १ । १५ । २ मन्त्रे 'पोत्रात्' पदव्याख्याने ष्ट्रनं विधायान्तोदात्तत्वं स्वरव्यत्ययेनोक्तः, इह च बाहुलकेन, उभयथाऽपि समान एव स्वरः ।

४. वै० य० मुद्रितेषु संस्करणेषु 'सत्कर्मणोऽनुकरणमेव' इत्येवमस्थान 'एव' पठ्यते ।

धि के साथ सिद्ध करके (ऋतुभिः) ऋतु-ऋतु के संयोग से सुखों के साथ (प्रतिष्ठत) प्रतिष्ठा प्त होवो, [(च)] और उनकी विद्या को सदा (इष्यत) जानो ॥ ९ ॥

इस मन्त्र में वाचकलुप्तोपमालङ्कार है।

**भावार्थ**—मनुष्यों को अच्छे ही कामों का अनुकरण करना चाहिये दुष्टों का नहीं। और सब ओं में सब सुखों के लिये यथायोग्य कर्म्म करना चाहिये। तथा जिस ऋतु में जो देश स्थिति वा जाने-आने योग्य हो, उसमें उसी समय स्थिति वा जाना-आना, तथा उस देश के अनुसार पीना वस्त्रधारणादि व्यवहार करके सुखों को निरन्तर सेवन करना चाहिये ॥ ९ ॥



पुनः प्रत्यृतुमीश्वरध्यानमुपदिश्यते—

**यत्त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे । अध स्मा नो ददिर्भव ॥१०॥**

यत् । त्वा । तुरीयम् । ऋतुऽभिः । द्रविणःऽद: । यजामहे ॥ अध । स्म । नः । ददिः । भव ॥१०॥

**पदार्थः**—(यत्) यम् (त्वा) त्वां जगदीश्वरं (तुरीयम्) चतुर्णां स्थूलसूक्ष्मकारणपरमरणानां[1] संख्यापूरकम्। अत्र चतुरश्छयतावाद्यक्षरलोपश्च। अ० ५। २। ५१ इति वार्त्तिकेनास्य द्धिः। (ऋतुभिः) ऋच्छन्ति प्राप्नुवन्ति यैस्तैः। अत्र अर्त्तेश्च तुः। उ० १। ७२ इति 'ऋ' तोस्तुः प्रत्ययः किच्च। (द्रविणोदः) ददातीति दाः, द्रविणस्यात्मशुद्धिकरस्य विद्यावेर्धनस्य [2], तत्संबुद्धौ (यजामहे) पूजयामहे (अध) निश्चयार्थे (स्म) सुखार्थे। निपातस्य च [अ० ६। । १३५] इति दीर्घः। (नः) अस्मभ्यम् (ददिः) दाता। अत्र आदृगम०। अ० ३। २। १७१ 'डुदाञ्'धातोः किः प्रत्ययः। (भव) [स्पष्टार्थः] ॥ १० ॥

**अन्वयः**—हे द्रविणोदो जगदीश्वर! वयं यत् यं तुरीयं त्वा त्वामृतुभिर्योगे यजामहे स्म, स नोऽस्मभ्यमुत्तमानां विद्यादिधनानां ददिरध भव ॥१०॥

**भावार्थः**—परमेश्वरस्त्रिविधस्य स्थूलसूक्ष्मकारणाख्यस्य जगतः सकाशात् पृथग्वस्तुत्वात् तुर्यो वर्त्तते। यश्च सकलैर्मनुष्यैः सर्वाभिव्यापी सर्वान्तर्यामी सर्वाधारो नित्यं पूजनीयोऽस्ति, तं विहाय केनचिदन्यस्येश्वरबुद्ध्योपासना कार्य्या। नैवैतस्माद्भिन्नः कश्चित् कर्मानुसारेण वेभ्यः फलप्रदाताऽस्ति ॥१०॥

फिर ऋतु-ऋतु में ईश्वर का ध्यान करना चाहिये, इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे (द्रविणोदः) आत्मा की शुद्धि करनेवाले विद्या आदि धनदायक

---

१. अत्र निर्दिष्टं चतुर्थं परमकारणं ब्रह्म। स एव तुरीयः। द्रष्टव्योऽत्र भावार्थः।

२. अर्थप्रदर्शनमिदम्, समासस्तु द्रविणांसि ददातीति पूर्वनिर्दिष्टः (ऋ० १। १५। ७) एव द्रष्टव्यः। 'द्रविणस्य' इत्यपि एतदर्थकद्रविणस्सकारान्तशब्दस्य स्थानेऽर्थप्रदर्शनपर एव प्रयोगः।

ईश्वर ! हम लोग ( यत् ) जिस (तुरीयम्) स्थूल सूक्ष्म कारण और परम-कारण आदि पदार्थों में चौथी संख्या पूरण करनेवाले ( त्वा ) आपको ( ऋतुभिः ) पदार्थों को प्राप्त करानेवाली ऋतुओं के योग से (यजामहे स्म) सुखपूर्वक पूजते हैं, सो आप ( नः ) हमारे लिये उत्तम विद्यादि धनों को ( अध ) निश्चय करके ( ददिः ) देनेवाले ( भव ) हूजिये ।। १० ।।

भावार्थ—परमेश्वर तीन प्रकार के अर्थात् स्थूल सूक्ष्म और कारणरूप जगत् से अलग होने के कारण चौथा है। वह सर्वव्यापी सबका अन्तर्यामी और सब का आधार नित्य सब मनुष्यों को पूजन करने योग्य है। उसको छोड़कर ईश्वरबुद्धि करके किसी दूसरे पदार्थ की उपासना न करनी चाहिये। क्योंकि उससे भिन्न कोई दूसरा कर्म के अनुसार जीवों को फल देनेवाला नहीं है ।। १० ।।



पुनः सूर्य्यचन्द्रमसोर्ऋतुयोगे गुणा उपदिश्यन्ते—

अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता । ऋतुना यज्ञवाहसा ॥११॥

अश्विना । पिबतम् । मधु । दीद्यग्नी इति दीदिऽअग्नी । शुचिऽव्रता ।। ऋतुना । यज्ञऽवाहसा ॥११॥

पदार्थः—(अश्विना) सूर्य्यचन्द्रमसौ । सुपां सुलुग्० [अ० ७ । १ । ३९] इत्याकारादेशः सर्वत्र । (पिबतम्) पिबतः । अत्र व्यत्ययो लडर्थे लोट् च । ( मधु ) मधुरं रसम् ( दीद्यग्नी ) दीदिर्दीप्तिहेतुरग्निर्ययोस्तौ (शुचिव्रता) शुचिः पवित्रकरं व्रतं शीलं ययोस्तौ (ऋतुना) ऋतुभिः सह (यज्ञवाहसा) यज्ञान् हुतद्रव्यान् वहतः प्रापयतस्तौ ।।११।।

अन्वयः—हे विद्वांसः ! यूयं यौ शुचिव्रता यज्ञवाहसा दीद्यग्नी अश्विना मधु पिबतं पिबतः, ऋतुना ऋतुभिः सह रसान् गमयतस्तौ विजानीत ।।११।।

भावार्थः—ईश्वर उपदिशति—'मया यौ सूर्य्यचन्द्रमसावित्यादिसंयुक्तौ द्वौ द्वौ पदार्थौ कार्य्यसिद्ध्यर्थमीश्वरेण संयोजितौ, हे मनुष्याः ! युष्माभिस्तौ सम्यक् [प्रयुक्तौ] सर्वर्त्तुकं सुखं व्यवहारसिद्धिं च प्रापयत इति बोध्यम् ।।११।।

फिर ऋतुओं के साथ में सूर्य्य और चन्द्रमा के गुणों का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—हे विद्वान् लोगो ! तुम जो ( शुचिव्रता ) पदार्थों की शुद्धि करने के स्वभाववाले, ( यज्ञवाहसा ) होम किये हुए पदार्थों को प्राप्त कराने, तथा (दीद्यग्नी) प्रकाश-हेतुरूप अग्निवाले ( अश्विना ) सूर्य और चन्द्रमा ( मधु ) मधुर रस को ( पिबतम् ) पीते हैं, तथा ( ऋतुना ) ऋतुओं के साथ रसों को प्राप्त कराते हैं, उनको यथावत् जानो ।। ११ ।।

१. अत्र भावार्थे कानिचित् पदानि दूरान्वयानि वर्तन्ते । अतोऽयं सुगमः क्रमो ज्ञेयः—हे मनुष्याः ! मयेश्वरेण यौ सूर्यचन्द्रमसावित्यादिसंयुक्तौ द्वौ द्वौ पदार्थौ कार्यसिद्ध्यर्थं संयोजितौ, तौ युष्माभिः सम्यक्प्रयुक्तौ सर्वर्त्तुकं सुखं व्यवहारसिद्धिं च प्रापयत इति बोध्यम् ।

भावार्थ—ईश्वर उपदेश करता है कि मैंने जो सूर्य्य-चन्द्रमा इत्यादि मिले हुए अन्य दो पदार्थ कार्यों की सिद्धि के लिये संयुक्त किये हैं, हे मनुष्यो ! वे तुम लोगों से अच्छी प्रयुक्त किये गये सब ऋतुओं के सुख तथा व्यवहार की सिद्धि को प्राप्त कराते हैं, ऐसा ग सगझें ॥ ११ ॥



पुनरपि भौतिकाग्निगुणा उपदिश्यन्ते—

गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि । देवान् देवयते यज ॥१२॥

गार्हऽपत्येन । सन्त्य । ऋतुना । यज्ञऽनीः । असि ॥ देवान् । देवऽयते । यज ॥१२॥

पदार्थः—(गार्हपत्येन) गृहपतिना संयुक्तेन व्यवहारेण । गृहपतिना संयुक्ते ञ्यः । अ० ४। ९० अनेन ञ्यः प्रत्ययः । (सन्त्य) सन्तौ सनने क्रियासंविभागे भवः स सन्त्योऽग्निः । अत्र धातोर्बाहुलकादौणादिकस्तिः[1] प्रत्ययः, ततो भवे छन्दसि [अ० ४ । ४ । ११०] इति यत् । तुना) ऋतुभिः सह (यज्ञनीः) यज्ञं त्रिविधं नयति प्रापयतीति सः । सत्सूद्विषद्रुह० [अ० ३। ६१] इति क्विप् । (असि) भवति । अत्र सर्वत्र व्यत्ययः । (देवान्) दिव्यव्यवहारान् वयते) [दिव्यव्यवहारान्] कुर्वते शिल्पिने (यज) यजति शिल्पविद्यायां संगमयति । अत्र र्थे लोट् ॥१२॥

अन्वयः—यः [सन्त्य]सन्त्योऽग्निर्गार्हपत्येनर्त्तुना सह यज्ञनीरसि भवति, स देवयते शिल्पिने न् यज यजति संगमयति ॥१२॥

भावार्थः—यो विद्वद्भिः सर्वेषु व्यवहारकृत्येषु प्रयुक्तं विद्यया सम्यक् संप्रयोजितोऽयमरस्ति, स मनुष्यादिप्राणिभ्यो दिव्यानि सुखानि प्रापयति ॥१२॥

चतुर्दशसूक्तार्थेनास्य पञ्चदशसूक्तार्थस्य विश्वेदेवानुयोग्यत्वादीनां यथाक्रमं प्रतिपादनेन तिरस्तीति बोध्यम् ।

इदमपि सूक्तं सायणाचार्य्यादिभिरध्यापकविलसनादिभिश्चान्यथैव व्याख्यातम् ॥

इति पञ्चदशं सूक्तमेकोनत्रिंशो वर्गश्च समाप्तः ॥

फिर भी भौतिक अग्नि के गुणों का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—जो (सन्त्य) क्रियाओं के विभाग में अच्छी प्रकार प्रकाशित होनेवाला तिक अग्नि (गार्हपत्येन) गृहस्थों के व्यवहार से (ऋतुना) ऋतुओं के साथ (यज्ञनीः) न प्रकार के यज्ञ को प्राप्त करानेवाला (असि) है, सो (देवयते) दिव्य व्यवहारों को रनेवाले शिल्पी के लिये (देवान्) दिव्य व्यवहारों का (यज) शिल्पविद्या में संगम राता है ॥ १२ ॥

१. पदिप्रथिभ्यां नित् (उ० ४।१८३) इत्यनेन तिः, स च नित्, नित्त्वात् सन्ति पदमाद्युदात्तम् ।

**भावार्थ**—जो विद्वानों से सब व्यवहाररूप कार्यों में [illegible] क्रिया के साथ अच्छी प्रकार प्रयोग किया हुआ अग्नि है, सो मनुष्य आदि प्राणियों के लिये भिन्न भिन्न गुणों को प्राप्त कराता है ॥ १२ ॥

जो सब देवों के अनुयोगी वसन्त आदि ऋतु हैं, उनके सत्संयोग गुण-प्रतिपादन से चौदहवें सूक्त के अर्थ के साथ इस पन्द्रहवें सूक्त के अर्थ की सङ्गति जाननी चाहिये ॥

इस सूक्त का भी अर्थ सायणाचार्य आदि, तथा यूरोपदेशवासी विलसन आदि लोगों ने कुछ का कुछ वर्णन किया है ॥

यह पन्द्रहवां सूक्त और उनतीसवां वर्ग पूरा हुआ ॥



अथ नवर्च्चस्य षोडशसूक्तस्य काण्वो मेधातिथिर्ऋषिः ।

इन्द्रो देवता । गायत्री[1] छन्दः । षड्जः स्वरः ॥

तत्रेन्द्रगुणा उपदिश्यन्ते—

आ त्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्र त्वा सूरचक्षसः ॥१॥

आ । त्वा । वहन्तु । हरयः । वृषणम् । सोमऽपीतये । इन्द्र । त्वा । सूरऽचक्षसः ॥१॥

**पदार्थः**—(आ) समन्तात् (त्वा) तं सूर्यलोकम् (वहन्तु) प्रापयन्तु (हरयः) हरन्ति ये ते [हरयः] किरणाः । हृपिशिरुहि० । उ० ४ । १२५ इति हृधातोरिन् प्रत्ययः । (वृषणम्) यो वर्षति जलं स वृषा तम् । कनिन् युवृषि० । उ० १ । १५६ इति कनिन् प्रत्ययः । वा षपूर्वस्य निगमे । अ० ६ । ४ । ९ इति विकल्पाद्दीर्घाभावः । (सोमपीतये) सोमानां सुतानां पदार्थानां पीतिः पानं यस्मिन् व्यवहारे तस्मै । अत्र सह सुपा [अ० २ । १ । ४] इति समासः । (इन्द्र) विद्वन् (त्वा) तं पूर्वोक्तम् (सूरचक्षसः) सूरे सूर्ये चक्षांसि दर्शनानि येषां ते ॥१॥

**अन्वयः**—हे इन्द्र ! यं वृषणं सोमपीतये सूरचक्षसो हरयः [आ] समन्ततो वहन्ति, त्वा तं त्वमपि वह । यं सर्वे शिल्पिनो वहन्ति तं सर्वे वहन्तु । हे मनुष्या ! यं वयं विजानीमस्त्वा तं यूयमपि विजानीत[2] ॥१॥

---

१. सामान्येन, विशेषेण तु १, २, ४, ६-८ गायत्री; ३, ५ पिपीलिकामध्यानिचृद्गायत्री; ९ विराड्गायत्री ।

२. इस मन्त्र का संस्कृत-पदार्थ और अन्वय 'ख' कोश से भिन्न है । मन्त्र-भाष्य का वै० य० मुद्रित संस्करणों में पाठ भी उसी के अनुरूप है । ख-कोश का पाठ भी उपयोगी है, इस कारण हम उसे यहां उद्धृत करते हैं । पदार्थ में जितना अंश भिन्न है, उतना ही लिखा है—

**भावार्थः—याः सूर्य्यस्य दीप्तयस्ताः सर्वरसाहारकाः सर्वस्य प्रकाशिका वृष्टिकराः सन्ति, थायोग्यमानुकूल्येन मनुष्यैः सेविता उत्तमानि सुखानि जनयन्तीति ॥१॥**

अब सोलहवें सूक्त का आरम्भ है। उसके प्रथम मन्त्र में सूर्य के गुणों का उपदेश है—

**पदार्थान्वयभाषा**—'हे (इन्द्र) विद्वन् ! जिस (वृषणम्) वर्षा करनेहारे सूर्य्यलोक को ोमपीतये ) उत्पन्न हुए पदार्थों के रसों का पान जिसमें होता है, उस व्यवहार के लिये रचक्षसः) जिनका सूर्य्य में दर्शन होता है, वे (हरयः) हरण करनेहारे किरण (आ) सब ओर से करते हैं, (त्वा) उसको तू भी प्राप्त हो। जिसको सब कारीगर लोग [ यन्त्रादि रचना नेमित्त ] प्राप्त करते हैं, उसको सब मनुष्य (वहन्तु) प्राप्त करें। हे मनुष्यों ! जिसको हम जानते हैं ( त्वा ) उसको तुम भी जानो ॥ १ ॥

**भावार्थ**—जो सूर्य्य की प्रत्यक्ष दीप्ति सब रसों के हरने, सबका प्रकाश करने, तथा करनेवाली हैं, वे यथायोग्य अनुकूलता के साथ सेवन करने से मनुष्यों को उत्तम-उत्तम सुख हैं॥ १ ॥



पुनस्तद्गुणा उपदिश्यन्ते—

## इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथे ॥२॥

इमाः । धानाः । घृतऽस्नुवः । हरी इति । इह । उप । वक्षतः ॥ इन्द्रम् । सुखऽतमे । रथे ॥२॥

**पदार्थः—(इमाः) प्रत्यक्षाः (धानाः) धीयन्ते यासु ता दीप्तयः ।** [अत्र] धापृवस्य० । । ३ । ६ **इति नः प्रत्ययः । (घृतस्नुवः) घृतमुदकं स्नुवन्ति प्रस्रवन्ति यास्ताः (हरी) हरति भ्यां तौ, कृष्णशुक्लपक्षौ वा** पूर्वपक्षापरपक्षौ[2] वा इन्द्रस्य हरी, ताभ्यां हीदं सर्वं हरति। ड्वशब्रा० प्रपा० १ । खं० १ । (इह) **अस्मिन् संसारे (उप) सामीप्ये (वक्षतः) वहतः । अत्र**

"**पदार्थः**—……( वहन्तु ) प्रापयन्ति । अत्र लडर्थे लोट् । ( हरयः ) हरन्ति ये ते हरयः किरणाः । ….( इन्द्र ) सूर्यलोकः (?, सूर्यलोकम्) (त्वा)……॥ १ ॥

**अन्वयः**—यमिमे **सूरचक्षसो हरयस्त्वा** तं **वृषणम्** [इन्द्र] इन्द्रं सोमपीतये **आ वहन्तु** सर्वतो वहन्ति, त्वा मिन्द्रं **सोमपीतये** वयं विजानीमः ।"

१. ख कोश में भाषा-पदार्थ पूर्वनिर्दिष्ट संस्कृत-पदार्थ और अन्वय के अनुसार है।

२. यहां पूर्वपक्ष से शुक्लपक्ष और अपरपक्ष से कृष्णपक्ष अभिप्रेत है। पूर्वकाल में प्रत्येक मास मावस्या पर पूर्ण होता था। गुजरात तथा दक्षिण भारत में इस समय भी यही प्रथा है। उत्तरभारतीय ञ्चाङ्गों में भी पूर्णिमा का संकेत १५ संख्या से, और अमावास्या का ३० संख्या से आजकल भी होता है। मावास्या के लिये ३० संख्या का संकेत भी इसी मत का पोषक है कि चैत्रादि मास वस्तुतः अमावास्या पर समाप्त होते हैं।

लडर्थे लेट्। (इन्द्रम्) सूर्य्यलोकम् (सुखतमे) अतिशयेन सुखहेतौ (रथे) रमयति येन तस्मिन्। हनिकुषिनीरमि०। उ० २। २ इति क्थन् प्रत्ययः ॥२॥

अन्वयः—हरी [1]कृष्णशुक्लपक्षाविहेमा घृतस्नुवो धाना इन्द्रं सुखतमे रथ उपवक्षत उपगतं वहतः प्रापयतः ॥२॥

भावार्थः—यावस्मिन् संसारे रात्रिदिवसौ शुक्लकृष्णपक्षौ दक्षिणायनोत्तरायणौ हरीसंज्ञौ स्तः, ताभ्यां सूर्य्यः सर्वानन्दव्यवहारान् प्रापयति ॥२॥

फिर भी अगले मन्त्र में सूर्य्यलोक के गुणों का ही उपदेश किया है—

**पदार्थान्वयभाषा**—( हरी ) पदार्थों को हरनेवाले कृष्ण वा शुक्ल पक्ष ( इह ) इस लोक में ( इमाः ) इन ( घृतस्नुवः ) वर्षा की निमित्त ( धानाः ) दीप्तियों, तथा ( इन्द्रम् ) सूर्य्यलोक को ( सुखतमे ) अत्यधिक सुख के हेतु ( रथे ) रमण के साधन विमानादि रथों के ( उप ) समीप ( वक्षतः ) प्राप्त कराते हैं ॥ २ ॥

**भावार्थ**—जो इस संसार में रात्रि और दिन, शुक्ल तथा कृष्णपक्ष, दक्षिणायन और उत्तरायण [हरि=]हरण करनेवाले कहलाते हैं, उनसे सूर्य्यलोक सब आनन्दरूप व्यवहारों को प्राप्त कराता है ॥ २ ॥



अथेन्द्रशब्देन त्रयोऽर्था उपदिश्यन्ते—

इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे । इन्द्रं सोमस्य पीतये ॥३॥

इन्द्रम् । प्रातः । हवामहे । इन्द्रम् । प्रऽयति । अध्वरे ॥ इन्द्रम् । सोमस्य । पीतये ॥३॥

**पदार्थः**—( इन्द्रम् ) परमेश्वरम् ( प्रातः ) प्रतिदिनम् ( हवामहे ) आह्वयेम । बहुलं छन्दसि [अ० ६ । १ । ३३] इति संप्रसारणम् । (इन्द्रम्) परमैश्वर्य्यसाधकं भौतिकमग्निम् । ( प्रयति ) प्रैति प्रकृष्टं ज्ञानं ददातीति प्रयत् तस्मिन् । इण् गतौ इत्यस्माल्लटः स्थाने शतृ प्रत्ययः । ( अध्वरे ) उपासनाक्रियासाध्ये यज्ञे (इन्द्रम्) बाह्याभ्यन्तरस्थं वायुम् (सोमस्य) सूयते सर्वेभ्यः पदार्थेभ्यो रसस्तस्य (पीतये) पानाय । अत्र 'पा'धातोर्बाहुलकात्तिः प्रत्ययः [कित् संज्ञा च][2] ॥३॥

---

१. नेह कृष्णशुक्लपक्षयोरिह क्रमोऽभिप्रेतः । क्रमापेक्षायां दाक्षिणात्यव्यवहारेण विरोधः स्यात् । 'नवो नवो भवति जायमानः' (ऋ० १०।८५।१९) मन्त्रेऽप्ययमेव क्रमो दृश्यते । तथा च व्याख्यातं यास्केन—'नवो नवो भवति जायमान इति पूर्वपक्षादिमभिप्रेत्य, अह्नां केतुरुषसामेत्यग्र इत्यपरपक्षान्तमभिप्रेत्य ।' निरुक्त ११ । १ ॥ अपि च भावार्थे 'शुक्लकृष्णपक्षौ' इत्युच्यते, तेनापि क्रमापेक्षाभावो द्योत्यते ।

२. अयं कोष्ठान्तर्गतः पाठः ख.कोशे दृश्यते । अस्यायं भावः—कित्त्वमपि तिप्रत्ययस्य बाहुलकाद् बोध्यम् । कित्त्वादेव च 'घुमास्थागापा०' ( अ० ६ । ४ । ६६ ) इत्यादिना ईत्वं भवति । अत्र 'वरोस्तिः'

अन्वयः—वयं प्रातः प्रतिदिनमिन्द्रं परमैश्वर्य्यप्रदातारमीश्वरं प्रयत्यध्वरे हवामहे। वयं ध्वरे प्रातः प्रतिदिनमिन्द्रं विद्युदाख्यमग्निं हवामहे। वयं प्रयत्यध्वरे सोमस्य पीतये प्रातः दिनमिन्द्रं वायुं हवामहे ॥३॥

भावार्थः—मनुष्यैः परमेश्वरः प्रतिदिनमुपासनीयस्तदाज्ञायां वर्त्तितव्यं च। प्रतियज्ञं[1] दाख्योऽग्निर्योजनीयः प्राणविद्यया पदार्थभोगश्च कार्य्य इति ॥३॥

अब अगले मन्त्र में इन्द्रशब्द से तीन अर्थों का उपदेश किया है—

पदार्थान्वयभाषा—हम लोग ( प्रातः ) नित्यप्रति ( इन्द्रम् ) परम ऐश्वर्य देनेवाले ईश्वर ( प्रयत्यध्वरे ) बुद्धिप्रद उपासना-यज्ञ में ( हवामहे ) आह्वान करें। हम लोग उत्तम ज्ञान वाले, क्रिया से सिद्ध होने योग्य [शिल्पविद्याख्य] यज्ञ में प्रतिदिन ( इन्द्रम् ) उत्तम ऐश्वर्य्य-क विद्युत् अग्नि को क्रियाओं में संयुक्त करें। तथा हम लोग (सोमस्य) सब पदार्थों के साररूप के (पीतये) पीने के लिये प्रतिदिन (इन्द्रम्) बाहरले वा शरीर के भीतरले प्राण वायु को रूप यज्ञ में (हवामहे) विचार में लावें, और उसके सिद्ध[2] करने का विचार करें ॥ ३ ॥

भावार्थ—मनुष्यों को परमेश्वर प्रतिदिन उपासना करने योग्य है, और उसकी आज्ञा के कूल वर्त्तना चाहिये। [ शिल्पविद्यासम्बन्धी यज्ञ में ] बिजुली [ रूप अग्नि की योजना करनी हिये ]। तथा जो प्राणरूप वायु है, उसकी विद्या से पदार्थों का भोग करना चाहिये ॥३॥



अथेन्द्रशब्देन वायुगुणा उपदिश्यन्ते—

उप नः सुतमा गहि हरिभिरिन्द्र केशिभिः। सुते हि त्वा हवामहे ॥४॥

उप। नः। सुतम्। आ। गहि। हरिऽभिः। इन्द्र। केशिऽभिः॥ सुते। हि। त्वा। हवामहे ॥४॥

पदार्थः—(उप) निकटार्थे (नः) अस्माकम् ( सुतम् ) उत्पादितम् ( आ ) समन्तात् गहि) गच्छति। अत्र व्यत्ययो, लडर्थे लोट्, बहुलं छन्दसि [अ० २।४।७३] इति शपो

उ० ४। १८० ) इत्यादिना वसेर्विहितः 'तिः' पातेरपि द्रष्टव्यः। यद्वा—'दृणातेः किद्ध्रस्वश्च' इति दश-पुणादिसूत्रेण ( १। ७६ ) विहितः तिः कित्त्वं च ज्ञेयम्। अस्मिन् पक्षे आद्युदात्त-दृतिशब्द-निष्पत्तये नित्त्वं नेत्यादनुवर्त्तते। तथा सति नित्त्वादाद्युदात्तत्वे बाहुलकात् प्रत्ययस्वरोऽत्र विधातव्यः। प्रथमपक्षे कित्त्वम्, परपक्षे प्रत्ययस्वरत्वं बाहुलकात् विधेयं भवतीति न किञ्चिद् गौरवलाघवम्। तथाप्यपरपक्षे ह्रस्वविधान-ामर्थ्यादेव गुणाभावे सिद्धे किद्विधानमनर्थकं सज्ज्ञापयतीत्यन्यस्मादपि तिर्भवतीति ज्ञापकमुपपद्यते। सायणस्तु तानि छान्दसमन्तोदात्तमाह। इदं चात्रावधेयम्—कित्ङित्विधाने संज्ञापक्षो यद्यपि महाभाष्यकृता निराकृत-तथापि दशपाद्युणादिवृत्त्यादिष्वयं पक्षोऽप्याश्रीयते। एतद्भाष्यकृता स्वीयेऽष्टाध्यायीभाष्ये संज्ञापक्षो नाश्रितः। हाभाष्यकारोक्तोऽतिदेशपक्ष एवाश्रितः।

१. यज्ञशब्देन शिल्पविद्याख्यो यज्ञो ग्राह्यः। २. सिद्ध=वशीभूत।

लुक्। वा छन्दसि [अ० ३। ४। ८८] इति हेरपित्वाद्[1] अनुनासिकलोपश्च। (हरिभिः) हरणाहरणशीलैर्वेगवद्भिः किरणैः (इन्द्र) वायुः (केशिभिः) केशा बह्वयो रश्मयो विद्यन्ते येषामग्निविद्युत्सूर्य्याणां तैः सह। क्लिशेरन् लो लोपश्च। उ० ५। ३३ अनेन 'क्लिश'धातोरन् प्रत्ययो लकारलोपश्च। ततो भूम्न्यर्थ इनिः। केशी केशा रश्मयस्तैस्तद्वान् भवति, काशनाद्वा प्रकाशनाद्वा। केशीदं ज्योतिरुच्यते। निरु० १२। २५-२६। (सुते) उत्पादिते होमशिल्पादिव्यवहारे (हि) यतः (त्वा) तम् (हवामहे) आदद्मः ॥४॥

**अन्वयः**—हि यतोऽय[मिन्द्र इ]न्द्रो वायुः केशिभिर्हरिभिः सह नोऽस्माकं सुतमुपागह्युपागच्छति, तस्मात् त्वा तं सुते वयं हवामहे ॥४॥

**भावार्थः**—येऽस्माभिः शिल्पव्यवहारादिषूपकर्त्तव्याः पदार्थाः सन्ति, तेऽग्निविद्युत्सूर्य्या वायुनिमित्तेनैव प्रज्वलन्ति, गच्छन्त्यागच्छन्ति च ॥४॥

अब अगले मन्त्र में इन्द्र शब्द से वायु के गुणों का उपदेश किया है—

**पदार्थान्वयभाषा**—(हि) जिस कारण यह (इन्द्र) वायु (केशिभिः) जिनके बहुत से केश अर्थात् किरण विद्यमान हैं, उन अग्नि विद्युत् और सूर्य्य के (हरिभिः) पदार्थों के हरने वा स्वीकार करनेवाले वेगयुक्त किरणों के साथ (नः) हमारे (सुतम्) उत्पन्न किये हुए होम, वा शिल्प आदि व्यवहार के (उपागहि) निकट प्राप्त होता है, इससे (त्वा) उसको (सुते) उत्पन्न किये हुए होम वा शिल्प आदि व्यवहारों में हम लोग (हवामहे) ग्रहण करते हैं ॥ ४ ॥

**भावार्थ**—जो पदार्थ हम लोगों को शिल्प आदि व्यवहारों में उपकारयुक्त करने चाहियें, वे अग्नि विद्युत् और सूर्य, वायु के निमित्त से ही प्रकाशित होते, तथा जाते-आते हैं ॥ ४ ॥



पुनरिन्द्रगुणा उपदिश्यन्ते—

**सेमं नः स्तोममा गह्युपेदं सवनं सुतम्। गौरो न तृषितः पिब ॥५॥**

सः। इमम्। नः। स्तोमम्। आ। गहि। उप। इदम्। सवनम्। सुतम् ॥ गौरः। न। तृषितः। पिब ॥ ५ ॥

**पदार्थः**—(सः) इन्द्रः (इमम्) अनुष्ठीयमानम् (नः) अस्माकम् (स्तोमम्) स्तूयते गुणसमूहो यस्तं यज्ञम् (आ) समन्तात् (गहि) गच्छति। अत्र व्यत्ययो, लडर्थे लोट्, बहुलं छन्दसि [अ० २। ४। ७३] इति शपो लुक् च[2]। (उप) सामीप्ये (इदम्) प्रत्यक्षम् (सवनम्)

१. अपित्त्वे सति 'सार्वधातुकमपित्' (अ० १। २। ४) इति ङित्त्वम्। ङित्त्वे 'अनुदात्तोपदेश०' (अ० ६।४।३७) इत्यदिनानुनासिकलोपः।

२. चात् पूर्वमन्त्रोक्तो हेरपित्त्वादनुनासिकलोपोऽपि समुच्चेतव्यः।

ऐश्वर्यं प्राप्नुवन्ति येन तत् क्रियाकाण्डम् ( सुतम् ) ओषध्यादिरसम् ( गौरः ) गौरगुण-
ष्टो मृगः (न) जलाशयं प्राप्य जलं[1] पिबतीव (तृषितः) यस्तृष्यति पिपासति सः (पिब)
। अत्र व्यत्ययो, लडर्थे लोट् च ॥५॥

अन्वयः—य इन्द्रो नोऽस्माकमिमं स्तोमं सवनं तृषितो गौरो मृगो न इवोपागह्युपागच्छति,
सुतमुत्पन्नमोषध्यादिरसं पिब पिबति ॥५॥
अत्रोपमालङ्कारः ।

भावार्थः—यथाऽत्यन्तं तृषिता मृगादयः पशुपक्षिणो वेगेन धावनं कृत्वोदकाशयं प्राप्य जलं
न्ति, तथैवैष इन्द्रो वेगवद्भिः किरणैरोषध्यादिकं प्राप्यैतेषां रसं पिबति। मनुष्यैः सोऽयं
वृद्धये यथावदुपयोक्तव्यः ॥५॥

इति त्रिंशत्तमो वर्गः समाप्तः ॥

फिर भी अगले मन्त्र में इन्द्र के गुणों का उपदेश किया है—

पदार्थान्वयभाषा—जो उक्त सूर्य्य ( नः ) हमारे ( इमम् ) अनुष्ठान किये हुए (स्तोमम्)
नीय यज्ञ, वा ( सवनम् ) ऐश्वर्य प्राप्त करानेवाले क्रियाकाण्ड को ( न ) जैसे ( तृषितः )
( गौरः ) गौरगुणविशिष्ट हरिन ( उपागहि ) जलाशय के समीप पहुंच कर जल को
है, वैसे ( सः ) वह ( इदम् ) इस ( सुतम् ) उत्पन्न किये ओषधि आदि के रस को
ब ) पीता है ॥ ५ ॥

इस मन्त्र में उपमालङ्कार है ।

भावार्थ—जैसे अत्यन्त प्यासे मृग आदि पशु और पक्षी वेग से दौड़कर नदी तालाब आदि
शय का प्राप्त होके जल को पीते हैं, वैसे ही यह सूर्य्यलोक अपनी वेगवती किरणों से ओषधि
को प्राप्त होकर उनके रस को पीता है। सो यह [इन्द्र=सूर्य] विद्या की वृद्धि के लिये
यों को यथावत् उपयुक्त करना चाहिये ॥ ५ ॥

यह तीसवां वर्ग पूरा हुआ ॥



अथ वायुः कस्मै कस्मिन् कान् पिबतीत्युपदिश्यते—

इमे सोमास इन्दवः सुतासो अधि बर्हिषि । ताँ इन्द्र सहसे पिब ॥६॥

इमे । सोमासः । इन्दवः । सुतासः । अधि । बर्हिषि ॥ तान् । इन्द्र । सहसे । पिब ॥६॥

पदार्थः—( इमे ) प्रत्यक्षाः ( सोमासः ) सूयन्त उत्पद्यन्ते सुखानि येभ्यस्ते ( इन्दवः )
न्ति स्नेहयन्ति सर्वान् पदार्थान् ये ते रसाः। उन्देरिच्चादेः। उ० १। १२ इत्युः प्रत्ययः,

---

१. पदार्थस्य स्पष्टतायै 'पिबति' पदमत्राध्याहृतम् ।

आदेरिकारादेशश्च। (सुतासः) ईश्वरेणोत्पादिताः (अधि) उपरिभावे (बर्हिषि) बृंहन्ति वर्धन्ते सर्वे पदार्था यस्मिन्नन्तरिक्षे, तस्मिन्। बृंहेर्नलोपश्च। उ० २। १०९ अनेन इसिः प्रत्ययो नकारलोपश्च। (तान्) उक्तान् (इन्द्र) वायुः (सहसे) बलाय। सह इति बलनामसु पठितम्। निघं० २। ९। (पिब) पिबति। अत्र व्यत्ययो, लडर्थे लोट् च ॥६॥

अन्वयः—ये[1]ऽधिबर्हिषीश्वरेणेमे सोमास इन्दवः सहसे सुतास उत्पादिताः, तानिन्द्रो वायुः प्रतिक्षणे[2] [पिब] पिबति ॥६॥

भावार्थः—ईश्वरेणास्मिन् जगति प्राणिनां बलाभिवृद्धये यावन्तो मूर्त्ताः पदार्था उत्पादिताः, तान् सूर्य्येण छेदितान् वायुः स्वसमीपस्थान् कृत्वा धरति। तस्य संयोगेन प्राण्यप्राणिनो बलयन्ति[3] ॥६॥

अब वायु किसलिये किसमें किन पदार्थों के रस को पीता है, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—(अधिबर्हिषि) जिसमें सब पदार्थ वृद्धि को प्राप्त होते हैं, उस अन्तरिक्ष में ईश्वर ने जो (इमे) ये, (सोमासः) जिनसे कि सुख उत्पन्न होते हैं, और जो कि (इन्दवः) सब पदार्थों को गीला करनेवाले रस हैं, वे (सहसे) बल आदि गुणों के लिये (सुतासः) उत्पन्न किये हैं, (तान्) उनको (इन्द्र) वायु (पिब) क्षण क्षण में पिया करता है ॥ ६ ॥

भावार्थ—ईश्वर ने इस संसार में प्राणियों के बल आदि की वृद्धि के लिये जितने मूर्तिमान् पदार्थ उत्पन्न किये हैं, सूर्य से छिन्न-भिन्न किये हुए उनको पवन अपने निकट करके धारण करता है। उसके संयोग से प्राणी और अप्राणी बलपराक्रमवाले होते हैं ॥ ६ ॥



स कीदृग्गुणोऽस्तीत्युपदिश्यते—

अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शन्तमः। अथा सोमं सुतं पिब ॥७॥

अयम्। ते। स्तोमः। अग्रियः। हृदिऽस्पृक्। अस्तु। शम्ऽतमः। अथ। सोमम्। सुतम्। पिब ॥७॥

पदार्थः—(अयम्) अस्माभिरनुष्ठितः (ते) तस्यास्य (स्तोमः) गुणप्रकाशक्रिया-समूहः[4] (अग्रियः) अग्रे भवोऽत्युत्तमः। घच्छौ च। अ० ४। ४। ११७ अनेनाग्रशब्दाद् घः

---

१. उत्तरत्रान्वयः—'य इमे'।

२. 'तृतीयासप्तम्योर्बहुलम्' (अ० २।४।८४) इत्यमभावे विभक्तेः श्रवणम्। तथाऽमभावे अव्ययत्वाद् विभक्तिलुका भाव्यम्, तस्यापि बाधात्। ३. बलं कुर्वन्ति बलिनो भवन्तीति यावत्। अत्र तत्करोति तदाचष्टे (अ० ३। १। २६ वा०) इति करोत्यर्थे णिच्।

४. वै० य० मुद्रितेषु संस्करणेषु 'गुणप्रकाशसमूहक्रियः' इत्यपपाठः। द्रष्टव्योऽत्र भावार्थः।

। (हृदिस्पृक्) यो हृद्यन्तःकरणे सुखं स्पर्शयति सः (अस्तु) भवेत्। अत्र [1]लिङर्थे लोट्। मः) शं सुखमतिशयितं [2]यस्मिन् सः। शमिति सुखनामसु पठितम्। निघं० ३। ६। (अथ) ार्थे, निपातस्य च [ अ० ६। ३। १३५ ] इति दीर्घः। ( सोमम् ) सर्वपदार्थाभिषवम् उत्पन्नम् (पिब) पिबति। अत्र व्यत्ययो, लडर्थे लोट् च ॥७॥

**अन्वयः**—मनुष्यैर्यथाऽयं वायुः पूर्वं सुतं सोमं पिब, अथेत्यनन्तरं ते तस्याग्रियो हृदिस्पृक स्तोमो [ विदितोऽस्तु] भवेत्तथाऽनुष्ठातव्यम् ॥७॥

**भावार्थः**—मनुष्यैः शोधित उत्कृष्टगुणोऽयं पवनोऽत्यन्तसुखकारी भवतीति बोध्यम् ॥७।

उक्त वायु कैसे गुणवाला है, इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—मनुष्यों को जैसे यह वायु प्रथम ( सुतम् ) उत्पन्न किये हुए (सोमम्) दार्थों के रस को ( पिब ) पीता है, ( अथ ) उसके अनन्तर ( ते ) जो इस वायु का ग्रयः ) अत्युत्तम, ( हृदिस्पृक् ) अन्तःकरण में सुख का स्पर्श करानेवाला, (शन्तमः) य सुखवाला ( स्तोमः ) गुणों से प्रकाशित क्रियाओं का समूह ( अस्तु ) विदित हो, वैसे करने चाहियें ॥ ७ ॥

**भावार्थ**—मनुष्यों से शुद्ध किया हुआ उत्तम गुणवाला यह पवन अत्यन्त सुखकारी होता ऐसा जानना चाहिये ] ॥ ७ ॥



पुनस्तद्गुणा उपदिश्यन्ते—

विश्वमित् सवनं सुतमिन्द्रो मदाय गच्छति । वृत्रहा सोमपीतये ॥८॥

विश्वम्। इत्। सवनम्। सुतम्। इन्द्रः। मदाय। गच्छति॥ वृत्रऽहा। सोमऽपीतये ॥८॥

**पदार्थः**—(विश्वम्) जगत् (इत्) एव ( सवनम् ) सर्वसुखसाधनम् ( सुतम् ) उत्पन्नम् द्रः) वायुः (मदाय) आनन्दाय (गच्छति) प्राप्नोति (वृत्रहा) यो वृत्रं मेघं हन्ति[3] सः।

१. वै० य० मुद्रितेषु संस्करणेषु 'लडर्थे' इत्यपपाठः, 'भवेत्' इत्यर्थनिर्देशात्। क. ख.ग.कोशेषु '(अस्तु) अत्र लडर्थे लोट्' इति पाठः (इत्थमेवान्वये आसीत्)। 'भवति' अर्थे 'लडर्थे लोट्' इति पाठो युक्त 'भवति' स्थाने 'भवेत' संशोधनं कृतम्, अग्रिमः पाठोऽसंशोधित एव स्थित। अतः सोऽपपाठः अत एवास्माभिः, 'लिङर्थे' इत्येवं शोधितः।

२. अर्थप्रदर्शनपरं वाक्यम्। नास्य मत्वर्थे तमपो विधाने तात्पर्यम्। शं सुखं यस्मिन्, तदपि तारतम्यो- शमित्युच्यते। एवं च शन्तमः पदेन यस्मिन्नतिशयेन शं तदेवोच्यते इति युक्त एवात्रार्थनिर्देशः।

३. यद्यपि 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (अ० ३।२।८८) सूत्रे 'भूते' इत्यनुवर्तते, तथापीह छान्दसत्वादभूतेऽपि ज्ञेयः।

ब्रह्मभ्रूणवृत्रेषु क्विप्। अ० ३। २। ८७ अनेन 'हन'धातोः क्विप्। (सोमपीतये) सोमानां पीतिः पानं यस्मिन्नानन्दे, तस्मै। अत्र सह सुपा [अ० २। १। ४] इति समासः[1] ॥८॥

अन्वयः—अयं वृत्रहेन्द्रः सोमपीतये मदायैव सवनं सुतं विश्वं गच्छति प्राप्नोति ॥८॥

भावार्थः—वायुः [2]स्वर्गमनागमनैः सकलं जगत् प्राप्य वेगवान् मेघहन्ता सन् सर्वान् प्राणिनः सुखयति। नैवैतेन विना कश्चित् कंचिदपि व्यवहारं साधितुमलं भवतीति ॥८॥

फिर अगले मन्त्र में उसी के गुणों का उपदेश किया है—

**पदार्थान्वयभाषा**—यह (वृत्रहा) मेघ को हनन करनेवाला (इन्द्रः) वायु (सोमपीतये) उत्तम-उत्तम पदार्थों का पान करानेवाले (मदाय) आनन्द के लिये (इत्) निश्चय करके (सवनम्) जिससे सब सुखों को सिद्ध करते हैं, उस (सुतम्) उत्पन्न हुए (विश्वम्) जगत् को (गच्छति) प्राप्त होता है ॥ ८ ॥

**भावार्थ**—वायु आकाश में अपने गमनागमन से सब संसार को प्राप्त होकर मेघ से वृष्टि करने वा सबसे वेगवाला होकर सब प्राणियों को सुखयुक्त करता है। इसके विना कोई प्राणी किसी भी व्यवहार को सिद्ध करने को समर्थ नहीं हो सकता ॥ ८ ॥



अथेन्द्रशब्देनेश्वरगुणा उपदिश्यन्ते—

## सेमं नः काममा पृण गोभिरश्वैः शतक्रतो। स्तवाम त्वा स्वाध्यः ॥९॥

सः। इमम्। नः। कामम्। आ। पृण। गोभिः। अश्वैः। शतक्रतो इति शतऽक्रतो॥ स्तवाम। त्वा। सुऽआध्यः ॥९॥

**पदार्थः**—(सः) जगदीश्वरः (इमम्) वेदमन्त्रैः प्रेम्णा सत्यभावेनानुष्ठीयमानम् (नः) अस्माकम् (कामम्) काम्यत इष्यते सर्वैर्जनैः, तम् (आ) अभितः (पृण) पूरय (गोभिः) इन्द्रियपृथिवीविद्याप्रकाशपशुभिः (अश्वैः) आशुगमनहेतुभिरग्न्यादिभिस्तुरङ्गैर्हस्त्यादिभिर्वा (शतक्रतो) शतमसंख्यातानि क्रतवः कर्माण्यनन्ता प्रज्ञा वा यस्य तत्संबुद्धौ, सर्वकामप्रदेश्वर! (स्तवाम) नित्यं स्तुवेम[3] (त्वा) त्वाम् (स्वाध्यः) ये स्वाध्यायन्ति ते। अत्र स्वाङ् पूर्वाद् ध्यै

१. योगविभागेनेति शेषः।   २. 'स्वः' इत्यन्तरिक्षार्थं वेदे लोके च प्रसिद्धः।

३. धातुपाठे धातूनां तत्तद्गणेषु निर्देशः प्रायिकः। अत्र च 'बहुलमेतन्निदर्शनम्' इति धातुसूत्रं (१०।३६६) प्रमाणम्। तथा च 'तुरुस्तुशम्यमः सार्वधातुके' (अ० ७।३।९५) सूत्रेण शम्यमोर्दैवादिकभौवादिकधात्वोरदादिगणे निर्देश उपपद्यते। न ह्यादादिके स्वीकारे आभ्यां विकरणलुगुपपद्यते। विकरणलुगभावे च नाभ्यां परो हलादिः सार्वधातुकमव्यवहितं सम्भवति। न च छान्दसो विकरणलुक् शक्यते विज्ञातुम्, सूत्रे छन्दसीत्यस्यानुवृत्तेः। एवं च कृत्वा भाष्यकारोक्तः 'स्तुवेम' इति प्रयोग उपपद्यतेतराम्। धातूनां तत्तद्गणपाठस्य प्रायिकत्वानभिमते बहवः शिष्टप्रयोगा व्याकुप्येरन्।

न्तायाम् इत्यस्मात् ध्यायतेः संप्रसारणं च। अ० ३।२।१७८ अनेन [वार्त्तिकेन][1] क्विप् सारणं च ॥९॥

अन्वयः—हे शतक्रतो जगदीश्वर! यं त्वा [त्वां] स्वाध्यो वयं स्तवामः स्तुवेम, स त्वं भिरश्वैर्नोऽस्माकम् [इमं] काममापृण समन्तात् प्रपूरय ॥९॥

भावार्थः—ईश्वरस्यैतत् सामर्थ्यं वर्त्तते, यत् पुरुषार्थिनां धार्मिकाणां मनुष्याणां स्वस्वकर्मा- द्वारेण सर्वेषां कामानां पूर्तिं करोति। यः सृष्टौ परमोत्तमपदार्थोत्पादनधारणाभ्यां सर्वान् णिनः सुखयति, तस्मात् स एव सर्वैर्नित्यमुपासनीयो, नेतरः ॥९॥

अस्य षोडशसूक्तार्थस्यर्त्तुसंपादकानां सूर्य्यवाय्वादीनां यथायोग्यं प्रतिपादनात् पञ्चदश- क्तार्थेन सह संगतिरस्तीति बोध्यम् ॥

इदमपि सूक्तं सायणाचार्य्यादिभिर्यूरोपदेशवासिभिरध्यापकविलसनादिभिश्च विपरीतार्थं गख्यातमिति ॥

इति षोडशं सूक्तमेकत्रिंशो वर्गश्च समाप्तः ॥

अब अगले मन्त्र में इन्द्र शब्द से ईश्वर के गुणों का उपदेश किया है—

पदार्थान्वयभाषा—हे (शतक्रतो) असंख्यात कामों को सिद्ध करनेवाले, अनन्तविज्ञान- युक्त जगदीश्वर! जिस (त्वा) आपकी (स्वाध्यः) अच्छे प्रकार ध्यान करनेवाले हम लोग (स्तवाम) नित्य स्तुति करें, (सः) वह आप (गोभिः) इन्द्रिय पृथिवी विद्या का प्रकाश और पशु, तथा (अश्वैः) शीघ्र चलने और चलानेवाले अग्नि आदि पदार्थ, वा घोड़े हाथी आदि से (नः) हमारी [(इमम्)] वेदमन्त्रों से प्रेम, और सत्यभाव से अनुष्ठीयमान (कामम्) कामनाओं को (आपृण) सब ओर से पूरण कीजिये ॥ ९ ॥

भावार्थ—ईश्वर में यह सामर्थ्य सदैव रहता है कि वह पुरुषार्थी धर्मात्मा मनुष्यों को उनके कर्मों के अनुसार सब कामनाओं से पूरण करता है। तथा जो संसार में परम उत्तम-उत्तम पदार्थों का उत्पादन तथा धारण करके सब प्राणियों को सुखयुक्त करता है, इससे सब मनुष्यों को उसी परमेश्वर की नित्य उपासना करनी चाहिये ॥ ९ ॥

ऋतुओं के संपादक जो कि सूर्य्य और वायु आदि पदार्थ हैं, उनके यथायोग्य प्रतिपादन से पन्द्रहवें सूक्त के अर्थ के साथ इस सोलहवें सूक्त के अर्थ की सङ्गति समझनी चाहिये ॥

इस सूक्त का भी अर्थ **सायणाचार्य्य** आदि, तथा यूरोपदेशवासी अध्यापक **विलसन** आदि ने विपरीत वर्णन किया है ॥

यह सोलहवां सूक्त और इकतीसवां वर्ग पूरा हुआ ॥



१. वै० य० मुद्रिते चतुर्थसंस्करणे कोष्ठके परिवृद्धं पदम्।

अथास्य नवर्चस्य सप्तदशसूक्तस्य काण्वो मेधातिथिर्ऋषिः । इन्द्रावरुणौ देवते ।
१, ३, ७, ९ गायत्री; यवमध्याविराड्गायत्री; ४ पादनिचृद्गायत्री;
५ भुरिगार्ची गायत्री; ६ निचृद्गायत्री; ८ पिपीलिकामध्या-
निचृद्गायत्री च छन्दः । षड्जः स्वरः ॥

तत्रेन्द्रावरुणगुणा उपदिश्यन्ते—

इन्द्रावरुणयोरहं सम्राजोरव आ वृणे । ता नो मृळात ईदृशे ॥१॥

इन्द्रावरुणयोः । अहम् । सम्ऽराजोः । अवः । आ । वृणे ॥ ता । नः । मृळातः । ईदृशे ॥१॥

**पदार्थः**—(इन्द्रावरुणयोः) इन्द्रश्च वरुणश्च तयोः सूर्य्याचन्द्रमसोः । इन्द्र इति पदनामसु पठितम् । निघं० ५ । ४ । वरुण इति च । निघं० ५ । ४ अनेन व्यवहारप्रापकौ गृह्येते । (अहम्) होमशिल्पादिकर्मानुष्ठाता (सम्राजोः) यौ सम्यग्राजेते दीप्येते, तयोः (अवः) अवनं रक्षणम्, अत्र भावेऽसुन्[1] । (आ) समन्तात् (वृणे) स्वीकुर्ये (ता) तौ, अत्र सुपां सुलुग्० [अ० ७ । १ । ३९] इत्याकारादेशः । (नः) अस्मान् (मृळातः) सुखयतः । अत्र लडर्थे लेट् । (ईदृशे) चक्रवर्त्तिराज्यसुखस्वरूपे व्यवहारे ॥१॥

**अन्वयः**—अहं ययोः सम्राजोरिन्द्रावरुणयोः सकाशादव आवृणे, [ता] तावीदृशे नोऽस्मान् मृडातः ॥१॥

**भावार्थः**—यथा प्रकाशमानौ जगदुपकारकौ सर्वसुखव्यवहारहेतू चक्रवर्त्तिराजवद्[2] रक्षकौ सूर्य्याचन्द्रमसौ वर्त्तेते, तथैवाऽस्माभिरपि भवितव्यम् ॥१॥

अब सत्रहवें सूक्त का आरम्भ है । इसके पहिले मन्त्र में इन्द्र और वरुण के गुणों का उपदेश किया है—

**पदार्थान्वयभाषा**—मैं जिन ( सम्राजोः ) अच्छी प्रकार प्रकाशमान ( इन्द्रावरुणयोः ) सूर्य्य और चन्द्रमा के गुणों से ( अवः ) रक्षा को (आवृणे ) अच्छी प्रकार स्वीकार करता हूं, ( ता ) वे दोनों ( ईदृशे ) चक्रवर्त्ति-राज्य-सुखरूप व्यवहार में ( नः ) हम लोगों को (मृळातः) सुखयुक्त करते हैं ॥ १ ॥

**भावार्थ**—जैसे प्रकाशमान, संसार के उपकार करने, सब सुखों के देने, व्यवहारों के हेतु, और चक्रवर्त्ति राजा के समान सब की रक्षा करनेवाले सूर्य्य और चन्द्रमा हैं, वैसे ही हम लोगों को भी होना चाहिये ॥ १ ॥



१. 'सर्वधातुभ्योऽसुन्' (उ० ४।१८९) इत्यनेनेति शेषः ।
२. वै० य० मुद्रितेषु संस्करणेषु 'चक्रवर्तिराज्यवद्' इति पाठः । भाषार्थोऽत्र द्रष्टव्यः ।

अथेन्द्रावरुणाभ्यां सह संप्रयुक्ता अग्निजलगुणा उपदिश्यन्ते—

गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः । धर्त्तारा चर्षणीनाम् ॥२॥

गन्तारा । हि । स्थः । अवसे । हवम् । विप्रस्य । माऽवतः ॥ धर्त्तारा । चर्षणीनाम् ॥२॥

पदार्थः—(गन्तारा) गच्छत इति गमनशीलौ । अत्र सुपां सुलुग्० [अ० ७ । १ । ३९] याकारादेशः । (हि) यतः (स्थः) स्तः, अत्र व्यत्ययः । (अवसे) क्रियासिद्ध्येषणायै (हवम्) होति ददात्याददाति यस्मिन्, तं होमशिल्पव्यवहारम् (विप्रस्य) मेधाविनः (मावतः) द्विधस्य पण्डितस्य । अ० वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् । अ० ५ । । ३९ अनेन वार्त्तिकेनास्मच्छब्दात् सादृश्ये वतुप् प्रत्ययः, आ सर्वनाम्नः । अ० ६ । ३ । ९० याकारादेशश्च । (धर्त्तारा) कलाकौशलयन्त्रेषु योजितौ होमरक्षणशिल्पव्यवहारान् धरतः, (चर्षणीनाम्) मनुष्यादिप्राणिनाम् । कृषेरादेश्च चः । उ० २ । १०४ अनेन 'कृष'धातोरनिः ्यय आदेश्चकारादेशश्च ॥२॥

अन्वयः—¹ये हि खल्विमे अग्निजले संप्रयुक्ते मावतो विप्रस्य हवं [गन्तारा] गन्तारौ स्थः ः, चर्षणीनां धर्त्तारा धारणशीले चात अहमेतौ स्वस्य सर्वेषां चावसे आवृणे ॥२॥

पूर्वस्मान्मन्त्रात् 'आवृणे' इति क्रियापदस्यानुवर्त्तनम् ।

भावार्थः—विद्वद्भिर्यदा कलायन्त्रेषु युक्त्या संयोजिते अग्निजले प्रेर्य्येते, तदा यानानां ीघ्रगमनकारके तत्र स्थितानां मनुष्यादिप्राणिनां पदार्थभाराणां च धारणहेतू सुखदायके च ्वत इति ॥२॥

अब इन्द्र और वरुण से संयुक्त किये हुए अग्नि और जल के गुणों का उपदेश अगले मन्त्र ं किया है—

पदार्थान्वयभाषा—जो (हि) निश्चय करके ये संप्रयोग किये हुए अग्नि और जल मावतः) मेरे समान पण्डित तथा (विप्रस्य) बुद्धिमान् विद्वान् के (हवम्) पदार्थों का ाना-देना करानेवाले होम वा शिल्पव्यवहार को (गन्तारा) प्राप्त करानेवाले (स्थः) होते ं, तथा (चर्षणीनाम्) मनुष्यादि प्राणियों के (धर्त्तारा) कलाकौशलादि यन्त्रों में प्रयुक्त किये ुए होम रक्षण तथा शिल्पादि व्यवहारों को धारण करनेवाले होते हैं, इससे मैं इनको अपने तथा सबको (अवसे) क्रिया की सिद्धि के लिये (आवृणे) स्वीकार करता हूं ॥ २ ॥

पूर्वमन्त्र से इस मन्त्र में 'आवृणे' इस पद का ग्रहण किया है ।

भावार्थ—विद्वानों से युक्ति के साथ कलायन्त्रों में प्रयुक्त किए हुए अग्निजल जब कलाओं े प्रेरित किये जाते हैं, तब रथों को शीघ्र चलाने, उनमें बैठे हुए मनुष्य आदि प्राणियों वा दार्थों के भार के धारण करने, और सब को सुख देनेवाले होते हैं । २॥



१. वै० य० मुद्रितेषु संस्करणेषु 'यौ ये' इत्येव पाठः, तत्र 'यौ' पदं निष्प्रयोजनम् ।

एवं साधितावेतौ किंहेतुकौ भवत इत्युपदिश्यते—

अनुकामं तर्पयेथामिन्द्रावरुण राय आ। ता वां नेदिष्ठमीमहे ॥३॥

अनुऽकामम्। तर्पयेथाम्। इन्द्रावरुणा। रायः। आ॥ ता। वाम्। नेदिष्ठम्। ईमहे ॥३॥

पदार्थः—(अनुकामम्) कामंकाममनु (तर्पयेथाम्) तर्पयेते। अत्र व्यत्ययो, लडर्थे लोट् च। (इन्द्रावरुणा) अग्निजले। अत्र सुपां सुलुग्० [अ० ७। १। ३९] इत्याकारादेशो वर्णव्यत्ययेन ह्रस्वत्वं[1] च। (रायः) धनानि (आ) समन्तात् (ता) तौ। अत्रापि सुपां सुलुग्० [अ० ७। १। ३९] इत्याकारादेशः। (वाम्) द्वावेतौ। अत्र व्यत्ययः। (नेदिष्ठम्) अतिशयेनान्तिकं समीपस्थम्। अत्र अन्तिकबाढयोर्नेदसाधौ। अ० ५। ३। ६३ अनेनान्तिकशब्दस्य नेदादेशः। (ईमहे) जानीमः प्राप्नुमः। ईङ् गतौ इत्यस्माद् बहुलं छन्दसि [अ० २। ४। ७३] इति शपो लुकि श्यनभावः[2] ॥३॥

अन्वयः—याविमाव् [इन्द्रावरुणा] इन्द्रावरुणावनुकामं रायो धनानि [दत्त्वाऽऽ]तर्पयेथां तर्पयेते, ता तौ वां द्वावेतौ वयं नेदीष्ठमीमहे ॥३॥

भावार्थः—मनुष्यैरेवं [3]याविन्द्रावरुणौ गुणान् विदित्वा क्रियायां संयोजितौ बहूनि सुखानि प्रापयतः, तौ युक्त्या कार्य्येषु संप्रयोजनीया इति ॥३॥

इस प्रकार साधे हुए ये दोनों किस-किसके हेतु होते हैं, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—जो ये ( इन्द्रावरुणा ) अग्नि और जल ( अनुकामम् ) हर एक इच्छा अनुसार ( रायः ) धनों को देकर ([आ] तर्पयेथाम्) तृप्ति करते हैं, ( ता ) उन (वाम्) दोनों को हम लोग ( नेदिष्ठम् ) अच्छी प्रकार अपने निकट जैसे हों, वैसे ( ईमहे ) प्राप्त करते हैं ॥ ३ ॥

भावार्थ—मनुष्य को योग्य है कि[4] जिस प्रकार इन अग्नि और जल के गुणों को जानकर क्रियाकुशलता में संयुक्त किये हुए ये दोनों बहुत उत्तम-उत्तम सुखों को प्राप्त कराते हैं, उस युक्ति के साथ कार्य्यों में अच्छी प्रकार इनका प्रयोग करना चाहिये ॥ ३ ॥



१. आकारादेशस्य ह्रस्वत्वं चेत्यर्थः। इदं पदकाराभिप्रायेण ज्ञेयम्। संहितापाठस्तु द्विवचनस्य लुकाऽपि सिध्यति। पूर्वत्र ६४९ पृष्ठस्था २ टिप्पणी द्रष्टव्या।

२. श्यनादयः शबादेशा इत्यस्मिन् पक्षे स्थानिनोऽभावे आदेशाभावः। द्र०—पूर्वत्र पृष्ठ ४०८, प्रकृतसूत्र-व्याख्यानम्।

३. वै०य० मुद्रितेषु संस्करणेषु 'यौ मित्रावरुणयोर्गुणान्' इत्यपपाठः, मन्त्र 'इन्द्रावरुण' पदस्य श्रवणात्।

४. यह भावार्थ संस्कृत पाठ से कुछ भिन्न होते हुए भी स्पष्टार्थक होने से युक्त है।

तदेतत्करणेन किं भवतीत्युपदिश्यते—

युवाकु हि शचीनां युवाकुं सुमतीनाम् । भूयामं वाजदाव्नाम् ॥४॥

युवाकु । हि । शचीनाम् । युवाकुं । सुऽमतीनाम् ॥ भूयामं । वाजऽदाव्नाम् ॥४॥

**पदार्थः**—(युवाकु) मिश्रीभावम् । अत्र बाहुलकादौणादिकः काकुः[1] प्रत्ययः । (हि) यतः (शचीनाम्) वाणीनां सत्कर्मणां वा । शचीति वाङ्नामसु पठितम् । निघं० १।११। कर्मनामसु च । निघं० २ । १ । (युवाकु) अपृथग्भावम्[2] । अत्रोभयत्र सुपां सुलुग्० [अ० ७ । १ । ३९] इति भवतेर्लुक्[3] । (सुमतीनाम्) शोभना मतिर्येषां तेषां विदुषाम् । (भूयाम) समर्था भवेम । शकि लिङ् च । अ० ३ । ३ । १७२ इति लिङ्, बहुलं छन्दसि [अ० २ । ४ । ७३] इति शपो लुक् च । (वाजदाव्नाम्) वाजस्य विज्ञानस्यान्नस्य दातॄणामुपदेशकानां वा ॥४॥

**अन्वयः**—वयं हि शचीनां युवाकु वाजदाव्नां सुमतीनां युवाकु भूयाम समर्था भवेम, अतस्तौ साधयेम ॥४॥

**भावार्थः**—मनुष्यैः सदाऽऽलस्यं त्यक्त्वा सत्कर्माणि सेवित्वा विद्वत्समागमो नित्यं कर्त्तव्यः, यतोऽविद्यादारिद्र्ये मूलतो नष्टे भवेताम् ॥४॥

उक्त कार्य्य के करने से क्या होता है, इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हम लोग ( हि ) जिस कारण ( शचीनाम् ) उत्तम वाणी वा श्रेष्ठ कर्मों के ( युवाकु ) मेल, तथा ( वाजदाव्नाम् ) विज्ञान वा अन्न के उपदेश करने वा देनेवाले, ( सुमतीनाम् ) श्रेष्ठ बुद्धिवाले विद्वानों के ( युवाकु ) अपृथग्भाव[4] [=मेल] करने को (भूयाम) समर्थ होवें, इस कारण से इनको साधें ॥ ४ ॥

**भावार्थ**—मनुष्यों को सदा आलस्य छोड़कर अच्छे कामों का सेवन करके विद्वानों का समागम नित्य करना चाहिए। जिससे अविद्या और दरिद्रपन जड़-मूल से नष्ट हों ॥४॥



---

१. कठिकुषिभ्यां काकुः ( उ० ३ । ७७ ) इत्यनेन विहितः ।

२. वै० य० मुद्रितेषु संस्करणेषु 'पृथग्भावम्' इत्येवार्थः' भावार्थेऽपि 'पृथग्भाव' इत्येव दृश्यते । परन्तु 'सुमतीनां विदुषां युवाकु पृथग्भावम्' इत्यर्थो नोपपद्यते, विदुषां सहभावस्यैवेष्टत्वात् । अपि च भावार्थे 'विद्वत्-समागमो नित्यं कर्तव्यः' इत्युच्यते । सोऽप्यपृथग्भाव एवोपपद्यत इति कृत्वा संशोधनमस्माभिः कृतम् ।

३. युवाकुशब्दोऽन्यत्र ( ऋ० १।३।३; १।१२०।३ इत्यादिषु ) पुंसि प्रयुज्यते । अत एवात्र 'सुपां सुलुक्' (अ० ७।१।३९) इत्युक्तं भाष्यकृता । नपुंसकत्वेऽपि स्वीकृते 'स्वमोर्नपुंसकात्' ( अ० ७ । १ । २३ ) इत्येव लुक् सिद्धः ।

४. वै० य० मुद्रित संस्करणों में यहां तथा संस्कृत-पदार्थ में पृथग्भाव का ही निर्देश है। यह अपपाठ है। विद्वानों से मेल=समागम इष्ट है न कि पृथग्भाव=दूर रहना। भावार्थ में भी विद्वानों के समागम का ही उपदेश है।

पुनः कथंभूताविन्द्रावरुणावित्युपदिश्यते—

इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम् । क्रतुर्भवत्युक्थ्यः ॥ ५ ॥

इन्द्रः । सहस्रऽदाव्नाम् । वरुणः । शंस्यानाम् ॥ क्रतुः । भवति । उक्थ्यः ॥५॥

पदार्थः—( इन्द्रः ) अग्निर्विद्युत् सूर्यो वा ( सहस्रदाव्नाम् ) यः सहस्रस्यासंख्यातस्य धनस्य दातॄणां मध्ये [1]साधकतमः । अत्र आतो मनिन्० । अ० ३ । २ । ७४ अनेन वनिप्प्रत्ययः । ( वरुणः ) जलं वायुश्चन्द्रो वा ( शंस्यानाम् ) प्रशंसितुमर्हाणां पदार्थानां मध्ये स्तोतुमर्हः ( क्रतुः ) करोति कार्य्याणि येन सः । कृञः कतुः । उ० १ । ७६ अनेन 'कृञ्' धातोः कतुः प्रत्ययः । ( भवति ) वर्त्तते ( उक्थ्यः ) यानि विद्यासिद्धयर्थं वक्तुं श्रावयितुं वार्हाणि तेषु[2] साधुः ॥ ५ ॥

अन्वयः—मनुष्यैर्य इन्द्रो हि सहस्रदाव्नां मध्ये क्रतुर्भवति, वरुणश्च शंस्यानां मध्ये क्रतुर्भवति, तस्मादयमुक्थ्योऽस्तीति बोध्यम् ॥५॥

अत्र पूर्वस्मान्मन्त्राद् हेरनुवृत्तिः ।

भावार्थः—यतो यावन्ति पृथिव्यादीन्यन्नादिदानसाधननिमित्तानि सन्ति, तेषां मध्येऽग्नि-विद्युत्सूर्य्या मुख्या वर्त्तन्ते । ये चैतेषां[3] मध्ये जलवायुचन्द्रास्तत्तद्गुणं प्रशस्या ज्ञातव्याः सन्तीति विदित्वा कर्मसु संप्रयोजिताः सन्तः क्रियासिद्धिहेतवो भवन्तीति ॥५॥

इति द्वात्रिंशो वर्गः समाप्तः ॥

फिर इन्द्र और वरुण किस प्रकार के हैं, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—सब मनुष्यों को योग्य है कि जो ( इन्द्रः ) अग्नि बिजुली वा सूर्य ( हि[4] ) जिस कारण (सहस्रदाव्नाम्) असंख्यात धन के देनेवालों के मध्य में ( क्रतुः ) उत्तमता से कार्य्यों को सिद्ध करनेवाला ( भवति ) होता है, तथा जो ( वरुणः ) जल पवन वा चन्द्रमा भी ( शंस्यानाम् ) प्रशंसनीय पदार्थों में उत्तमता से कार्य्यों का साधक है, इससे उक्त [अग्नि] वा बिजुली आदि पदार्थ (उक्थ्यः) साधुता के साथ विद्या की सिद्धि करने में उत्तम हैं, ऐसा जानना चाहिये ॥ ५ ॥

पहिले मन्त्र से इस मन्त्र में 'हि' इस पद की अनुवृत्ति है ।

भावार्थ—जितने पृथिवी आदि पदार्थ अन्न आदि दान के साधक हैं, उनमें अग्नि

१. साधकतमो दातृतम इत्यर्थः । २. वै० य० मुद्रितेषु संस्करणेषु 'ते साधुः' इति पाठः ।

३. एतेषां पृथिव्यादीनामित्यर्थः । ख.ग.कोशयोस्त्वत्र एवं पाठो दृश्यते—'………मुख्या वर्त्तन्ते । तस्मात् सर्वैरेतेषां गुणाः स्तोतव्या उपदेष्टव्याश्च । ये पृथिव्यादीनां मध्ये……' । वै० य० मुद्रितेषु संस्करणेषु भावार्थोऽप्यस्यैव पाठस्योपलभ्यते ।

४. इस पद की पूर्व मन्त्र से अनुवृत्ति है ।

द्युत् और सूर्य्य मुख्य हैं'। और जो इन पृथिवी आदि पदार्थों में जल वायु और चन्द्रमा अपने-अपने गुणों के साथ प्रशंसा करने और जानने योग्य हैं, ऐसा जानकर वे क्रिया में कुशलता से युक्त किये हुए उन क्रियाओं की सिद्धि करानेवाले होते हैं ॥५॥

यह बत्तीसवां वर्ग समाप्त हुआ ॥



पुनस्ताभ्यां मनुष्यैः किं कर्त्तव्यमित्युपदिश्यते—

तयोरिदवसा वयं सनेम नि च धीमहि । स्यादुत प्ररेचनम् ॥६॥

तयोः । इत् । अवसा । वयम् । सनेम । नि । च । धीमहि ॥ स्यात् । उत । प्रऽरेचनम् ॥६॥

पदार्थः—(तयोः) इन्द्रावरुणयोर्गुणानाम्[2] (इत्) एव (अवसा) विज्ञानेन तदुपकारकरणेन वा (वयम्) विद्वांसो मनुष्याः (सनेम) सुखानि भजेम (नि) नितरां क्रियायोगे (च) समुच्चये (धीमहि) तां धारयेमहि। अत्र बहुलम् छन्दसि [अ० २।४।७३] इति शपो लुक्। (स्यात्) भवेत् (उत) उत्प्रेक्षायाम् (प्ररेचनम्) प्रकृष्टतया रेचनं पुष्कलं व्ययार्थम् ॥६॥

अन्वयः—वयं ययोर्गुणानामवसा [इद्] एव यानि सुखानि धनानि च सनेम, तयोः प्रकाशात्तानि पुष्कलानि धनानि च निधीमहि, तैः कोशान् प्रपूरयेम, येभ्योऽस्माकं प्ररेचनमुत स्यात् ॥ ६ ॥

भावार्थः—मनुष्यैरग्न्यादिपदार्थानामुपयोगेन पूर्णानि धनानि संपाद्य रक्षित्वा वर्द्धित्वा च तेषां यथायोग्येन व्ययेन [विद्या]राज्यवृद्ध्या सर्वहितमुन्नेयम् ॥६॥

फिर उन दोनों से मनुष्यों को क्या करना चाहिये, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—हम लोग जिन इन्द्र और वरुण के (अवसा) गुण ज्ञान वा उनके उपकार से (इत्) निश्चय ही जिन सुखों और उत्तम धनों को (सनेम) सेवन करें, (च) और (तयोः) उनके निमित्त से पाये हुए उन असंख्यात धनों को (निधीमहि) स्थापित करें, अर्थात् उनसे कोश आदि उत्तम स्थानों को भरें, उन धनों से हमारा (प्ररेचनम्) अच्छी प्रकार अत्यन्त खर्च (उत) भी (स्यात्) सिद्ध हो ॥ ६ ॥

---

१. वै० य० मुद्रित संस्करणों में '···मुख्य हैं, इससे सबको चाहिये कि उनके गुणों का उपदेश करके स्तुति वा उपदेश सुनें और करें, क्योंकि जो पृथिवी···' पाठ है। यह पूर्व (टि० ३ में) निर्दिष्ट ख.ग. कोशस्थ संस्कृत पाठ के अनुसार है। आगे भाषा-पाठ में स्वल्प शोधन करके उसे वर्तमान संस्कृतपाठानुसारी स्पष्टार्थक बना दिया है।

२. 'गुणानाम्' इत्यध्याहृतं पदम्।

भावार्थ—मनुष्यों को उचित है कि अग्नि आदि पदार्थों के उपयोग से भरपूर धनों को सम्पादन कर, और उनकी रक्षा वा उन्नति करके यथायोग्य व्यय द्वारा विद्या और राज्य की वृद्धि से सब के हित की उन्नति करनी चाहिये ॥ ६ ॥



कीदृशाय धनायेत्युपदिश्यते—

इन्द्रा॑वरुण वा॒मुहं हु॑वे चि॒त्राय॒ राध॑से । अ॒स्मान्त्सु जि॒ग्युष॑स्कृतम् ॥७॥

इन्द्रा॑वरुणा । वा॒म् । अ॒हम् । हु॒वे । चि॒त्राय॑ । राध॑से ॥ अ॒स्मान् । सु । जि॒ग्युषः॑ । कृ॒तम् ॥७॥

पदार्थः—(इन्द्रावरुणा) पूर्वोक्तौ । अत्र सुपां सुलुग्० [अ० ७ । १ । ३९] इत्याकारादेशो वर्णव्यत्ययेन ह्रस्वश्च[1] । (वाम्) तौ, अत्र व्यत्ययः । (अहम्) (हुवे) आददे, अत्र व्यत्ययेनात्मनेपदं, बहुलं छन्दसि [अ० २ । ४ । ७३] इति शपो[2] लुक्, लडुत्तमस्यैकवचने रूपम् । (चित्राय) अद्भुताय, राज्यसेनाभृत्यपुत्रमित्रसुवर्णरत्नहस्त्यश्वादियुक्ताय (राधसे) राध्नुवन्ति संसेधयन्ति सुखानि येन, तस्मै धनाय । राध इति धननामसु पठितम् । निघं० २ । १० । (अस्मान्) धार्मिकान् मनुष्यान् (सु) सुष्ठु (जिग्युषः) विजययुक्तान् (कृतम्) कुरुतः । अत्र लडर्थे लोट्, मध्यमस्य द्विवचने बहुलं छन्दसि [अ० २ । ४ । ७३] इति शपो[3] लुक् च ॥७॥

अन्वयः—यौ [इन्द्रावरुणा] सम्यक् प्रयुक्तावस्मान् सुजिग्युषः कृतं कुरुतः, वां ताविन्द्रावरुणौ चित्राय राधसेऽहं हुव आददे ॥७॥

भावार्थः—ये मनुष्याः सुसाधिताविन्द्रावरुणौ[4] कार्येषु योजयन्ति, ते विविधानि धनानि विजयं च प्राप्य सुखिनः सन्तः सर्वान् प्राणिनः सुखयन्ति ॥७॥

कैसे धन के लिये उपाय करना चाहिये, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—जो (इन्द्रावरुणा) पूर्वोक्त इन्द्र और वरुण अच्छी प्रकार क्रिया

---

१. अत्र ६४६ पृष्ठस्था टिप्पणी २ द्रष्टव्या ।

२. जुहोतेः शपः श्लौ प्राप्ते छन्दसत्वाच्छपो लुगित्यर्थः ।

३. शपो लुकि तत्स्थानीयस्य उविकरणस्याप्यभाव इत्यर्थः । यद्वा—स्वादौ पठितस्य कृञः श्नो लुकि रूपम् । भाष्यकारस्त्वायं कृञो स्वादावपि पाठं मनुते । तथा चोक्तं ३ । ५८ यजुषो मन्त्रव्याख्याने—'डुकृञ् करणे इत्यस्य स्वादिगणान्तर्गतपाठात् श्नुविकरणोऽत्र गृह्यते, तनादिभिः सह पाठाद्धुविकरणोऽपि ।' प्राचीनाः क्षीरतरङ्गिणीकार-देव-पाल्यकीर्ति-हेमचन्द्र-दशपादयुणादिवृत्तिकारादयो वैयाकरणाः कृञो स्वादौ पाठं प्रतिजानते । प्रथमतः सायणेनैव कृञो स्वादिपाठो निराकृतः (द्र०—ऋग्भाष्य १।८२।१; धातुवृत्तिश्च) । भट्टोजिदीक्षितादयोऽपि सायणमेवानुययुः । विस्तरस्त्वत्र ३ । ५८ यजुर्वेदभाष्यविवरणेऽस्मत्सम्पादितायां क्षीरतरङ्गिण्यां (पृ० १९०, टि० १) च द्रष्टव्यः ।

४. वै० य० मुद्रितेषु संस्करणेषु 'सुसाधितौ मित्रावरुणौ' इत्यपपाठः, मन्त्रे 'इन्द्रावरुण' पदस्य श्रवणात् ।

ता से प्रयोग किये हुए (अस्मान्) हम लोगों को (सुजिग्युषः) उत्तम विजययुक्त म्) करते हैं, (वाम्) उन इन्द्र और वरुण को (चित्राय) आश्चर्य्यरूप, राज्य सेना र पुत्र मित्र सोना रत्न हाथी घोड़े आदि पदार्थों से भरे हुए, (राधसे) और जिससे उत्तम-उत्तम को सिद्ध करते हैं, उस धन के लिये (अहम्) मैं (हुवे) ग्रहण करता हूं ॥ ७ ॥

भावार्थ—जो मनुष्य अच्छी प्रकार सिद्ध किये हुए इन्द्र और वरुण को कामों में युक्त हैं, वे नाना प्रकार के धन आदि पदार्थों वा विजय आदि सुखों को प्राप्त होकर आप सुख-त होते, तथा औरों को भी सुखसंयुक्त करते हैं ॥७॥



पुनस्ताभ्यां किं भवतीत्युपदिश्यते—

इन्द्रावरुणा नू नु वां सिषासन्तीषु धीष्वा । अस्मभ्यं शर्म यच्छतम् ॥८॥

इन्द्रावरुणा । नु । नु । वाम् । सिषासन्तीषु । धीषु । आ ॥ अस्मभ्यम् । शर्म । यच्छतम् । ८॥

**पदार्थः**—(इन्द्रावरुणा) वायुजले सम्यक् प्रयुक्ते । पूर्ववदाकारादेशह्रस्वत्वे । (नु) म् । न्विति क्षिप्रनामसु पठितम् । निघं० २ । १५ । ऋचि तुनुघ० [अ० ६ । ३ । १३३] दीर्घः । (नु) हेत्वपदेशे । निरु० १ । ४ अनेन हेत्वर्थे नुः । (वाम्) तौ, अत्र व्यत्ययः । षासन्तीषु) सनितुं संभक्तुमिच्छन्तीषु । जनसनखनां० । अ० ६ । ४ । ४२ अनेनानुनासि-याकारादेशः । (धीषु) दधति जना याभिस्तासु प्रज्ञासु । धीरिति प्रज्ञानामसु पठितम् । नं० ३ । ९ । (आ) समन्तात् क्रियायोगे (अस्मभ्यम्) पुरुषार्थिभ्यो विद्वद्भ्यः (शर्म) णाति हिनस्ति दुःखानि यत्तत् सर्वदुःखरहितं सुखम् (यच्छतम्) विस्तारयतः, अत्र पुरुष-त्ययो, लडर्थे लोट् च ॥८॥

**अन्वयः**—²नु यतो यौ [इन्द्रावरुणा] सिषासन्तीषु धीषु नु शीघ्रमस्मभ्यं शर्म आयच्छत-तनुतः, तस्माद् वां ³ताविन्द्रावरुणौ कार्यसिद्ध्यर्थं नित्यमहं हुवे ॥८॥

अत्र पूर्वस्मान्मन्त्राद् 'हुवे' इति पदमनुवर्त्तते ।

**भावार्थः**—ये मनुष्याः शास्त्रसंस्कारपुरुषार्थयुक्ताभिर्बुद्धिभिः सर्वेषु शिल्पाद्युत्तमेषु व्यवहारेषु न्द्रावरुणौ ⁵संप्रयोजयन्ति, त एवेह सुखानि विस्तारयन्तीति ॥८॥

१. वै० य० मुद्रितेषु संस्करणेषु 'सर्वदुःखरहितं सुखम्, शृणाति हिनस्ति दुःखानि यत्तत्' इति पाठः । भाष्यकारो निर्वचनं पूर्वं ब्रूत इत्यतः स्थानविपर्यासः कृतः ।

२. वै० य० मुद्रितेषु संस्करणेषु 'नु यतो' पदे 'नु शीघ्रं' इत्यतोऽनन्तरं पठ्येते, अन्वयानुसारमिह ने इति कृत्वेहानीते ।

३. वै० य० मुद्रितेषु संस्करणेषु 'तौ मित्रावरुणौ' इत्यपपाठः । मन्त्रे इन्द्रावरुणपदश्रवणात् ।

४. वै० य० मुद्रितेषु संस्करणेषु 'मित्रावरुणौ' इति पूर्ववदपपाठः ।

५. वै० य० मुद्रितेषु संस्करणेषु 'संप्रयोज्यन्ते' इति कर्मणि प्रयोगोऽपपाठः, वाक्यस्य कर्तरि प्रयोगात् ।

फिर उन दोनों से क्या सिद्ध होता है, इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—(नु) जिस कारण ये (इन्द्रावरुणा) इन्द्र और वरुण (सिषासन्तीषु) उत्तम कर्म करने को चाहने, और (धीषु) शुभ अशुभ वृत्तान्त धारण करानेवाली बुद्धियों में (नु) शीघ्र (अस्मभ्यम्) हम पुरुषार्थी विद्वानों के लिये (शर्म) दुःखविनाश करनेवाले उत्तम सुख का (आयच्छतम्) अच्छी प्रकार विस्तार करते हैं, इस कारण (वाम्) उन इन्द्र और वरुण को कार्य्यों की सिद्धि के लिये मैं निरन्तर (हुवे[1]) ग्रहण करता हूं ॥ ८ ॥

इस मन्त्र में पूर्व मन्त्र से 'हुवे' इस पद का ग्रहण किया है।

**भावार्थ**—जो मनुष्य शास्त्र से उत्तमता को प्राप्त हुई पुरुषार्थयुक्त बुद्धियों से शिल्प आदि उत्तम व्यवहारों में उक्त इन्द्र और वरुण को अच्छी रीति से युक्त करते हैं, वे ही इस संसार में सुखों को फैलाते हैं ॥ ८ ॥



एतयोर्यथायोग्यगुणस्तवनं कर्त्तव्यमित्युपदिश्यते—

प्र वा॑मश्नोतु सुष्टु॒तिरिन्द्रा॑वरुण॒ यां हु॒वे । याम्ृ॒धाथे॑ स॒धस्तु॑तिम् ॥९॥

प्र । वाम् । अ॒श्नो॒तु॒ । सु॒ऽस्तु॒तिः । इन्द्रा॑वरुणा । याम् । हु॒वे ॥ याम् । ऋ॒धाथे॒ इति॑ । स॒धऽस्तु॑तिम् ॥९॥

**पदार्थः**—(प्र) प्रकृष्टार्थे क्रियायोगे (वाम्) यौ तौ वा, अत्र व्यत्ययः। (अश्नोतु) व्याप्नोतु (सुष्टुतिः) शोभना चासौ गुणस्तुतिश्च सा (इन्द्रावरुणा) पूर्वोक्तौ, अत्रापि सुपां सुलुग्० [अ० ७।१।३९] इत्याकारादेशो वर्णव्यत्ययेन ह्रस्वत्वं च। (याम्) स्तुतिम् (हुवे) आददे। अत्र व्यत्ययेनात्मनेपदं, बहुलं छन्दसि [अ० २।४।७३] इति शपो लुक् च। (याम्) शिल्पक्रियाम् (ऋधाथे) वर्धयतः, अत्र व्यत्ययः, बहुलं छन्दसि [अ० २।४।७३] इति विकरणाभावश्च[2] (सधस्तुतिम्) स्तुत्या सह वर्त्तते ताम्। अत्र वर्णव्यत्ययेन हकारस्य धकारः ॥ ९ ॥

**अन्वयः**—अहं यथात्रेयं सुष्टुतिः प्राश्नोतु प्रकृष्टतया व्याप्नोतु तथा हुवे, वां[3]याम् [इन्द्रा-वरुणा] इन्द्रावरुणौ यां सधस्तुतिमृधाथे वर्धयतस्तां चाहं हुवे ॥९॥

[4][अत्र वाचकलुप्तोपमालंकारः।]

**भावार्थः**—मनुष्यैर्यस्य पदार्थस्य यादृशा गुणाः सन्ति, तादृशान् सुविचारेण विदित्वा तैरुपकारः सदैव ग्राह्य इतीश्वरोपदेशः ॥९॥

---

१. इस पद की पूर्व मन्त्र से अनुवृत्ति है।

२. अयमृधधातुर्दिवादिषु स्वादिषु च पठ्यते। अतोऽत्र शपो लुकि तदादेशस्य श्यनः श्नोर्वाऽभावो ज्ञेयः।

३. वै० य० मुद्रितेषु संस्करणेषु 'यौ मित्रावरुणौ' इति पूर्ववदपपाठः।

४. अन्वये यथातथापदप्रयोगादावश्यकोऽयं पाठः। भावार्थे तूपलभ्यते।

पूर्वस्य षोडशसूक्तस्यार्थानुयोगिनो [1]रिन्द्रावरुणाथयोरत्र प्रतिपादनात् सप्तदशसूक्तार्थेन सह तदर्थस्य सङ्गतिरस्तीति बोध्यम् ॥

इदमपि सूक्तं सायणाचार्य्यादिभिर्यूरोपदेशवासिभिरध्यापकविलसनाख्यादिभिश्चान्यथैव व्याख्यातम् ॥

इति चतुर्थोऽनुवाकः सप्तदशं सूक्तं त्रयस्त्रिंशो वर्गश्च समाप्तः ॥

उक्त इन्द्र और वरुण का यथायोग्य गुणकीर्त्तन करना चाहिये, इस विषय का अगले मन्त्र में प्रकाश किया है :--

**पदार्थान्वयभाषा**—मैं जिस प्रकार से इस संसार में यह (=इन्द्र और वरुण के गुणों की) ( सुष्टुतिः ) अच्छी स्तुति ( प्राश्नोतु ) अच्छी प्रकार व्याप्त होवे, [उस प्रकार से] उसको ( हुवे ) ग्रहण करता हूं । और ( वाम्) जो ( इन्द्रावरुणौ) इन्द्र और वरुण ( याम् ) जिस ( सधस्तुतिम् ) कीर्त्ति के साथ शिल्पविद्या को ( ऋधाथे ) बढ़ाते हैं, उस शिल्पविद्या को ग्रहण करता हूं ॥ ६ ॥

इस मन्त्र में वाचकलुप्तोपमालङ्कार है ।

**भावार्थ**—मनुष्यों को जिस पदार्थ के जैसे गुण हैं, उनको वैसे ही जानकर उनसे सदैव उपकार ग्रहण करना चाहिये, इस प्रकार ईश्वर का उपदेश है ॥ ६ ॥

पूर्वोक्त सोलहवें सूक्त के अनुयोगी इन्द्र और वरुण के अर्थ का इस सूक्त में प्रतिपादन करने से इस सत्रहवें सूक्त के अर्थ के साथ सोलहवें सूक्त के अर्थ की सङ्गति जाननी चाहिये ॥

इस सूक्त का भी अर्थ **सायणाचार्य्य** आदि, तथा यूरोपदेशवासी **विलसन** आदि ने कुछ का कुछ ही वर्णन किया है ॥

यह चौथा अनुवाक, सत्रहवां सूक्त, और तेतीसवां वर्ग समाप्त हुआ ॥



अथाष्टादशस्य सूक्तस्य मेधातिथिर्ऋषिः । १--३ ब्रह्मणस्पतिः; ४ [2]ब्रह्मणस्पतीन्द्रसोमाः, ५ [3]ब्रह्मणस्पतिदक्षिणे; ६--८ सदसस्पतिः, ९ [4]सदसस्पति-

१. वै० य० मुद्रितेषु संस्करणेषु '०मित्रावरुणयोरत्र' इति पूर्ववदपपाठः ।

२. वै० य० मुद्रितेषु संस्करणेषु 'बृहस्पतीन्द्रसोमाः' इत्यपपाठः, मन्त्रे ब्रह्मणस्पतेः श्रवणात् । यद्यपि ब्रह्मणस्पति-बृहस्पतिशब्दौ क्वचित् समानार्थकौ, तथापि ऋग्वेदभाष्ये देवतानिर्देशे मन्त्रपदस्यैव निर्देशरूपा शैली भाष्यकारस्य दृश्यते । अपि च याज्ञिकप्रक्रियायां बृहस्पतिब्रह्मणस्पत्योर्द्वयोः देवतारूपेण पार्थक्यमाश्रीयते । निघण्टुनिरुक्तयोरप्यनयोः पृथग्देवतारूपेण निर्देश उपलभ्यते ।

३. वै० य० मुद्रितेषु संस्करणेषु 'बृहस्पतिदक्षिणे' इत्यपपाठः पूर्ववद विज्ञेयः । अत्र मन्त्रे सोमेन्द्रयोरपि देवतात्वेन निर्देशादिह 'ब्रह्मणस्पतिसोमेन्द्रदक्षिणाः' इति पाठो युक्ततरः स्यात् । तथा चानुक्रान्तं कात्यायनेन—सोमानमिति पञ्च ब्राह्मणस्पत्याः, चतुर्थ्यामिन्द्रश्च सोमश्च, पञ्चम्यां दक्षिणा च । द्र०—ऋक्सर्वानुक्रमणी ।

४. वै० य० मुद्रितेषु संस्करणेषु 'सदसस्पतिनाराशंसौ' इत्यपपाठः । मन्त्रे नराशंसशब्दस्यैव श्रवणात्,

नराशंसो च देवता: । १ विराड्गायत्री; २, ७, ९ गायत्री; ३, ६, ८ पिपीलिकामध्यानिचृद् गायत्री; ४ निचृद् गायत्री; ५ पादनिचृद्गायत्री च छन्दः । षड्जः स्वरः ॥

तत्रादौ यजमानेनेश्वरप्रार्थना कीदृशी कार्य्येत्युपदिश्यते—

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः ॥१॥

सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते ॥ कक्षीवन्तम् । यः । औशिजः ॥१॥

पदार्थः—( सोमानम् ) यः सवत्यैश्वर्य्यं करोतीति तं यज्ञानुष्ठातारम् ( स्वरणम् ) यः स्वरति शब्दार्थसम्बन्धाननुपविशति तम् (कृणुहि) सम्पादय । उतश्च प्रत्ययाच्छन्दो वा वचनम् । अ० ६ । ४ । १०६ इति [1][वार्त्तिकेन] विकल्पाद्धेर्लोपो न भवति । (ब्रह्मणः) वेदस्य (पते) स्वामिन्नीश्वर ! षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु । अ० ८ । ३ । ५३ इति सूत्रेण षष्ठ्या विसर्जनीयस्य सकारादेशः[2] । (कक्षीवन्तम्) याः 'कक्ष्यासु कराङ्गुलिक्रियासु' भवाः शिल्पविद्यास्ताः प्रशस्ता विद्यन्ते यस्य तम् । [3]कक्ष्या इत्यङ्गुलिनामसु पठितम् । निघं० २ । ५ अत्र 'कक्ष्याशब्दाद् भवे छन्दसि [अ० ४ । ४ । ११०] इति यत्[4], ततः प्रशंसायां मतुप् । कक्ष्यायाः संज्ञायां मतौ संप्रसारणं कर्त्तव्यम् । अ० ६ । १ । ३७ अनेन वार्त्तिकेन संप्रसारणम् । आसन्दीवद० । अ० ८ । २ । १२ इति निपातनान्मकारस्य वकारादेशः । (यः) अहम् (औशिजः) य उशिजि [विद्या]प्रकाशे जातः स उशिक्, तस्य विद्यावतः पुत्र[6] इव ॥

---

निघण्टुनिरुक्तयोश्च तस्यैव देवतात्वेन निर्देशात् । ऋग्वर्णानुक्रमण्यां तु 'ब्रह्मणस्पति नाराशंसौ वा' इति निर्देश अनुक्त्याभिप्रायेण क्रियते । सदसस्पतिर्देवता नराशंसो देवताऽस्या ऋचः सा सादसस्पती नाराशंसीत्युच्यते ।

१. अयं कोष्ठान्तर्गतः पाठो वै० य० मुद्रिते चतुर्थे संस्करणे परिवर्धितः, प्राक्तनेषु नास्ति ।

२. संहितायामिति शेषः ।

३. वै० य० मुद्रितेषु संस्करणेष्वत्र 'कक्षासु' 'कक्षा' 'कक्षाशब्दात्' अपपाठः, निघण्टौ कक्ष्या शब्दस्य श्रवणात्, निरुक्ते ( ३ । ९ ) कक्ष्याशब्दस्यैव व्याख्यानाच्च ।

४. तात्स्थ्यात् तत्साहचर्याद्वाऽत्र कक्ष्याशब्देन कराङ्गुलिसम्बद्धा क्रिया लक्ष्यते ।

५. कक्ष्याशब्दाद् भवार्थे यति 'हलो यमां यमि लोपः' (अ०८।४।६४) इत्येकस्य यकारस्य लोपो भवति ।

६. वेदेऽपत्यप्रत्ययाः पुत्रशब्दश्च लक्षणया स्वसंबन्धिनः शब्दस्य योऽर्थस्तस्यातिशयं द्योतयन्ति, न तु सन्तत्यर्थम् । यथा सम्प्रति भाषायां 'सरदार-बाप-गुरु-दादा' प्रभृतयः शब्दा लक्षणयाऽतिशयार्थं प्रयुज्यन्ते (तू चोरों का सरदार, बाप, गुरु या दादा है) । तथा चोक्तं निरुक्तकृता—'प्रमगन्दः कुसीदी, मागधदेशीयः... इति वदति, तदपत्यं प्रमगन्दः, अत्यन्तकुसीदिकुलिनः' ( निरु० ६ । ३२ ) । अत एवात्र मेधाविनामसु पठितात् उशिक्-शब्दाद् अपत्यार्थकेन प्रत्ययेनाणा निष्पन्न 'औशिज' शब्दोऽत्यन्तमेधाविनं ब्रूते । न तु कस्यचिदुशिङ्नाम्नः पुरुषस्यापत्यमौशिजनामानम् । इदमेवाभिप्रेत्यात्र भाष्यकारो भावार्थान्ते वक्ष्यति—'इमं मन्त्रं सायणाचार्यः कल्पितपुराणेतिहासभ्रान्त्याऽन्यथैव व्याख्यातवान्' इति ।

इमं मन्त्रं निरुक्तकार एवं व्याख्यातवान्—सोमानं सोतारं प्रकाशवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तमिव य औशिजः । कक्षीवान् कक्ष्यावान्, औशिज उशिजः पुत्रः, उशिग्वष्टेः कान्तिकर्मणः, अपि त्वयं मनुष्यकक्ष एवाभिप्रेत स्यात्, तं सोमानं सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते । निरु० ६ । १० ॥ १ ॥

**अन्वयः**—हे ब्रह्मणस्पते ! [1]योऽहमौशिजोऽस्मि, तं मां सोमानं स्वरणं कक्षीवन्तं कृणुहि ॥ १ ॥

**भावार्थः**—यः[2] कश्चिद् विद्याप्रकाशे प्रादुर्भूतो मनुष्योऽस्ति, स एवाध्यापकः सर्वशिल्पविद्यासम्पादको भवितुमर्हति । ईश्वरोऽपीदृशमेवानुगृह्णाति ॥१॥

इमं मन्त्रं सायणाचार्यैः कल्पितपुराणेतिहासभ्रान्त्या[3]ऽन्यथैव व्याख्यातवान् ॥१॥

अब अठारहवें सूक्त का आरम्भ है । उसके पहले मन्त्र में यजमान ईश्वर की प्रार्थना कैसी करे, इस विषय का उपदेश किया है—

**पदार्थान्वयभाषा**—हे ( ब्रह्मणस्पते ) वेद के स्वामी ईश्वर ! ( यः ) जो मैं ( औशिजः ) विद्या के प्रकाश में उत्पन्न होनेवाला जो विद्वान्, उसके पुत्र[4] के समान [अर्थात् अत्यन्त विद्यावान्] हूं, उस मुझको अपनी कृपा से ( सोमानम् ) ऐश्वर्य सिद्ध करनेवाले यज्ञ का कर्त्ता ( स्वरणम् ) शब्द-अर्थ के सम्बन्ध का उपदेशक, और ( कक्षीवन्तम् ) कक्षा अर्थात् हाथ वा अंगुलियों की क्रियाओं में होनेवाली प्रशंसनीय शिल्पविद्याओं का सम्पादन करनेवाला ( कृणुहि ) कीजिये ॥ १ ॥

**भावार्थ**—जो कोई विद्या के प्रकाश में [ उत्पन्न अर्थात् ] प्रसिद्ध मनुष्य है, वही पढ़ाने-

---

१. वै०य० मुद्रितेषु सर्वसंस्करणेषु 'योहऽमौशिजो०' इत्येवं भ्रष्टो निर्देशः ।

२. ख कोशे त्वत्र मुद्रित एव पाठ उपलभ्यते । वै०य० मुद्रितेषु संस्करणेषु 'अत्र वाचकलुप्तोपमालंकारः । यह कश्चिद्' इत्येवं पाठ उपलभ्यते । स चापपाठः, अन्वये भावार्थे च उपमानिदर्शकयोर्यथातथापदयोरनिर्देशात् । उत्तरवाक्ये च 'सः' पदस्य श्रवणात् पूर्ववाक्ये 'यः' पदनिर्देशस्यौचित्याच्च ।

३. द्रष्टव्या एतन्मन्त्रस्था ६७८ पृष्ठस्था टिप्पणी ६ ।

४. वेद में अपत्य अर्थवाले प्रत्यय अथवा पुत्र शब्द लक्षणा से स्वसम्बन्धी शब्द के अर्थ के अतिशय अर्थ को प्रकट करते हैं, सन्तानरूप अर्थ के वाचक नहीं होते । जैसे भाषा में 'तू चोरों का सरदार या बाप या गुरु या दादा' का प्रयोग चोर के चौर्यकर्म के आत्यन्तिक अर्थ को प्रकट कराते हैं, वैसे ही वेद में अपत्यप्रत्यय वा पुत्र शब्द को जानना चाहिये । इस विषय में निरुक्तकार यास्क का वचन संस्कृत टिप्पणी में देखें । इसी अर्थ को स्पष्ट करने के लिए हमने कोष्ठक में 'अर्थात् अत्यन्त विद्यावान्' पद बढ़ाये हैं । वेद के इस नियम को न जानकर ही सायणाचार्य प्रभृति ने 'औशिजः' का अर्थ 'उशिक् नामवाले व्यक्तिविशेष का पुत्र' किया है । और इसी कारण भाष्यकार ने भावार्थ के अन्त में सायणाचार्य के अर्थ को दूषित बताया है ।

वाला और सम्पूर्ण शिल्पविद्या के प्रसिद्ध करने योग्य है। क्योंकि ईश्वर भी ऐसे ही मनुष्य पर अपना अनुग्रह करता है ॥१॥

इस मन्त्र का अर्थ सायणाचार्य्य ने कल्पित पुराण इतिहास ग्रन्थ की भ्रान्ति[1] से कुछ का कुछ ही वर्णन किया है ॥ १ ॥



पुनः स कीदृश इत्युपदिश्यते ॥

यो रे॒वान् यो अ॑मीव॒हा व॑सु॒वित्पु॑ष्टि॒वर्ध॑नः । स नः॑ सिषक्तु॒ यस्तु॒रः ॥२॥

यः । रे॒वान् । यः । अ॒मी॒व॒ऽहा । व॒सु॒ऽवित् । पु॒ष्टि॒ऽवर्ध॑नः ॥ सः । नः॒ । सि॒ष॒क्तु॒ । यः । तु॒रः ॥२॥

पदार्थः—( यः ) जगदीश्वरः ( रेवान् ) विद्याद्यनन्तधनवान्. अत्र भूम्न्यर्थे मतुप्। रयेर्मतौ बहुलं सम्प्रसारणम्। अ० ६ । १ । ३६ इति वार्त्तिकेन सम्प्रसारणम् । छन्दसीरः। अ० ८ । २ । १५ इति मकारस्य वकारः (यः) सर्वरोगरहितः (अमीवहा) अविद्यादिरोगाणां हन्ता (वसुवित्) यो वसूनि सर्वाणि वस्तूनि वेत्ति (पुष्टिवर्धनः) य शरीरात्मनोः पुष्टि वर्धयतीति (सः) ईश्वरः (नः) अस्मान् (सिषक्तु) [2]अतिशयेन [3]सचतु। अत्र 'सच'धातोः बहुलं छन्दसि [अ० २ । ४ । ७५] इति शपः श्लुः। (यः) शीघ्रं सुखकारी (तुरः) तुरतीति। तुर त्वरणे इत्यस्माद्[4] इगुपधत्वात् कः[5] ॥२॥

अन्वयः—यो रेवान् यः पुष्टिवर्धनो यो वसुविदमीवहा यस्तुरो ब्रह्माण्डस्पतिर्जगदीश्वरोऽस्ति, स नोऽस्मान् विद्याविधनैः सह सिषक्तु अतिशयेन संयोजयतु ॥२॥

भावार्थः—ये मनुष्याः सत्यभाषणादिलक्षणामीश्वराज्ञामनुतिष्ठन्ति, तेऽविद्यादिरोगरहिताः शरीरात्मपुष्टिमन्तः सन्तश्चक्रवर्त्तिराज्यादिधनानि सर्वरोगहराण्यौषधानि च प्राप्नुवन्तीति ॥२॥

फिर वह ईश्वर कैसा है, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—( यः ) जो ( रेवान् ) विद्या आदि अनन्त धनवाला, ( यः ) जो ( पुष्टिवर्धनः ) शरीर और आत्मा की पुष्टि बढ़ाने, तथा [जो] ( वसुवित् ) सब पदार्थों का जानने, [और] ( अमीवहा ) अविद्या आदि रोगों का नाश करने, तथा ( यः ) जो ( तुरः )

१. द्रष्टव्य इसी मन्त्र की पृष्ठ ६७९ की टि० ४।

२. अभ्यासे भूयांसमर्थं मन्यन्ते (निरु० १०।४२) इति नियमेन धातोर्द्वित्वमभ्यासकार्यमित्यतिशायरूपोऽर्थो भाष्यकृता व्याख्यातः।

३. वै० य० मुद्रितेषु संस्करणेषु 'सचयतु' इत्यपपाठः। षच सेवायां भौवादिक उभयपदी धातुः।

४. वै० य० मुद्रितेषु संस्करणेषु 'इत्यस्मादृगुपधत्वात् कः' इत्यपपाठः।

५. इगुपधज्ञाप्रीकिरः कः ( अ० ३।१।१३५) इत्यनेन।

शीघ्र सुख करनेवाला, वेद का स्वामी जगदीश्वर है, ( सः ) वह ( नः ) हम लोगों को विद्या आदि धनों के साथ ( सिषक्तु ) अच्छी प्रकार संयुक्त करे ॥ २ ॥

भावार्थ —जो मनुष्य सत्यभाषण आदि नियमों से संयुक्त ईश्वर की आज्ञा का अनुष्ठान करते हैं, वे अविद्या आदि रोगों से रहित और शरीर वा आत्मा की पुष्टिवाले होकर चक्रवर्ति राज्य आदि धन तथा सब रोगों को हरनेवाली ओषधियों को प्राप्त होते हैं ॥ २ ॥



**अथेश्वरप्रार्थनोपदिश्यते—**

**मा नः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥३॥**

मा । नः । शंसः । अररुषः । धूर्तिः । [1]प्रणक् । मर्त्यस्य ॥ रक्ष । नः । [2]ब्रह्मणः । पते ॥३॥

**पदार्थः**—(मा) निषेधार्थे (नः) अस्माकम् (शंसः) शंसन्ति यत्र सः (अररुषः) अदातुः । रा दाने इत्यस्मात् क्वसुः, ततः षष्ठ्येकवचनम् । (धूर्तिः) हिंसकः [3](प्र) (णक्) नश्यतु । अत्र लोडर्थे लुङ् । मन्त्रे घसह्वरणश० । अ० २ । ४ । ८० अनेन सूत्रेण च्लेर्लुक् । (मर्त्यस्य)

१. अयं पदपाठानुसारं निर्देशः । भाष्यकारस्त्वन्यथा व्याख्याति । तद्विषये पदार्थव्याख्याने टिप्पणी द्रष्टव्या । २. वै० य० मुद्रितेषु संस्करणेषु 'ब्रह्मणस्पते' इत्यपपाठः । पूर्वत्र (मं० १) शुद्ध एव पाठो दृश्यते ।

३. वै० य० मुद्रितेषु संस्करणेषु 'प्रणक्' इति सहैव मुद्र्यते । भाष्यकारेणात्र 'णक्' शब्दस्यैव 'नश्यतु' इत्यर्थो निर्दिष्टः, 'प्र' शब्दस्य स्पष्टत्वादर्थो नोल्लिखितः । ऐकपद्यं यद्यत्र भाष्यकर्तुरभिप्रेतमभविष्यत्, तर्हि स 'प्रणश्यतु' इत्येवं निरदेक्ष्यत् । तस्मादत्र भाष्यकारस्य द्वैपद्यमिष्टमिति स्पष्टमेव ।

पदकारस्तु 'प्रणक्' इत्यस्यैकपद्यं मनुते । तथा सति 'प्रणक्' पदं पृची संपर्के इत्यस्य लङि तिपि रूपम् । 'तिप इकारस्य लोपे ( ३।१।८५ ) तकारस्य हल्ङ्यादिलोपे कुत्वे श्नमश्छान्दसोऽडागमः, यणादेशः, आगमानुदात्तत्वं बाधयित्वा छान्दसत्वादुदात्तत्वम्, चादिलोपे विभाषा (८।१।६३) इति निघाताभावः' इति सायणः ।

अस्यां प्रक्रियायां द्वौ दोषौ स्तः । तत्र प्रथमः—व्यत्ययरूपछान्दसकार्यद्वयाश्रयणम्, तत्रापि छान्दसत्वादागमानुदात्तत्वं बाधित्वा तस्योदात्तत्वविधानं मुख्यम् ।

द्वितीयः—चादिलोपे विभाषा ( ८ । १ । ६६ ) सूत्रेण प्रथमतिङ्विभक्तेर्निघाताभावप्रवर्तनम् । अनेन सूत्रेण प्रथमायास्तिङ्विभक्तेर्निघाताभावस्तत्रैव भवति यत्र उभयत्र समाना विभक्तिर्भवति । यथा—'व्रीहिभिर्यजेत, यवैर्यजेत', 'शुक्ला व्रीहयो भवन्ति, श्वेता गा आज्याय दुहन्ति' (द्र०—अष्टाध्याय्याः सर्वाः वृत्तयः) । अत्र तु 'प्रणक्' इति लङि तिपि श्रूयते, 'रक्ष' च लोटि सिपि ।

यथा ( प्र नक्—द्वे पदे) स्वत्रायं भाष्यकारो व्याख्यातवान्, तथा न कश्चिद् दोषः । न चात्र काचिच्छान्दसकल्पनाश्रयणीया भवति । 'प्र' इति पदमुपसर्गरूपमाद्युदात्तम्, 'नक्' तिङन्तं च पदात् परमिति कृत्वाऽनुदात्तम् ।

अस्मिन् व्याख्याने पदपाठविरोधरूपो दोषः शक्यते वक्तुम्, परन्तु तदप्यविचारितरमणीयम् । संहितापाठ एवापौरुषेयः, पदपाठस्तु पौरुषेय इति सर्ववैदिकानां राद्धान्तः । तेन भाष्यकाराः पदपाठमुज्झित्वा स्वतन्त्र-

मनुष्यस्य (रक्ष) पालय । द्व्यचोऽतस्तिङः [अ० ६ । ३ । १३४] इति दीर्घः । (नः) अस्मानस्माकं वा (ब्रह्मणः) वेदस्य ब्रह्माण्डस्य वा (पते) स्वामिन् । षष्ठ्याः पति० [अ० ८ । ३ । ५३] इति[1] विसर्जनीयस्य सत्वम् ॥३॥

**अन्वयः**—हे ब्रह्मणस्पते जगदीश्वर ! त्वमररुषो मर्त्यस्य सकाशान्नोऽस्मान् रक्ष । यतः[2] नोऽस्माकं मध्ये कश्चिद् धूर्तिर्मनुष्यो न भवेत् । भवत्कृपयाऽस्माकं शंसो मा प्रणक् कदाचिन्मा नश्यतु ॥ ३ ॥

**भावार्थः**—नैव केनचिन्मनुष्येण धूर्तस्य मनुष्यस्य कदाचित् सङ्गः कर्त्तव्यः । न चैवान्यायेन कस्यचिद्धिंसनं कर्त्तव्यम्, किन्तु सर्वैः सर्वस्य न्यायेनैव रक्षा विधेयेति ॥३॥

अगले मन्त्र में ईश्वर की प्रार्थना का प्रकाश किया है—

**पदार्थान्वयभाषा**—हे (ब्रह्मणस्पते) वेद वा ब्रह्माण्ड के स्वामी जगदीश्वर ! आप (अररुषः) जो दान आदि धर्मरहित मनुष्य है, उस (मर्त्यस्य) मनुष्य के सम्बन्ध से (नः) हमारी (रक्ष) रक्षा कीजिये । जिससे कि (नः) हम लोगों के बीच में कोई मनुष्य (धूर्तिः) विनाश करनेवाला न हो । और आपकी कृपा से जो हमारा (शंसः) प्रशंसनीय यज्ञ अर्थात् व्यवहार है, वह (मा प्रणक्) कभी नष्ट न होवे ॥ ३ ॥

**भावार्थ**—किसी मनुष्य को कभी भी धूर्त अर्थात् छल-कपट करनेवाले मनुष्य का सङ्ग न

---

पदच्छेदे स्वतन्त्राः । अपि च यत्र पदकारविहिते पदपाठे कश्चित् स्वरादिदोष आपतति, तत्र पदपाठस्या-प्रामाण्यमपि वैदिकाः स्वीकुर्वते । तथा हि—'वनेन वायो न्यधायि चाकन्' (ऋ० १०।२९।१) इत्यस्य पदपाठे शाकल्यः 'वने, न, वा, यः, नि, अधायि, चाकन्' इत्येवं पदविभागं निदर्शितवान् । यास्क इमं मन्त्रं व्याख्यन्नाह—"वन इव वायो वेः पुत्रः, चायन्निति वा कामयमान इति वा । 'वा' इति 'यः' इति च शाकल्यः । उदात्तं त्वेवमाख्यातमभविष्यत्, असुसमाप्तश्चार्थः" (निरु० ६।२८) । अस्यायं भावः—यथा शाकल्येन 'वायः' पदं 'वा', 'यः' इत्येवं विभक्तं, तथा सति 'यद्वृत्तान्नित्यम्' (अ० ८ । ४ । ६६) इति नियमेन 'अधायि' पदेनोदात्तेन भाव्यम्, मन्त्रे च तन्निघातरूपेण पठ्यते । 'यः' पदश्रवणात् 'सः' पदमध्याहृत्य मन्त्रार्थः पूरणीयो भवति, यत्तदो-र्नित्यसम्बन्धात् । एवं च कृत्वा शाकल्यकृतोऽत्र पदपाठः प्रमाणार्हो नास्तीति यास्काभिप्रायः ।

प्रकृतमन्त्रेऽपि यदि 'प्रणक्' इत्येवं पदच्छेदे शाकल्यस्य तिङो रूपमभिप्रेतं, तर्हि मागि पदात् परं इति कृत्वा नोदात्तत्वं सम्भवति । चादिलोपे विभाषा नियमस्त्वत्र न सम्भवतीति पूर्वमेवोक्तम् ।

अपि च 'मन्त्रे घसह्वरणश०' (२ । ४ । ८०) सूत्रस्य समस्तैरपि व्याख्यातृभिः 'नश' धातोरिदं 'प्र णङ् मर्त्यस्य' उदाहरणमेवोदाह्रियते । तेन समस्तवैयाकरणानां मते नशधातोरेवायं प्रयोगः, न 'पृची सम्पर्के' इत्यस्येत्यपि स्पष्टम् ।

एवमत्र बहुभिर्हेतुप्रमाणैरस्य भाष्यकारस्य व्याख्यानमेव शास्त्रसम्मतमिति सुधियो विभावयन्तु ।

१. वै० य० मुद्रितयोस्तृतीयचतुर्थसंस्करणयोः 'इति' पदं प्रमादात् त्यक्तम्, पूर्वसंस्करणयोरुपलभ्यते ।

२. वै० य० मुद्रितेषु संस्करणेषु 'यतः स' इत्यत्र 'स' पदं व्यर्थम् ।

करना चाहिये। तथा अन्याय से किसी की हिंसा न करनी चाहिये। किन्तु सब को सब की न्याय ही से रक्षा करनी चाहिये ॥ ३ ॥



अथेन्द्रादिकृत्यान्युपदिश्यन्ते—

स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः। सोमो हिनोति मर्त्यम् ॥४॥

सः। घ। वीरः। न। रिष्यति। यम्। इन्द्रः। ब्रह्मणः। पतिः॥ सोमः। हिनोति। मर्त्यम् ॥४॥

पदार्थः—(सः) [1]इन्द्रो ब्रह्मणस्पतिः सोमश्च (घ) एव। ऋचि तुनुघ० [अ०६।३।१३२] इति दीर्घः। (वीरः) अजति व्याप्नोति शत्रुबलानि यः (न) निषेधार्थे (रिष्यति) नश्यति (यम्) प्राणिनम् (इन्द्रः) वायुः[2] (ब्रह्मणः) ब्रह्माण्डस्य (पतिः) पालयिता परमेश्वरः[3] (सोमः) सोमलतादिसमूहरसः (हिनोति) वर्धयति (मर्त्यम्) मनुष्यम् ॥४॥

अन्वयः—इन्द्रो ब्रह्मणस्पतिः सोमश्च यं मर्त्यं हिनोति, स वीरो न घ रिष्यति नैव विनश्यति ॥४॥

भावार्थः—ये वायुविद्युत्सूर्यसोमौषधगुणान् संगृह्य कार्य्याणि साधयन्ति, न ते खलु नष्टसुखा भवन्तीति ॥४॥

अगले मन्त्र में इन्द्रादिकों के कार्य्यों का उपदेश किया है—

पदार्थान्वयभाषा—(इन्द्रः) वायु[4], (ब्रह्मणस्पतिः) ब्रह्माण्ड का पालन करनेवाला जगदीश्वर[5], और (सोमः) सोमलता आदि ओषधिसमूह का रस (यम्) जिस (मर्त्यम्) मनुष्य आदि प्राणी को (हिनोति) उन्नतियुक्त करते हैं, (सः) वह (वीरः) शत्रुओं को जीतनेवाला वीर पुरुष (न घ रिष्यति) निश्चय ही विनाश को कभी प्राप्त नहीं होता ॥ ४ ॥

भावार्थ—जो मनुष्य वायु विद्युत् सूर्य्य और सोम आदि ओषधियों के गुणों को जान वा ग्रहण करके अपने कार्य्यों को सिद्ध करते हैं, वे कभी दुःखी नहीं होते ॥ ४ ॥



१. सर्वनामपदानि प्रायेण पूर्वपदपरामर्शकाणि भवन्ति। तथा क्वचिदुत्तरपदान्यपि परामृशन्ति। यथा—'स गच्छतु यो देवदत्तनामा'। एवमत्रापि 'सः' पदेन उत्तरत्र श्रूयमाणानि इन्द्रादीनि पदानि परामृश्यन्ते।

२. भावार्थे 'इन्द्रः' पदेन वायुविद्युतौ गृह्येते। अत्रापि तयोर्ग्रहणं शक्यते कर्तुम्।

३. भावार्थे ब्रह्मणस्पतिशब्देन ब्रह्माण्डस्य पालयिता सूर्यो गृह्यते, सोऽत्रापि ग्रहीतुं शक्यते।

४. भावार्थ में इन्द्र शब्द का अर्थ विद्युत् भी लिया है। उसका यहां पदार्थ में भी ग्रहण हो सकता है।

५. भावार्थ में ब्रह्मणस्पति शब्द से ब्रह्माण्ड के पालन करनेवाले सूर्य का ग्रहण किया है। उसका यहाँ पदार्थ में भी ग्रहण हो सकता है।

कथं ते रक्षका भवन्तीत्युपदिश्यते—

त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यम् । दक्षिणा पात्वंहसः ॥५॥

त्वम् । तम् । ब्रह्मणः । पते । सोमः । इन्द्रः । च । मर्त्यम् ॥ दक्षिणा । पातु । अंहसः ॥५॥

**पदार्थः**—(त्वम्) जगदीश्वरः (तम्) यज्ञानुष्ठातारम् (ब्रह्मणः) ब्रह्माण्डस्य (पते) पालकेश्वर ! (सोमः) सोमलताद्योषधिसमूहः (इन्द्रः) वायुः (च) समुच्चये (मर्त्यम्) विद्वांसं मनुष्यम् (दक्षिणा) दक्षन्ते वर्धन्ते यया सा। अत्र द्रुदक्षिभ्यामिनन्। उ० २। ५० इतीनन् प्रत्ययः (पातु) पाति। अत्र लडर्थे लोट्। (अंहसः) पापात्। अत्र अम रोगे इत्यस्मात् अमेर्हुक् च। उ० ४। २१३ अनेनासुन् प्रत्ययो हुगागमश्च ॥५॥

**अन्वयः**—हे ब्रह्मणस्पते ! त्वमंहसो यं पासि, तं मर्त्यं सोम इन्द्रो दक्षिणा च पातु पाति ॥ ५ ॥

**भावार्थः**—ये मनुष्या अधर्माद् दूरे स्थित्वा स्वेषां सुखवृद्धिमिच्छन्ति, ते परमेश्वरमुपास्य सोममिन्द्रं दक्षिणां च युक्त्या सेवयन्तु ॥५॥

इति चतुस्त्रिंशो वर्गः सम्पूर्णः ॥

कैसे वे रक्षा करनेवाले होते हैं, इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—हे (ब्रह्मणस्पते) ब्रह्माण्ड के पालन करनेवाले जगदीश्वर ! (त्वम्) आप (अंहसः) पापों से जिसकी रक्षा करते हैं, (तम्) उस धर्मात्मा यज्ञ करनेवाले (मर्त्यम्) विद्वान् मनुष्य की (सोमः) सोमलता आदि ओषधियों के रस, (इन्द्रः) वायु, और (दक्षिणा) जिससे वृद्धि को प्राप्त होते हैं वह, ये सब पदार्थ (पातु) रक्षा करते हैं ॥ ५ ॥

यह चौंतीसवां वर्ग पूरा हुआ ॥



अथ[1] परमेश्वरगुणा उपदिश्यन्ते—

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥६॥

सदसः । पतिम् । अद्भुतम् । प्रियम् । इन्द्रस्य । काम्यम् ॥ सनिम् । मेधाम् । अयासिषम् ॥६॥

**पदार्थः**—(सदसः) सीदन्ति विद्वांसो धार्मिका न्यायाधीशा यस्मिंस्तत् सदः सभा, तस्य। अत्राधिकरणेऽसुन्[2]। (पतिम्) स्वामिनम्[3] (अद्भुतम्) आश्चर्य्यगुणस्वभावस्वरूपम्। अदि

१. वै० य० मुद्रितेषु संस्करणेषु 'अथेन्द्रशब्देन परमेश्वरगुणा' इत्यपपाठः। पदार्थे 'इन्द्रस्य' पदस्य 'जीवस्य' इत्यर्थनिर्देशात्। २. सर्वधातुभ्योऽसुन् (उ० ४। १८९) इत्यनेन।

३. अन्वयभावार्थयोः सदसस्पतिशब्दस्य परमेश्वरसभापती उभावर्थौ गृहीतौ। अत्र तु सामान्येन निर्देशः कृतः।

ो डुतच्। उ० ५। १ अनेन 'भू'धातोरद्युपपदे डुतच् प्रत्ययः। (प्रियम्) प्रीणाति सर्वान् ािनस्तम् (इन्द्रस्य) जीवस्य (काम्यम्) कमनीयम् (सनिम्) पापपुण्यानां विभागेन फल-ातारम्। खनिकष्यज्यसि०। उ० ४। १४० अनेन 'सन'धातोरिः प्रत्ययः। (मेधाम्) धारणा-ीं बुद्धिम् (अयासिषम्) प्राप्नुयाम् [अत्र लिङर्थे लुङ्] ॥६॥

अन्वयः—अहमिन्द्रस्य काम्यं सनिं प्रियमद्भुतं सदसस्पतिं परमेश्वरमुपास्य सभाध्यक्षं ाप्य मेधामयासिषं बुद्धिं प्राप्नुयाम् ॥६॥

भावार्थः—ये मनुष्याः सर्वशक्तिमन्तं सर्वाधिष्ठातारं सर्वानन्दप्रदं परमेश्वरमुपासते, ये च ोत्कृष्टगुणस्वभावपरोपकारिणं सभापतिं प्राप्नुवन्ति, त एव सर्वशास्त्रबोधक्रियायुक्तां धियं ाप्य पुरुषार्थिनो विद्वांसश्च भूत्वा सुखिनो भवन्तीति ॥६॥

अगले मन्त्र में [1]परमेश्वर के गुणों का उपदेश किया है—

पदार्थान्वयभाषा—मैं (इन्द्रस्य) प्राणियों के (काम्यम्) कमनीय, (सनिम्) पापपुण्यरूप कर्मों ा यथायोग्य फल देने, और (प्रियम्) सब प्राणियों को प्रसन्न करनेवाले, (अद्भुतम्) आश्चर्य-ुण और स्वभाव-स्वरूप, (सदसस्पतिम्) जिसमें विद्वान् धार्मिक न्याय करनेवाले स्थित हों ास सभा के स्वामी परमेश्वर की उपासना, और सब उत्तम गुण स्वभाववाले परोपकारी सभा-ति को प्राप्त होके (मेधाम्) उत्तम ज्ञान को धारण करनेवाली बुद्धि को (अयासिषम्) ाप्त होऊं ॥ ६ ॥

भावार्थ—जो मनुष्य सर्वशक्तिमान् सब के अधिष्ठाता और सब आनन्द के देनेवाले ारमेश्वर की उपासना करते, और जो उत्कृष्टगुण-स्वभावयुक्त परोपकारी न्यायाधीश को प्राप्त ोते हैं, वे ही सब शास्त्रों के बोध से प्रसिद्ध क्रियाओं से युक्त बुद्धियों को प्राप्त कर पुरुषार्थी ौर विद्वान् होकर सुखी होते हैं ॥ ६ ॥



स एव सर्वं जगद् रचयतीत्युपदिश्यते—

यस्मा॑दृ॒ते न सिध्य॑ति य॒ज्ञो वि॑प॒श्चित॑श्च॒न। स धी॒नां योग॑मिन्वति ॥७॥

यस्मा॑त्। ऋ॒ते। न। सिध्य॑ति। य॒ज्ञः। वि॒प॒ःऽचित॑ः। च॒न॥ सः। धी॒नाम्। योग॑म्। इ॒न्व॒ति॒ ॥७॥

पदार्थः—(यस्मात्) परमेश्वरात् (ऋते) विना (न) निषेधे (सिध्यति) निष्पद्यते (यज्ञः) संगतः संसारः (विपश्चितः) अनन्तविद्यात् (चन) कदाचित् (सः) जगदीश्वरः (धीनाम्) प्रज्ञानां कर्मणां वा (योगम्) संयोजनम् (इन्वति) व्याप्नोति जानाति वा। इन्वतीति व्याप्तिकर्मसु पठितम्। निघं० २। १८। गतिकर्मसु च। निघं० २। १४॥ ७॥

---

१. वै० य० मुद्रित संस्करणों में 'मन्त्र में इन्द्र शब्द से परमेश्वर के गुणों का' पाठ है, यह ठीक नहीं है। क्योंकि संस्कृत-पदार्थ में 'इन्द्रस्य' का अर्थ 'जीवस्य' किया है, 'परमेश्वरस्य' नहीं किया।

अन्वयः—हे मनुष्याः! यस्माद् विपश्चितः सर्वशक्तिमतो जगदीश्वराद् ऋते यज्ञश्चन न सिध्यति, स सर्वप्राणिमनुष्याणां धीनां योगमिन्वति ॥७॥

भावार्थः—व्यापकस्येश्वरस्य व्याप्यस्य सर्वस्य जगतश्च द्वयोर्नित्यसम्बन्धोऽस्ति। स एव सर्वं जगद् रचयित्वा धृत्वा सर्वेषां बुद्धीनां चेष्टाया विज्ञाता सन् सर्वेभ्यः प्राणिभ्यस्तत्तत्कर्मानुसारेण सुखदुःखात्मकं फलं प्रददाति। नैव [1]कदाचिदनीश्वरं स्वभावसिद्धमनधिष्ठातृकं जगद् भवितुमर्हति, जडानां विज्ञानाभावेन यथायोग्यनियमेनोत्पत्तुमनर्हत्वात् ॥७॥

वही सब जगत् को रचता है, इसका उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—हे मनुष्यो! (यस्मात्) जिस (विपश्चितः) अनन्त-विद्यावाले सर्वशक्तिमान् जगदीश्वर के (ऋते) विना (यज्ञः) जो कि दृष्टिगोचर संसार है, सो (चन) कभी (न सिध्यति) सिद्ध नहीं हो सकता, (सः) वह जगदीश्वर सब प्राणी और मनुष्यों की (धीनाम्) बुद्धि और कर्मों के (योगम्) संयोग को (इन्वति) व्याप्त होता वा जानता है ॥ ७ ॥

भावार्थ—व्यापक सब में रहनेवाले ईश्वर और व्याप्य जगत् का नित्य सम्बन्ध है। वही सब संसार को रचकर तथा धारण करके सब की बुद्धि और कर्मों को अच्छी प्रकार जानकर सब प्राणियों के लिये उनके शुभ अशुभ कर्मों के अनुसार सुख-दुःखरूप फल को देता है। ईश्वर को छोड़के अपने आप स्वभावमात्र से सिद्ध होनेवाला अर्थात् जिसका कोई स्वामी ( रचनेवाला ) न हो, ऐसा संसार कभी नहीं हो सकता। क्योंकि जड़ पदार्थों के अचेतन होने से [उन में] यथायोग्य नियमों के साथ उत्पन्न होने की योग्यता कभी नहीं होती ॥ ७ ॥

पुनः कीदृशः स यज्ञ इत्युपदिश्यते

आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम्। होत्रा देवेषु गच्छति ॥८॥

आत्। ऋध्नोति। हविःऽकृतिम्। प्राञ्चम्। कृणोति। अध्वरम्॥ होत्रा। देवेषु। गच्छति ॥८॥

पदार्थः—(आत्) समन्तात् (ऋध्नोति) वर्धयति (हविष्कृतिम्) हविषां कृतिः करणं यस्य तम्। अत्र सह सुपा [अ० २।१।४] इति समासः[2]। (प्राञ्चम्) यः प्रकृष्टमञ्चति प्राप्नोति तम् (कृणोति) करोति (अध्वरम्) क्रियाजन्यं जगत् (होत्रा) जुह्वति येषु यानि तानि। अत्र शेश्छन्दसि बहुलम् [अ० ६।१।६८] इति लोपः। हुयामाश्रु०। उ० ४।१६८ अनेन 'हु' धातोस्त्रन् प्रत्ययः। (देवेषु) दिव्यगुणेषु (गच्छति) प्राप्नोति ॥८॥

अन्वयः—सर्वज्ञः सदसस्पतिर्देवो यं प्राञ्चं हविष्कृतिमध्वरं [3]होत्रा हवनानि कृणोत्यादृध्नोति, स पुनर्देवेषु दिव्यगुणेषु गच्छति ॥८॥

---

१. वै० य० मुद्रितेषु संस्करणेषु 'कश्चिद्' इत्यपपाठः। २. योगविभागेनेति शेषः।

३. वै० य० मुद्रितेषु संस्करणेषु 'होत्राणि' अपपाठः, मन्त्रे 'होत्रा' पददर्शनात्।

भावार्थः—यतः परमेश्वरः सकलं जगद् रचयति, तस्मात् सर्वे पदार्थाः परस्परं योजनेन ते । एते क्रियामये शिल्पविद्यायां च सम्यक् प्रयोजिता महान्ति सुखानि जनयन्तीति ॥८॥

फिर वह यज्ञ कैसा है, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—जो उक्त सर्वज्ञ सभापति देव परमेश्वर ( प्राञ्चम् ) सब में व्याप्त और को प्राणी अच्छी प्रकार व्याप्त होते हैं, ( हविष्कृतिम् ) होम करने योग्य पदार्थों का जिसमें ार होता है, ऐसे जिस ( अध्वरम् ) क्रियाजन्य अर्थात् क्रिया से उत्पन्न होनेवाले जगत्रूप में [1]( होत्रा ) होम से सिद्ध होनेवाली क्रियाओं को ( ऋणोति ) उत्पन्न करता, तथा ृध्नोति) अच्छी प्रकार बढ़ाता है, फिर वही यज्ञ (देवेषु) दिव्य गुणों में[2] (गच्छति) प्राप्त ा है ॥ ८ ॥

भावार्थ—जिस कारण परमेश्वर सकल संसार को रचता है, इससे सब पदार्थ परस्पर ा-अपने संयोग से बढ़ते हैं, और ये पदार्थ क्रियामययज्ञ और शिल्पविद्या में अच्छी प्रकार संयुक्त हुए बड़े-बड़े सुखों को उत्पन्न करते हैं ॥ ८ ॥



पुनः स कीदृश इत्युपदिश्यते—

नराशंसं सुधृष्टममपश्यं सप्रथस्तमम् । दिवो न सद्ममखसम् ॥९॥

नराशंसम् । सुऽधृष्टमम् । अपश्यम् । सप्रथःऽतमम् ॥ दिवः । न । सद्मऽमखसम् ॥९॥

पदार्थः—(नराशंसम्) नरैरवश्यं स्तोतव्यः, तम् । नराशंसो यज्ञ इति कात्थक्यः, नरा ान्नासीनाः शंसन्ति, अग्निरिति शाकपूणिः, नरैः प्रशस्यो भवति । निरु० ८ । ६ । (सुधृष्टमम्) ; सकलं जगद्धारयति[3] सोऽतिशयितः, तम् (अपश्यम्) पश्यामि । अत्र लडर्थे लङ् । प्रथस्तमम्) यः प्रथोभिर्विस्तृतैराकाशादिभिस्सहाभिव्याप्तो वर्त्तते, सोऽतिशयितः, तम् (दिवः) ािविप्रकाशान् (न) इव (सद्ममखसम्) सीदन्ति यस्मिन् तत्सद्म=जगत्, तन्मखः प्राप्तं मस्मिति ॥९॥

अन्वयः—अहं [दिवः] सूर्यादिप्रकाशान् [न] [4]इव सद्ममखसं सप्रथस्तमं सुधृष्टमं नराशंसं सस्पतिं परमेश्वरमपश्यं पश्यामि, तथैव यूयमपि कुरुत ॥९॥

---

१. वै० य० मुद्रित संस्करणों में 'होत्राणि' अपपाठ है ।

२. अर्थात् दिव्य गुणों को प्राप्त कराता है ।

३. सुष्ठु धारयतीति सुधृत्, तत आतिशायनिके तमपि तकारस्य छान्दसं सत्वं पत्वं च । सायणो धृष्णोतेः पि तमपि छान्दसत्वाज्जश्त्वाभावमाह । छान्दसकार्यत्वमुभयत्राश्रयणीयं भवति ।

४. वै० य० मुद्रितेषु संस्करणेषु 'इव' पदं 'सद्ममखसम्' पदात्परमस्ति, तदस्माभिर्योग्ये स्थाने नीतम् ।

अत्रोपमालङ्कारः । [1]अत्र सप्तममन्त्रात् 'सदसस्पति'रिति पदमनुवर्तते ।

भावार्थः—यथा मनुष्यः सर्वतो विस्तृतं सूर्य्यादिप्रकाशं पश्यति, तथैव सर्वतोऽभिव्याप्तं ज्ञानप्रकाशं परमेश्वरं ज्ञात्वा विस्तृतसुखो भवतीति ॥९॥

पूर्वेण सप्तदशसूक्तार्थेन '[2]इन्द्रावरुणाभ्यां सहानुयोगिनस्तथात्र '[3]ब्रह्मणस्पत्याद्यर्थानां प्रतिपादनादष्टादशसूक्तार्थस्य संगतिरस्तीति बोध्यम् ॥

इदमपि सूक्तं सायणाचार्य्यादिभिर्यूरोपदेशनिवासिभिर्विलसनादिभिश्चान्यथैव व्याख्यातम् ॥

इत्यष्टादशं सूक्तं पञ्चत्रिंशो वर्गश्च समाप्तः ॥

फिर वह कैसा है, इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—मैं जैसे [ (दिवः) ] प्रकाशमय सूर्य्यादिकों के प्रकाशों की (न) तरह (सप्रथस्तमम्) जिसमें प्राणी रहते हैं वह जगद्रूप यश जिससे प्राप्त होता है, (सप्रथस्तमम्) जो बड़े-बड़े आकाश आदि पदार्थों के साथ अच्छी प्रकार व्याप्त, (सुधृष्टमम्) उत्तमता से सब संसार को धारण करनेवाला, (नराशंसम्) सब मनुष्यों से अवश्य स्तुति करने योग्य, पूर्वोक्त (सदसस्पतिम्)[4] सभापति परमेश्वर [ है, उस ] को (अपश्यम्) [5]देखता हूं, वैसे तुम भी सभाओं के पति को प्राप्त होके न्याय से सब प्रजा का पालन करके उसका नित्य दर्शन करो ॥९॥

इस मन्त्र में उपमालङ्कार है । [6]इस मन्त्र में सातवें मन्त्र से 'सदसस्पतिम्' इस पद की अनुवृत्ति जाननी चाहिये ।

**भावार्थ**—जैसे मनुष्य सब जगह विस्तृत हुए सूर्य्यादि के प्रकाश को देखता है, वैसे ही सब जगह व्याप्त ज्ञानप्रकाशरूप परमेश्वर को जानकर सुख के विस्तार को प्राप्त होता है ॥ ९ ॥

पूर्व सत्रहवें सूक्त के अर्थ के साथ इन्द्र[7] और वरुण के साथ अनुयोगी [8]ब्रह्मणस्पति आदि अर्थों के प्रतिपादन से इस अठारहवें सूक्त के अर्थ की सङ्गति जाननी चाहिये ॥

यह भी सूक्त सायणाचार्य्य आदि और यूरोपदेशवासी विलसन आदि ने कुछ का कुछ ही वर्णन किया है ॥

यह अठारहवां सूक्त और पैंतीसवां वर्ग पूरा हुआ ॥



---

१. वै० य० मुद्रितेषु संस्करणेषु 'अत्र ……वर्तते' वाक्यं भावार्थानन्तरमस्थाने वर्तते । ग्रन्थकृतः शैल्यनुसारं वाक्यमिदं भावार्थात् पूर्वं नीतः, तस्यान्वयान्ते सम्बन्धात् ।

२. वै० य० मुद्रितेषु संस्करणेषु 'मित्रावरुणाभ्यां' इत्यपपाठः, पूर्वसूक्ते 'इन्द्रावरुण'शब्ददर्शनात् ।

३. वै० य० मुद्रितेषु संस्करणेषु 'बृहस्पत्याद्यर्थानां' इत्यपपाठः, अस्मिन् सूक्ते 'ब्रह्मणस्पत्यादि'शब्दानां श्रवणात् । ४. इस पद की पूर्व मन्त्र से अनुवृत्ति है ।

५. अर्थात् प्रकाश को चक्षु से प्रत्यक्ष रूप से तथा परमेश्वर को ज्ञानदृष्टि से देखता हूं ।

६. वै० य० मुद्रित संस्करणों में यह वाक्य भावार्थ के अन्त में था । ग्रन्थकार की शैली के अनुसार यहां पूर्व में लाया गया है । ७. वै० य० मुद्रित संस्करणों में 'मित्र' अपपाठ है ।

८. वै० य० मुद्रित संस्करणों में 'बृहस्पति' अपपाठ है ।

अथ नवर्च्चस्यैकोनविंशस्य सूक्तस्य काण्वो मेधातिथिर्ऋषिः। अग्निर्मरुतश्च देवताः। १, ३–८ गायत्री; २ निचृद्गायत्री; ९ पिपीलिकामध्यानिचृद् गायत्री च छन्दः। षड्जः स्वरः॥

तत्रादौ भौतिकाग्निगुणा उपदिश्यन्ते—

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे। मरुद्भिरग्न आ गहि॥१॥

प्रति। त्यम्। चारुम्। अध्वरम्। गोऽपीथाय। प्र। हूयसे॥ मरुत्ऽभिः। अग्ने। आ। गहि॥१॥

पदार्थः—( प्रति ) वीप्सायाम् ( त्यम् ) तम् ( चारुम् ) श्रेष्ठम् ( अध्वरम् ) यज्ञम् पीथाय) पृथिवीन्द्रियादीनां [1]रक्षणाय। निशीथगोपीथावगथाः। उ० २। ९ अनेनायं ातितः। (प्र) प्रकृष्टार्थे ( हूयसे ) अध्वरसिद्ध्यर्थं शब्द्यते। अत्र व्यत्ययः। ( मरुद्भिः ) विशेषैः सह (अग्ने) भौतिकः (आ) समन्तात् (गहि) गच्छति, अत्र व्यत्ययो लडर्थे लोट ]। बहुलं छन्दसि [अ० २। ४। ७३] इति शपो लुक् च[2]॥१॥

अन्वयः—योऽ[ग्नेऽ]ग्निर्मरुद्भिः सहागहि समन्तात् प्राप्नोति, स विद्वद्भिस्त्यं तं चारुमध्वरं । गोपीथाय प्रहूयसे प्रकृष्टतया शब्द्यते॥१॥

भावार्थः—यो भौतिकोऽग्निः प्रसिद्धः विद्युद्रूपेण[3] वायुभ्यः[4] प्रदीप्यते, सोऽयं विद्वद्भिः प्रशस्तथा प्रतिक्रियासिद्धि सर्वस्य [च] रक्षणाय तद्गुणज्ञानपुरःसरमुपदेष्टव्यः श्रोतव्यश्चेति॥१॥

अब उन्नीसवें सूक्त का आरम्भ है। उसके पहिले मन्त्र में भौतिक अग्नि के गुणों का देश किया है—

पदार्थान्वयभाषा—जो (अग्ने) भौतिक अग्नि (मरुद्भिः) विशेष पवनों के साथ (आगहि) । प्रकार से प्राप्त होता है [अर्थात् प्रज्ज्वलित होता है], वह विद्वानों की क्रियाओं से ( त्यम् ) त ( चारुम् अध्वरम् प्रति ) प्रत्येक उत्तम-उत्तम यज्ञ में उनको सिद्धि वा ( गोपीथाय ) पृथिवी र इन्द्रियादि की रक्षा के लिए ( प्रहूयसे ) अच्छी प्रकार क्रिया में युक्त किया जाता है॥ १॥

भावार्थ—जो यह भौतिक अग्नि प्रसिद्ध [5]सूर्य्य और विद्युत्रूप करके पवनों के साथ प्रदीप्त

---

१. गवां पीथः रक्षणं तस्मै इत्यर्थः।

२. 'अनुदात्तोपदेश०' ( अ० ६। ४। ३७ ) इत्यनेनानुनासिकलोपः।

३. वै० य० मुद्रितेषु संस्करणेषु 'प्रसिद्धविद्युद्रूपेण' इत्यपपाठः। विद्युतः प्रदीपने वायुर्मेघानां वर्षणरूपेण कारणं भवति।

४. 'ल्यब्लोपे कर्मण्युपसंख्यानम्' (अ० २।३।२८) इत्यनेन। यद्वा—'अकर्तर्यृणे पञ्चमी' (अ० २।३।२४) ःयनेन हेतौ पञ्चमी।

५. यहां 'सूर्य' पद असम्बद्ध प्रतीत होता है, क्योंकि संस्कृत में यह पद नहीं है।

होता है, उसका विद्वानों को प्रशंसनीय बुद्धि से हरएक क्रिया की सिद्धि वा सब की रक्षा के लिये गुणों के विज्ञानपूर्वक उपदेश करना वा सुनना चाहिये ॥ १ ॥



अथाग्निशब्देनेश्वरभौतिकगुणा उपदिश्यन्ते—

नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिरग्न आ गहि ॥२॥

नहि । देवः । न । मर्त्यः । महः । तव । क्रतुम् । परः ॥ मरुत्ऽभिः । अग्ने । आ । गहि ॥२॥

पदार्थः—(नहि) प्रतिषेधार्थे (देवः) विद्वान् (न) निषेधार्थे (मर्त्यः) अविद्वान्[1] मनुष्यः (महः) महिमा (तव) परमात्मनः, तस्याग्नेर्वा (क्रतुम्) कर्म (परः) प्रकृष्टगुणः (मरुद्भिः) गणैः सह (अग्ने) विज्ञानस्वरूपेश्वर ! भौतिकस्य वा (आ) समन्तात् (गहि) गच्छ, गच्छति वा, अत्र बहुलं छन्दसि [अ० २ । ४ । ७३] इति शपो लुक् । अनुदात्तोपदेश० [अ० ६ । ४ । ३७] इत्यनुनासिकलोपः ॥२॥

अन्वयः—हे अग्ने ! त्वं कृपया मरुद्भिः सहागहि विज्ञातो भव । यस्य तव परो महो महिमास्ति । तव तं क्रतुं कर्म संपूर्णमियत्तया नहि कश्चिद देवो न च [मर्त्यो] मनुष्यो वेत्तुमर्हति इत्येकः ॥

यस्य [अग्ने] भौतिकाग्नेः परो महो महिमा [ऽस्ति, स] क्रतुं कर्म प्रज्ञां वा [2]प्रापयति [तत्र तस्य] गुणान् न देवो न मर्त्य इयत्तया परिच्छेत्तुमर्हति, सोऽग्निर्मरुद्भिः सहागहि समन्तात् प्राप्नोति, इति द्वितीयः ॥२॥

[3][अत्र श्लेषालंकारः ।]

भावार्थः—नैव परमेश्वरस्य सर्वोत्तमस्य महिम्नः कर्मणश्चानन्तत्वात् कश्चिदपीतस्यान्तं गन्तुं शक्नोति । किन्तु यावत्यौ यस्य बुद्धिविद्ये [स्तः,] तावन्तं समाधियोगयुक्तेन प्राणयामेनान्तर्यामिरूपेण स्थितं, वेदेषु सृष्ट्यां [4]भौतिकस्याऽग्नेश्च स्वस्वरूपगुणा यावन्तः प्रकाशितास्तावन्त एव ते वेदितुमर्हन्ति नाधिकं चेति ॥२॥

अगले मन्त्र में अग्नि शब्द से ईश्वर और भौतिक अग्नि के गुणों का उपदेश किया है—

पदार्थान्वयभाषा—हे (अग्ने) विज्ञानस्वरूप परमेश्वर ! आप कृपा करके (मरुद्भिः)

१. देवेन विदुषा सह मर्त्यस्य निर्देशात् 'मर्त्यः' पदस्य 'अविद्वान् मनुष्यः' अर्थो भाष्यकारेण कृतः ।

२. वै० य० मुद्रितेषु संस्करणेषु 'प्रापयति न देवो न मर्त्यो गुणेयत्तया' इत्यपपाठः ।

३. अग्निपदस्य द्विविधार्थनिर्देशादत्रानेन पाठेन भाव्यम् ।

४. वै० य० मुद्रितेषु संस्करणेषु 'भौतिकं च मरुतः' इत्यपपाठः । पदार्थेऽन्वये च भौतिकाग्नेरेवोल्लेखात् तस्य स्वरूपगुणा एवेहेष्टाः, न मरुतः । ग.कोशे 'मरुद्भिः' पदस्य 'गुणैः' इत्यपपाठः, तदनुरूप एवेह 'मरुतः' पदस्य प्रवेशः संभाव्यते ।

गों के साथ (आगहि) प्राप्त हूजिये, अर्थात् विदित हूजिये। जिसकी (परः) अत्युत्तम (महः) हिमा है, उस (तव) आपके (क्रतुम्) कर्मों को पूर्णता से जानने को (नहि) न कोई (देवः) द्वान् (न) और न कोई (मर्त्यः) अज्ञानी मनुष्य समर्थ हो सकता है ॥ १ ॥

जिस (अग्ने) भौतिक अग्नि का (परः) अति श्रेष्ठ (महः) महिमा है, वह क्रतुम्) कर्म और बुद्धि को प्राप्त कराता है। (तव) उसके गुणों को (नहि देवः) न कोई द्वान् और (न मर्त्यः) न कोई अज्ञानी मनुष्य जान सकता है। वह अग्नि (मरुद्भिः) वायुओं साथ (आगहि) सब प्रकार से प्राप्त होता है ॥ २ ॥ २ ॥

[1][इस मन्त्र में श्लेषालंकार है।]

**भावार्थ—**सर्वोत्तम परमेश्वर की महिमा वा कर्म अपार हैं, इससे उसका पार कोई हीं पा सकता। किन्तु जितनी जिसकी बुद्धि वा विद्या है, उसके अनुसार समाधियोगयुक्त प्राणायाम द्वारा अन्तर्यामीरूप से स्थित परमेश्वर को, तथा वेद और संसार में परमेश्वर ने अपनी रचना अपने स्वरूप वा गुण, तथा भौतिक अग्नि के स्वरूप वा गुण जितने प्रकाशित किये हैं, उतने ही ान सकता है अधिक नहीं ॥ २ ॥



अथाग्निशब्देनैतयोर्गुणा उपदिश्यन्ते—

ये म॒हो रज॑सो वि॒दुर्विश्वे॑ दे॒वासो॑ अ॒द्रुहः॑ । म॒रुद्भि॑रग्न॒ आ ग॑हि ॥३॥

ये । म॒हः । रज॑सः । वि॒दुः । विश्वे॑ । दे॒वासः॑ । अ॒द्रुहः॑ ॥ म॒रुत्ऽभिः॑ । अ॒ग्ने॒ । आ । ग॒हि॒ ॥३॥

**पदार्थः—(ये)** मनुष्याः **(महः)** महसः। **अत्र सुपां सुलुग०** [अ० ७ । १ । ३९] **इति शसो** लुक्। **(रजसः)** लोकान्। यास्कमुनी **रजःशब्दमेवं व्याख्यातवान्**—रजो रजतेर्ज्योती रज उच्यते, उदकं रज उच्यते, लोका रजांस्युच्यन्ते, असृगहनी रजसी उच्येते। निरु० ४। १९। **(विदुः)** जानन्ति **(विश्वे)** सर्वे **(देवासः)** विद्वांसः। **अत्र आज्जसेरसुग्०** [अ० ७ । १ । ५०] **इत्य-**सुगागमः **(अद्रुहः)** द्रोहरहिताः[2] **(मरुद्भिः)** वायुभिः सह **(अग्ने)** **स्वयंप्रकाश ! सर्वलोक-**प्रकाशकोऽग्निर्वा **(आ)** **समन्तात् (गहि)** गच्छ, गच्छति वा [[3]**अत्रान्त्यपक्षे व्यत्ययो, लडर्थे लोट्,** बहुलं छन्दसि अ० ७ । १ । ३९ **इति शपो लुक् च]** ॥३॥

**अन्वयः—**येऽद्रुहो विश्वे देवासो विद्वांसो मरुद्भिरग्निना च संयोगेन[4] महो रजसो विदुः, त एव

१. यहां अग्नि का दो प्रकार का अर्थ करने से श्लेषालङ्कार है। अतः यह निर्देश आवश्यक है।

२. नास्ति ध्रुट् द्रोहो येषु तेऽद्रुहः। नञ्सुभ्याम् (६ । २ । १७२) इत्युत्तरपदान्तोदात्तत्वम्। द्रुहः सम्पदादित्वात् (अ० ३ । ३ । ९४ वा०) क्विप्।

३. अयं पाठः ख.कोश उपलभ्यते, आवश्यकश्चात्रेति कृत्वा प्रवर्धितः।

४. वै० य० मुद्रितेषु संस्करणेषु 'संयुगे' इत्यपपाठः।

सुखिनः स्युः । हे अग्ने ! यस्त्वं मरुद्भिः सहागहि विदितो भवसि, तेन त्वया योऽग्निर्निर्मितः स मरुद्भिरेव कार्य्यार्थमागच्छति प्राप्तो भवति ॥३॥

¹[अत्र श्लेषालङ्कारः] ।

भावार्थः—ये विद्वांसोऽग्निनाकृष्य प्रकाश्य मरुद्भिश्चेष्टयित्वा धारिता [ये] लोकाः सन्ति, तान् सर्वान् विदित्वा कार्य्येषूपयोक्तुं जानन्ति, ते सुखिनो भवन्तीति ॥३॥

अगले मन्त्र में अग्नि शब्द से ईश्वर और भौतिक अग्नि के गुणों का उपदेश किया है—

पदार्थान्वयभाषा—( ये ) जो ( अद्रुहः ) किसी से द्रोह न रखनेवाले ( विश्वे ) सब ( देवासः ) विद्वान् लोग ( मरुद्भिः ) पवन और अग्नि के साथ संयोग से ( महः ) बड़े-बड़े ( रजसः ) लोकों को ( विदुः ) जानते हैं, वे ही सुखी होते हैं। हे ( अग्ने ) स्वयं प्रकाश होनेवाले परमेश्वर ! जो आप पवनों के साथ [ अर्थात् प्राणायामादि योगक्रिया से ] (आगहि) विदित होते हैं, इससे जो आपका बनाया हुआ, सब लोकों का प्रकाश करनेवाला भौतिक अग्नि है, सो भी आपकी कृपा से पवनों के साथ कार्य्यसिद्धि के लिये प्राप्त होता है ॥ ३ ॥

²[इस मन्त्र में श्लेषालङ्कार है ।]

भावार्थ—जो विद्वान् लोग अग्नि से आकर्षण वा प्रकाश करके, तथा पवनों से चेष्टा करके धारण किये हुए जो लोक हैं, उन सबको जानकर उनसे कार्यों में उपयोग लेना जानते हैं, वे ही अत्यन्त सुखी होते हैं ॥ ३ ॥



पुनः कीदृशास्ते मरुत इत्युपदिश्यते—

य उग्रा अर्कमानृचुरनाधृष्टास ओजसा । मरुद्भिरग्न आ गहि ॥४॥

ये । उग्राः । अर्कम् । आनृचुः । अनाधृष्टासः । ओजसा ॥ ³मरुत्ऽभिः । अग्ने । आ । गहि ॥४॥

पदार्थः—(ये) वायवः (उग्राः) तीव्रवेगादिगुणाः, [ ऋज्रेन्द्राग्र० । उ० २ । २८ इत्यत्र निपातितः । ] ( अर्कम् ) सूर्य्यादिलोकम् ( आनृचुः ) स्तावयन्ति तद्गुणान् प्रकाशयन्ति. अपस्पृधेथामानृचु० । अ० ६।१।३६ अनेनार्चधातोर्लिटयुसि सम्प्रसारणमकारलोपश्च निपातितः । ( अनाधृष्टाः ) धर्षितुं निवारयितुमनर्हाः ( ओजसा ) बलादिगुणसमूहेन सह वर्त्तमानाः ( मरुद्भिः ) एतैर्वायुभिः सह ( अग्ने ) विद्युत् प्रसिद्धो वा ( आ ) समन्तात् ( गहि ) प्राप्नोति ॥ ४ ॥

१. 'अग्ने' पदस्य श्लेषेण द्विधार्थप्रदर्शनादिहायं पाठ आवश्यकः ।

२. 'अग्ने' पद का श्लेष से दो प्रकार का अर्थ दर्शाने से यहां यह पाठ आवश्यक है ।

३. वै० य० मुद्रितेषु १-२-३ संस्करणेषु 'मरुद्भिः' इत्यपपाठः । चतुर्थे संस्करणे शोधितः ।

अन्वयः—य उग्रा अनाधृष्टासो वायव ओजसाऽर्कमानृचुः, एतैर्मरुद्भिः सहाग्ने अयमग्निरागच्छति समन्तात् कार्य्ये सहायकारी भवति ॥४॥

भावार्थः—यावद् बलं वर्त्तते, तावद् वायुविद्युद्भ्यां जायते[1]। इमे वायवः सर्वलोकधारकाः त। तद्योगेन विद्युत्सूर्यादयः प्रकाश्य ध्रियन्ते। तस्माद् वायुगुणज्ञानोपकारग्रहणाभ्यां बहूनि र्याणि सिध्यन्तीति ॥४॥

फिर उक्त पवन किस प्रकार के हैं, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—( ये ) जो ( उग्राः ) तीव्र वेग आदि गुणवाले, (अनाधृष्टासः) किसी रोकने में न आ सकनेवाले पवन ( ओजसा ) अपने बल आदि गुणों में संयुक्त हुए (अर्कम्) र्य आदि लोकों के ( आनृचुः ) गुणों को प्रकाशित करते हैं, इन ( मरुद्भिः ) पवनों के साथ अग्ने ) यह विद्युत् और प्रसिद्ध अग्नि ( आगहि ) कार्य्य में सहाय करनेवाला होता है ॥ ४ ॥

भावार्थ—जितना बल वर्त्तमान है, उतना वायु और विद्युत् के सकाश से उत्पन्न होता है। ये यु सब लोकों के धारण करनेवाले हैं। इनके संयोग से बिजुली वा सूर्य्य आदि लोक प्रकाशित र धारण किये जाते हैं। इससे वायु के गुणों का ज्ञान वा उनसे उपकार ग्रहण करने से अनेक कार के कार्य्य सिद्ध होते हैं ॥ ४ ॥



पुनस्ते कीदृशा इत्युपदिश्यते—

ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः । मरुद्भिरग्न आ गहि ॥५॥

ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः ॥ मरुत्ऽभिः । अग्ने । आ । गहि ॥५॥

पदार्थः—( ये ) वायवः ( शुभ्राः ) स्वगुणैः शोभमानाः ( घोरवर्पसः ) घोरं हननशीलं र्पो रूपं स्वरूपं येषां ते। वर्प इति रूपनामसु पठितम्। निघं० ३। ७। ( सुक्षत्रासः ) शोभनं त्रमन्तरिक्षस्थं राज्यं येषां ते ( रिशादसः ) रिशा रोगा[स्तेषाम्] अदसोऽत्तारो[2] ये ते मरुद्भिः ) प्राप्तिहेतुभिः सह। मरुत इति पदनामसु पठितम्। निघं० ५। ५ अनेनात्र प्राप्त्यर्थो ह्यते। ( अग्ने ) भौतिकः ( आ ) आभिमुख्ये ( गहि ) प्रापयति [[3]अत्र व्यत्ययो लडर्थे लट् च] ॥५॥

अन्वयः—ये घोरवर्पसो रिशादसः सुक्षत्रासः शुभ्रा वायवः सन्ति, तैर्मरुद्भिः सहाग्नेऽग्निरा- ह कार्य्याणि प्रापयति ॥५॥

---

१. या का च बलकृतिरिन्द्रकर्मैव तत्। निरुक्त ७। ९ ॥

२. अ० य० मुद्रितेषु संस्करणेषु 'यैस्ते' इत्यपपाठः।

३. उत्तरयोर्मन्त्रार्थयोरयं पाठो दृश्यतेऽतोऽत्रापि योजितः।

**भावार्थः**—ये यज्ञेन शोधिता वायवः सुराज्यकारिणो भूत्वा रोगान् घ्नन्ति, ये चाशुद्धास्ते सुखानि नाशयन्ति, तस्मात् सर्वैर्मनुष्यैरग्निना वायोः शोधनेन सुखानि संसाधनीयानीति ॥५॥

इति षट्त्रिंशो वर्गः समाप्तः ॥

फिर भी उक्त वायु कैसे हैं, इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—( ये ) जो ( घोरवर्पसः ) घोर अर्थात् पदार्थों को अत्यन्त छिन्न-भिन्न करनेरूप स्वरूपवाले, ( रिशादसः ) रोगों को नष्ट करनेवाले, ( क्षत्रासः ) अन्तरिक्ष में निर्भय राज्य करनेहारे, और ( शुभ्राः ) अपने गुणों से सुशोभित पवन हैं, उन ( मरुद्भिः ) पवनों के साथ ( अग्ने ) भौतिक अग्नि ( आगहि ) प्रकट होता है, अर्थात् कार्य्यसिद्धि को देता है ॥ ५ ॥

**भावार्थ**—जो यज्ञ के धूम से शोधे हुए पवन हैं, वे अच्छे राज्य के करनेवाले होकर रोग आदि दोषों का नाश करते हैं। और जो अशुद्ध अर्थात् दुर्गन्ध आदि दोषों से भरे हुए हैं, वे सुखों का नाश करते हैं। इससे मनुष्यों को चाहिये कि अग्नि में होम द्वारा वायु की शुद्धि से अनेक प्रकार के सुखों को सिद्ध करें ॥ ५ ॥

यह छत्तीसवां वर्ग पूरा हुआ ॥



पुनस्ते कीदृशा इत्युपदिश्यते—

ये नाकस्याधि रोचने दिवि देवास आसते । मरुद्भिरग्न आ गहि ॥६॥

ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते ॥ मरुत्ऽभिः । अग्ने । आ । गहि ॥६॥

**पदार्थः**—( ये ) पृथिव्यादयो लोकाः ( नाकस्य ) सुखहेतोः सूर्य्यलोकस्य (अधि) उपरिभागे ( रोचने ) रुचिनिमित्ते ( दिवि ) द्योतनात्मके सूर्य्यप्रकाशे ( देवासः ) दिव्यगुणाः पृथिवीचन्द्रादयः प्रकाशिताः (आसते) सन्ति (मरुद्भिः) दिव्यगुणैर्वायुभिः सह। [मरुतो वै देवाः। शत०[1]] ( अग्ने ) अग्निः प्रसिद्धः ( आ ) समन्तात् ( गहि ) सुखानि गमयति, [2]अत्र व्यत्ययो लडर्थे लोट् च ॥ ६ ॥

**अन्वयः**—ये देवासो नाकस्य रोचने दिव्यध्यासते, तद्धारकैः प्रकाशकैर्मरुद्भिः सहाग्नेऽयमग्निरागहि सुखानि प्रापयति ॥ ६ ॥

**भावार्थः**–सर्वे लोका ईश्वरस्यैव प्रकाशेन प्रकाशिताः सन्ति, परन्तु तद्रचितस्य सूर्य्यलोकस्य

१. अयं प्रमाणपाठः क.कोशे दृश्यते । तुलना कार्या—'युञ्जन्तु त्वा मरुतो विश्ववेदस इति, युञ्जन्तु त्वा देवा इत्येवैतदाह'। शत० ५।१।४।६॥

२. अयं पाठः ख.कोशे उपलभ्यते, आवश्यकत्वाच्च । द्रष्टव्य उत्तरमन्त्रपदार्थः ।

पृथिवी-चन्द्रादयो लोका दीप्यन्ते । तैर्दिव्यगुणैः सह वर्त्तमानोऽयमग्निः सर्वकार्य्येषु योजनीय
६ ॥

फिर भी उक्त पवन कैसे हैं, इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—( ये ) जो ( देवासः ) प्रकाशमान और अच्छे-अच्छे गुणोंवाले पृथिवी द्र आदि लोक ( नाकस्य ) सुख की सिद्धि करनेवाले सूर्य्यलोक के ( रोचने ) रुचिकारक ) प्रकाश में (अध्यासते) [वर्त्तमान हैं,] उनके धारण और प्रकाश करनेवाले (मरुद्भिः) के साथ ( अग्ने ) यह अग्नि ( आगहि ) सुखों की प्राप्ति कराता है ॥ ६ ॥

**भावार्थ**—सब लोक परमेश्वर के प्रकाश से प्रकाशमान हैं, परन्तु उसके रचे हुए सूर्य्यलोक प्ति अर्थात् प्रकाश से पृथिवी और चन्द्रलोक प्रकाशित होते हैं। उन अच्छे-अच्छे गुणों से नग्नि को सब कार्य्यों में संयुक्त करना चाहिये ॥ ६ ॥



पुनस्ते किंकर्महेतवः सन्तीत्युपदिश्यते—

य ईङ्खयन्ति पर्वतान् तिरः समुद्रमर्णवम् । मरुद्भिरग्न आ गहि ॥७॥

ये । ईङ्खयन्ति । पर्वतान् । तिरः । समुद्रम् । अर्णवम् ॥ मरुत्ऽभिः । अग्ने । आ । गहि ॥७॥

**पदार्थः**--( ये ) वायवः ( ईङ्खयन्ति ) छेदयन्ति निपातयन्ति ( पर्वतान् ) मेघान्। इति मेघनामसु पठितम् । निघं० १ । १० । (तिरः) तिरस्करणे (समुद्रम्) सम्यगुद्द्रवन्त्यापो न् तदन्तरिक्षम । समुद्र इत्यन्तरिक्षनामसु पठितम् । निघं० १ । ३ । ( अर्णवम् ) पृथिवीस्थं म् ( मरुद्भिः ) उपर्य्यधोगमनशीलैर्वायुभिः ( अग्ने ) अग्निर्विद्युदाख्यः ( आ ) अभितः हि ) प्राप्नोति, अत्र व्यत्ययो लडर्थे लोट् च ॥ ७ ॥

**अन्वयः**—ये वायवः पर्वता[न् मेघा]दीनीङ्खयन्ति, अर्णवं तिरस्कुर्वन्ति, समुद्रं प्रपूरयन्ति, द्भिः सहाग्नेऽयमग्निर्विद्युदागह्यागच्छति ॥ ७ ॥

**भावार्थः**—वायुयोगेनैव वृष्टिर्भवति, जलं रेणवश्चोपरि गत्वाऽऽगच्छन्ति। तैः सह तस्मि-न वा विद्युदुत्पद्य गृह्यते[1] ॥ ७ ॥

फिर उक्त पवन किन कार्य्यों के हेतु होते हैं, इस विषय का उपदेश अगले मन्त्र में किया है—

**पदार्थान्वयभाषा**—( ये ) जो वायु ( पर्वतान् ) मेघों को (ईङ्खयन्ति) छिन्न-भिन्न करते वर्षाते हैं, ( अर्णवम् ) समुद्र का ( तिरः ) तिरस्कार करते, वा ( समुद्रम् ) अन्तरिक्ष को से पूर्ण करते हैं, उन (मरुद्भिः) पवनों के साथ (अग्ने) यह अग्नि अर्थात् बिजुली (आगहि) त होती, अर्थात् सन्मुख आती जाती है ॥ ७ ॥

१. दृश्यते इत्यर्थः, निगृह्यते निलीयते वा ।

भावार्थ—वायु के संयोग से ही वर्षा होती है, और जल के कण वा रेणु अर्थात् सब पदार्थों के अत्यन्त छोटे-छोटे कण पृथिवी से अन्तरिक्ष को जाते तथा वहां से पृथिवी को आते हैं। उनके साथ वा उनके निमित्त से बिजुली बद्दलों में उत्पन्न होती और छिप जाती है ॥ ७ ॥

एत एव प्रकाशादिकं विस्तारयन्तीत्युपदिश्यते—

आ ये तन्वन्ति रश्मिभिस्तिरः समुद्रमोजसा । मरुद्भिरग्न आ गहि ॥८॥

आ । ये । तन्वन्ति । रश्मिऽभिः । तिरः । समुद्रम् । ओजसा ॥ मरुत्ऽभिः । अग्ने । आ । गहि ॥८॥

पदार्थः—( आ ) अनुगतार्थे क्रियायोगे ( ये ) वायवः (तन्वन्ति) विस्तारयन्ति (रश्मिभिः) सूर्य्यकिरणैः सह ( तिरः ) तिरस्करणे ( समुद्रम् ) अन्तरिक्षं जलमयं वा ( ओजसा ) बलेन वेगेन वा ( मरुद्भिः ) तैर्धनञ्जयाख्यैः सूक्ष्मैः सह ( अग्ने ) अग्निः ( आ ) सर्वतः ( गहि ) प्राप्नोति, अत्र व्यत्ययो लडर्थे लोट् च ॥ ८ ॥

अन्वयः—ये वायव ओजसा समुद्रमन्तरिक्षमागच्छन्ति, जलमयं सागरं तिरस्कुर्वन्ति, ये च रश्मिभिः सहातन्वन्ति, तैर्मरुद्भिः सहाग्न अग्निरागहि प्राप्तोऽस्ति ॥ ८ ॥

भावार्थः—एतेषां वायूनां प्राप्त्या सर्वे पदार्था वर्धित्वा बलहेतवो भवन्ति । तस्मान्मनुष्यैर्वाय्वग्नियोगेनानेका कार्य्यसिद्धिर्विभावनीयेति ॥ ८ ॥

ये ही प्रकाश आदि गुणों का विस्तार करते हैं, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा—( ये ) जो वायु अपने ( ओजसा ) बल वा वेग से (समुद्रम्) अन्तरिक्ष को प्राप्त होते, तथा जलमय समुद्र का ( तिरः ) तिरस्कार करते हैं, तथा जो ( रश्मिभिः ) सूर्य्य की किरणों के साथ ( आतन्वन्ति ) विस्तार को प्राप्त होते है, उन ( मरुद्भिः ) पवनों के साथ ( अग्ने ) भौतिक अग्नि ( आगहि ) कार्य्य की सिद्धि को देता है ॥ ८ ॥

भावार्थ—इन पवनों की प्राप्ति से सब पदार्थ बढ़कर बल देनेवाले होते है। इससे मनुष्यों को वायु और अग्नि के योग से अनेक प्रकार के कार्य्यों की सिद्धि करनी चाहिये ॥ ८ ॥

पुनस्तैः किं साधनीयमित्युपदिश्यते—

अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ॥९॥

अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यम् । मधु ॥ मरुत्ऽभिः । अग्ने । आ । गहि ॥९॥

पदार्थः—( अभि ) आभिमुख्ये ( त्वा ) तत् ( पूर्वपीतये ) पूर्वं पीतिः पानं सुखभोगो यस्मिन् तस्मा आनन्दाय ( सृजामि ) रचयामि ( सोम्यम् ) सोमं प्रसवं सुखानां समूहो रसा-

र्हति तत्। अत्र सोममर्हति यः। अ० ४। ४। १३७ अनेन यः प्रत्ययः। ( मधु ) मन्यन्ते जानन्ति सुखानि येन तत् मधुरं सुखकारकम् (मरुद्भिः) अनेकविधैर्निमित्तभूतैर्वायुभिः (अग्ने) व्यावहारिकः (आ) अभितः (गहि) साधको भवति ॥९॥

अन्वयः--यैर्मरुद्भिरग्नेऽग्निरागहि साधको भवति, तैः पूर्वपीतये त्वा तत् सोम्यं मध्वहमभिसृजामि ॥९॥

भावार्थः—विद्वांसो येषां वाय्वग्न्यादिपदार्थानां सकाशात् सर्वं शिल्पक्रियामयं यज्ञं साध्नुवन्ते, तैरेव सर्वैर्मनुष्यैः सर्वाणि कार्य्याणि साधनीयानीति ॥९॥

अथाष्टादशसूक्तप्रतिपादित-[1]ब्रह्मणस्पत्यादिभिः पदार्थैः सहैतेनोक्तानामग्निमरुतां विद्याप्रकाशेषत्वाद् अस्यैकोनविंशस्य सूक्तस्य सङ्गतिरस्तीति बोध्यम् ॥

[2]अस्मिन्नध्यायेऽग्निम् एतस्य वाय्वादीनां च परस्परं विद्योपयोगाय प्रतिपादयन्नीश्वरो वायुसहकारिणमग्निमन्ते प्रकाशयन्नध्यायसमाप्तिं द्योतयतीति ॥

इदमपि सूक्तं सायणाचार्य्यादिभिर्यूरोपदेशनिवासिभिर्विलसनादिभिश्चान्यथैव व्याख्यातम् ॥

इति श्रीमत्परिव्राजकाचार्य्येण दयानन्दसरस्वतीस्वामिना विरचिते
संस्कृतभाषार्य्यभाषाभ्यां विभूषिते सुप्रमाणयुक्ते वेदभाष्ये
प्रथमाष्टके प्रथमोऽध्यायः, एकोनविंशं सूक्तं,
सप्तत्रिंशो वर्गश्च समाप्तः ॥

फिर उनसे क्या सिद्ध करना चाहिये, इस विषय का उपदेश अगले मन्त्र में किया है—

पदार्थान्वयभाषा--जिन ( मरुद्भिः ) पवनों से ( अग्ने ) भौतिक अग्नि (आगहि) कार्य्यसाधक होता है, उनसे ( पूर्वपीतये ) पहिले जिसमें पीति अर्थात् सुख का भोग है, उस उत्तम सुख के लिये ( त्वा ) उस ( सोम्यम् ) सुखों के उत्पन्न करने योग्य ( मधु ) मधुर आनन्द देने वाले पदार्थों के रस को मैं (अभिसृजामि) सब प्रकार से उत्पन्न करता हूं ॥ ९ ॥

भावार्थ--विद्वान् लोग जिन वायु अग्नि आदि पदार्थों के सहयोग से सब शिल्पक्रियारूपी यज्ञ को सिद्ध करते हैं, उन्हीं पदार्थों से सब मनुष्यों को सब कार्य्य सिद्ध करने चाहियें ॥ ९ ॥

अठारहवें सूक्त में कहे हुए [3]ब्रह्मणस्पति आदि पदार्थों के साथ, इस सूक्त से जिन अग्नि

१. वै० य० मुद्रितेषु संस्करणेषु 'बृहस्पत्यादिभिः' इत्यपपाठः। तत्र 'ब्रह्मणस्पते' श्रवणात्।

२. अत्र पाठभ्रंशः समजनि। एवमत्र पाठो द्रष्टव्यः—ईश्वर एतस्मिन्नध्याये आदौ वाय्वादीनां उपयोगाय अग्निं प्रतिपादयन् अन्ते च वायुसहकारिणमग्निं प्रतिपादयन्नध्यायसमाप्तिं सूचयति।

अत्राध्यायशब्देन प्रकरणाभिप्रायो ज्ञेयः। अत्र पूर्वत्र ( पृष्ठ ३६२, ३६३ ) एतद्विषये निर्दिष्टं विस्तरं द्रष्टव्यम्। अष्टकाध्यायमण्डलादिविभागः पौरुषेय इति वेदविदां मतम्।

३. वै० य० मुद्रित संस्करणों में 'बृहस्पति' अपपाठ है।

ा प्रतिपादन है, उनको विद्या की एकता होने से इस उन्नीसवें सूक्त की सङ्गति हुये ।।

अध्याय [के आदि] में अग्नि और वायु आदि पदार्थों की विद्या के उपयोग के लिये और [ अन्त में ] पवनों के साथ रहनेवाले अग्नि का प्रकाश करता हुआ परमेश्वर समाप्ति को प्रकाशित करता है ।।

सूक्त का भी अर्थ **सायणाचार्य्य** आदि, तथा यूरोपदेशवासी **विलसन** आदि ने अन्यथा या है ।।

थम अष्टक में प्रथम अध्याय, उन्नीसवां सूक्त, और सेतीसवां वर्ग समाप्त हुआ ।।



# प्रथमं परिशिष्टम्

## ऋग्वेदस्य ऋक्संख्या

सुविदितमेवैतद् वैदिकवाङ्मयजुषां यदासन् कदाचिदृग्वेदस्यैकविंशति संहिताः। तासु सम्प्रत्येकैव संहिता समुपलभ्यते। प्राचीनपरम्परासंरक्षकाणां भारतीयविदुषां जागरूकप्रयत्नेन अतिप्राचीनकालादियमविकृतैवोपलभ्यते। तत्रोपसार्धदशसहस्रर्क्परिमाणायां संहितायां नैकोऽपि वर्णो विकृतिं प्राप, ऋचां नैयूनाधिक्यस्य तु का कथा ? एवं परमप्रयत्नेन संरक्षितायामप्यृक्संहितायां तदृक्परिमाणे प्राचीना अर्वाचीनाश्च प्रायेण सर्वेऽपि वैदिकवाङ्मयविदो मिथो विप्रवदन्ते। तथाहि—

शौनकोऽनुवाकानुक्रमण्यां १०५८० ऋचः पादश्चैकः; छन्दःसंख्यापरिशिष्टकारः १०४०२ ऋचः; सर्वानुक्रमणीटीकाकारो जगन्नाथः १०५५२ ऋचः; चरणव्यूहव्याख्याता महिदासो बालखिल्यसहिताः १०५५२ ऋचः, बालखिल्यरहिताः १०४७२, तदुद्धृतश्लोकानुसारं १०४१९ ऋचः; ऋग्भाष्यरचयिता वेङ्कटमाधवः १०४०२ ऋचः; स एव द्विपदापक्षे १०४८० ऋचः; स्वामी दयानन्दः १०५८९ ऋचः, परं तदुल्लिखिते प्रतिमण्डलयोगे संहृत्य १०५२१ ऋचः; अध्यापको मैकडानलः १०४४२ ऋचः, स एव द्विपदापक्षे १०५६९ ऋचः, ८-८-१९१९ तिथ्यङ्कितपत्रानुसारं[1] १०५६५; पण्डितसत्यव्रतः १०५२२; हरिप्रसादो वैदिकमुनिश्च १०४४० ऋच इति सगिरते।

---

## ऋग्वेद की ऋक्संख्या

वैदिक वाङ्मय से परिचित विद्वान् इस बात से परिचित हैं कि पुराकाल में ऋग्वेद की शाखाओं को मिलाकर २१ संहिताएं थीं। उनमें से इस समय एक ही उपलब्ध है। प्राचीन परम्परा के संरक्षक विद्वानों के जागरूक प्रयत्न से अति प्राचीन काल से इस लगभग साढ़े दश हजार मन्त्रों से युक्त संहिता में एक वर्ण भी विकार को प्राप्त नहीं हुआ, ऋचाओं की न्यूनाधिकता तो दूर की बात है। इस प्रकार परम प्रयत्न से संरक्षित ऋक्संहिता में कितनी ऋचाएं हैं, इस विषय मे प्राचीन अर्वाचीन अनेक विद्वानों ने लिखा है, परन्तु यह प्रश्न अभी तक रहस्यमय बना हुआ है। किन्हीं भी दो विद्वानों की ऋग्गणना परस्पर नहीं मिलती। जैसा कि—

शौनकीय अनुवाकानुक्रमणी—१०५८० और १ पाद। छन्दसंख्या-परिशिष्ट—१०४०२। ऋक्सर्वानुक्रमणी-टीकाकार जगन्नाथ—१०५५२। चरणव्यूह-टीकाकार महिदास—बालखिल्यसहित १०५५२, बालखिल्य-बिना १०४७२, उसके द्वारा उद्धृत श्लोकानुसार १०४१९। वेङ्कटमाधव—

---

१. पत्रमिदं मैकडानलाध्यापकेन पण्डितभगवद्दत्ताय प्रेषितम्। तदीये 'वैदिक वाङ्मय का इतिहास' नाम्नो ग्रन्थस्य प्रथमे भागे २४१ पृष्ठे ( सं० २ ) मुद्रितं द्रष्टव्यम्।

**किमत्र वैमत्ये कारणम्, कियत्यश्चर्क् संहितायां वस्तुत ऋच इत्यस्मिन् निबन्धे विवेचयामः।**

**शतपथ ऋचां परिमाणमेवमुल्लिखितम्**—'स ऋचो व्यौहत द्वादशबृहतीसहस्राणि, एतावत्यो ह्यृचो याः प्रजापतिसृष्टाः' [१०।४।२।२३] इति।

एतदनुसृत्य **द्वादशबृहतीसहस्राणामृचां** (१२००० × ३६) = ४३२००० **चतुर्लक्षाणि द्वात्रिंशत्-सहस्राणि चाक्षरमानं जायेत। तच्च शौनकीयानुवाकानुक्रमण्यापि संवदति। वर्तमानायामृक्-संहितायां क्षैप्रप्रश्लेषाभिनिहितसन्धीनां व्यूहे कृतेऽपि ३९७२६५ त्रिलक्षाणि सप्तनवतिसहस्राणि पञ्चषष्ट्यधिकद्विशतान्येवाक्षराणि भवन्ति। अतो जायते संदेहः—किमियं शातपथी ऋगक्षरमात्रा दशतय्या एवर्चामुत वेदचतुष्टयान्तर्वर्त्तिनीनां सर्वासामृचामिति?**

**अत्रैवं पश्यामः—शतपथस्योक्तप्रकरण ऋग्यजुःसाम्नामेवाक्षरमानमुच्यते, नाथर्वाङ्गिरसाम्। वैदिकवाङ्मये यत्र क्वचिदपि ऋग्यजुःसाम्नां त्रयाणामेवोल्लेखस्तत्र ऋगादीनि पदानि न वेद-पराणि, अपि तु मन्त्रविशेषपराण्येव। यथोक्तं जैमिनिना**—'यत्रार्थवशेन पादव्यवस्था सा ऋक्, गीतिषु सामाख्या, शेषे यजुःशब्दः' **[मी० २।१।३५-३७] इति। अत एवं संभाव्यते—उक्ता**

---

१०४०२, तथा द्विपदापक्ष में १०४८०। स्वामी दयानन्द सरस्वती—१०५८९, परन्तु उनके प्रति-मण्डल गिनी गई ऋचाओं का योग १०५२१। प्रो० मैकडानल—१०४४२, द्विपदापक्ष में १०५६९, तथा ८-८-१९१९ के पत्रानुसार १०५६५। पं० सत्यव्रत सामश्रमी—१०५२२। पं० हरिप्रसाद वैदिक मुनि १०४४०।

हमारा मत है कि प्राचीन आचार्यों की ऋग्गणना प्रायः ठीक है। परन्तु उनके गणना-प्रकार में भेद होने से परस्पर विभिन्नता प्रतीत होती है। आधुनिक विद्वानों ने प्राचीन आचार्यों के गणनाप्रकार को भले प्रकार न समझ कर अनेक भयङ्कर भूलें की हैं। इस लेख में उनकी भूलों का निदर्शन और ऋग्वेद की शुद्ध ऋक्संख्या दर्शाने का यत्न किया जायेगा।

शतपथ ब्राह्मण १०।४।२।२३ में लिखा है—

**'स ऋचो व्यौहत द्वादश बृहतीसहस्राणि, एतावत्यो ह्यृचो याः प्रजापतिसृष्टाः।'**

अर्थात्—प्रजापति ने १२००० बारह सहस्र बृहती छन्द के परिमाण की ऋचाएं उत्पन्न कीं। इतनी ही प्रजापतिसृष्ट ऋचाएं हैं।

बारह सहस्र बृहती छन्द का १२००० × ३६ = ४३२००० अक्षर-परिमाण होता है।

शतपथ के इस प्रकरण को भले प्रकार देखने से विदित होता है कि यह अक्षर-परिमाण केवल ऋग्वेद की ऋचाओं का नहीं है, अपितु वेदचतुष्टयान्तर्गत समस्त ऋचाओं का है। क्योंकि शतपथ के इस प्रकरण में त्रयी विद्या का वर्णन करते हुए ऋक्, यजुः और साम का ही परिमाण दर्शाया है, अथर्व का नहीं। अतः इस प्रकार के ऋक् यजु और साम शब्द ग्रन्थ-विशेष के वाचक न होकर मन्त्रप्रकार के वाचक हैं। आचार्य जैमिनि ने त्रयी विद्या के लिए प्रयुक्त होनेवाले ऋक् यजुः और साम शब्द का अर्थ इस प्रकार दर्शाया है—

**यत्रार्थवशेन पादव्यवस्था सा ऋक्। गीतिषु सामाख्या। शेषे यजुः शब्दः॥**

**मीमांसा २।१।३५-३७॥**

शातपथी ऋगक्षरगणना वेदचतुष्टयान्तर्गतानां सर्वासामेवर्चाम् । तत्रेतावान् सन्देहोऽवशिष्यते यच्छौनकेनानुवाकानुक्रमण्यां पारायणे १०५८० अशीत्यधिकपञ्चशतोत्तरदशसहस्रमृचः पादश्चैक इति ऋङ्मानमुक्त्वा शतपथवत् ४३२००० चतुर्लक्षाणि द्वात्रिंशत्सहस्राणि चाक्षराणीत्यक्षरमानमुक्तम्, तत्तु ऋग्वेदीयर्चामेव कथमुपपद्यत इति देवा एव वेदितुमर्हन्ति ।

ऋक्संहितान्तर्वर्तिनीनामृचां संख्यामुपक्रम्य विदुषां वैमत्यं प्रागुपदर्शितम् । तत् किं वास्तविकमुत गणनापद्धतिभेदमूलकमुत भ्रमप्रमादादिजन्यमिति सम्प्रति विचार्यते—

## विशिष्टा ऋग्गणना-पद्धतिः

दृश्यन्ते हि दशतय्यां काश्चनेदृश्य ऋचो याः कदाचिद् द्विपदारूपेण गण्यन्ते, कदाचिच्च चतुष्पदारूपेण । तेषां द्विपदात्वेन चतुष्पदात्वेन च परिगणने संख्यावश्यं भिद्यते । अतस्तदेव तावद्विवेच्यते-

सन्ति ऋग्वेद आहत्य १५७ सप्तपञ्चाशदुत्तरशतं द्विपदा ऋचः । तासु १७ सप्तदश नित्याः, १४० चत्वारिंशदुत्तरशतं च नैमित्तिकाः । इमाश्चत्वारिंशदुत्तरशतमृचो यज्ञे शंसनादिषु द्विपदात्वेन विनियुज्यन्ते । तथा च ब्राह्मणं भवति—'द्विपदाः शंसति' इति । सूत्र्यते चाश्वला-

---

अर्थात् चारों वेदों में जितने पादबद्ध (पद्यमय) मन्त्र हैं वे 'ऋक्', गानात्मक 'साम', और गद्य मन्त्र 'यजुः' कहाते हैं ।

किन्हीं-किन्हीं विद्वानों का विचार है कि अनुवाकानुक्रमणी में लिखा हुआ ४३२००० अक्षर-परिमाण ऋग्वेद का समस्त शाखाओं में पठित १०५८० और १ पाद ऋचाओं का है । हमें यह कल्पना ठीक प्रतीत नहीं होती । क्योंकि बालखिल्यरहित १०४७२ ऋचाओं का अक्षर-परिमाण ३९४२२१ होता है । यह अक्षरसंख्या पादपूर्त्यर्थ किए गए अक्षर-व्यूह को मानकर उपलब्ध होती है । अतः शेष १८० ऋचाओं और १ पाद का लगभग ३८ सहस्र अक्षर-परिमाण किसी प्रकार नहीं हो सकता । इस हेतु से भी शतपथोक्त ४३२००० अक्षर-परिमाण वेदचतुष्टयान्तर्गत समस्त पादबद्ध ( पद्य ) मन्त्रों का समझना चाहिए । शौनक ने केवल ऋग्वेद का ४३२००० अक्षर-परिमाण कैसे लिखा, यह हमें ज्ञात नहीं ।

## विशिष्ट ऋग्गणना-पद्धति

ऋग्वेद की विभिन्न विद्वानों द्वारा प्रदर्शित ऋक्संख्या पर विचार करने से पूर्व ऋग्वेद में ऋग्गणना की जो विशिष्ट पद्धति है उसको समझ लेना अत्यावश्यक है । क्योंकि इसको यथार्थतया न समझने के कारण समस्त आधुनिक विद्वानों ने ऋग्गणना में भयङ्कर भूलें की हैं ।

**ऋग्गणना और द्विपदा ऋचाएं**—ऋग्वेद में कुछ मन्त्र ऐसे हैं, जिनको किसी समय दो-दो पाद का एक मन्त्र मानकर गिनते हैं, और किसी समय उन्हें चार-चार पादों का एक मंत्र मानते है, अर्थात् उस समय दो-दो द्विपात् मन्त्रों का एक चतुष्पाद मन्त्र माना जाता है । द्विपदा पक्ष में ऋग्वेद में समस्त १५७ द्विपदा ऋचाएं है । इनमें से १७ नित्य द्विपदा ऋचाएं हैं, शेष १४० द्विपदा ऋचाएं नैमित्तिक हैं । अर्थात् ये १४० ऋचाएं वस्तुतः द्विपदा नही हैं, अपितु १४० ÷ २=

यनेन—'पश्वा न तायुमिति द्वैपदम्' [ ८।१२ ] **इति। एता एवाध्ययनकाले चतुष्पदा भवन्ति। तदुक्तमृक्**सर्वानुक्रमण्याम्—'द्विर्द्विपदास्त्वृचः समामनन्ति' [**उपोद्घाते**] **इति।**

षड्गुरुशिष्यः **सूत्रमिदमित्थं व्याचख्यौ**—"ऋचोऽध्ययने त्वध्येतारो द्वे द्वे द्विपद एकैकामृचं कृत्वा समामनन्ति समामनेयुः अधीयीरन्। म्ना अभ्यासे, लिङर्थे लेट्, शपि मनादेशः। द्वे द्विपदे यासां ता ऋचो द्विर्द्विपदाः। समामनन्तीति वचनाच्छंसनादौ न भवन्ति। तेन 'पश्वा न तायुम्' [ऋ० १।६५] इति शंसने दशर्चत्वम्, आसां चाध्ययने पञ्चत्वं भवति" **इति।**

**अयमेवाभिप्रायः प्रथममण्डलान्तर्गतपञ्चषष्टितमसूक्तव्याख्याने** सायणेनाप्युपवर्ण्यते– 'तत्र पश्वेत्यादीनि षट् सूक्तानि द्वैपदानि। तेष्वध्ययनसमये द्विपदे द्वे द्वे ऋचौ चतुष्पदामेकैकां कृत्वा समाम्नायते। अयुतसंख्यासु तु याऽन्त्यातिरिच्यते, सा तथैवाम्नायते। प्रायेणार्थोऽपि द्वयोर्द्विपदयोरेक एव, प्रयोगे तु ताः पृथक् पृथक् शंसनीयाः। सूत्र्यते हि—पश्वा न तायुम् (ऋ० १।६५) इति द्वैपदम् (आश्व० ८।१२) इति।'

**चरणव्यूहटीकाकारो महिदासोऽप्याह**—'हवन एकैका, अध्ययने द्वे द्वे आमनन्ति' [**पृष्ठ १९**] **इति। यज्ञे शंसनं निमित्तं प्राप्य एता द्विपदा भवन्ति, अत एव नैमित्तिका द्विपदा उच्यन्ते,**

---

७० चतुष्पदा ऋचाएं हैं। ब्राह्मण ग्रन्थों में **'द्विपदाः शंसति'** आदि वाक्यों द्वारा ये ऋचाएं द्विपदा बनाकर यज्ञ में विनियुक्त की जाती हैं। अतएव इन ७० × २ = १४० ऋचाओं को 'नैमित्तिक द्विपदा' कहा जाता है। इनके विषय में ऋक्सर्वानुक्रमणी के परिभाषा-प्रकरण में इस प्रकार लिखा है—**'द्विर्द्विपदास्त्वृचः समामनन्ति।'**

इस सूत्र की व्याख्या करता हुआ षड्गुरुशिष्य लिखता है—**'ऋचोऽध्ययने०'**—

अर्थात्—ऋचाओं के अध्ययनकाल में अध्येता दो-दो द्विपदाओं को एक-एक ऋचा बनाकर अभ्यास करें। **'समामनन्ति'** कहने से यज्ञान्तर्गत शंसन ( स्तुति ) काल में दो द्विपदाओं की एक ऋचा नहीं होती है। इसलिये 'पश्वा न तायुम्' (ऋ० १। ६५) सूक्त शंसनकाल में दश ऋचाओं का माना जाता है, और ये ही दस ऋचाएं अध्ययनकाल में पांच मानी जाती हैं।

सायणाचार्य ने ऋ० १। ६५ के भाष्य में लिखा है—**तत्र पश्वेत्यादि**—

अर्थात्—'पश्वा'० ( ऋ० १। ६५—७० ) इत्यादि छः सूक्त द्वैपद हैं। उनमें अध्ययनकाल में दो-दो द्विपदाओं की एक-एक चतुष्पदा ऋचा बनाकर पढ़ी जाती हैं। जिस सूक्त में विषम संख्यावाली द्विपदाएं हैं, उसमें जो अन्तिम द्विपदा शेष रह जाती है, वह द्विपदारूप में ही पढ़ी जाती है। अर्थ भी प्रायः दो दो द्विपदाओं का एक ही है। प्रयोग अर्थात् यज्ञकाल में उनका पृथक्-पृथक् द्विपदारूप में ही शंसन होता है। आश्वलायन श्रौत ( ८। १२ ) में भी 'पश्वा न' ( ऋ० १। ६५ ) सूक्त द्विपदारूप से विनियुक्त है।

चरणव्यूह के टीकाकार महिदास ने भी लिखा है—**'हवन एकैका अध्ययने द्वे द्वे आमनन्ति।'** पृष्ठ १९[1]।

---

१. यह पृष्ठसंख्या चौखम्बा संस्कृत सीरीज बनारस के छपे चरणव्यूह के अनुसार है।

न तु स्वभावसिद्धा द्विपदाः । एतेनासां चतुष्पदात्वमेव वास्तविकं स्वरूपमित्युक्तं भवति। अर्थोऽप्यासां चतुष्पदानामेव सगच्छत, न द्विपदानाम्।

**काश्च ता नैमित्तिकाश्चत्वारिंशदुत्तरशत द्विपदा इति विवक्षायां महिदास आह—**

'पश्वा न तायुम् [ १।६५।१-१० ] दश, रयिर्न [ १।६६।१-१० ] दश, वनेषु [१।६७।१-१०] दश, श्रीणन् [ १।६८।१-१०] दश, शुक्रः शुशुक्वान् [ १।६९।१-१०] दश, वनेम पूर्वीः [ १।७०।१-१०] दश, अग्ने त्वं नः [ ५।२४।१-४] चत्वारि, अग्ने भव [७।१७।१-६] षट्, प्र शुक्रैतु [ ७।३४।१-१० ] दश, राजा राष्ट्राणाम् [ ७।३४।११-२० ] दश, क ईं व्यक्ता [ ८।२९।१-१० ] दश, परि प्र धन्व [ ९।१०९।१-१०] दश, त ते सोतारः [९।१०९।११-२२] द्वादश, इमा नु कम् [ १०।१५७।१-४ ] चत्वारि, आ याहि वनसा [१०।१७२।१-४] चत्वारि, इति नैमित्तिकद्विपदाश्चत्वारिंशोत्तरशतम् ( १४० )' [ पृष्ठ १८ ] इति।

**नैमित्तिकेतराः सप्तदश नित्या द्विपदा उपलेखसूत्रे [ ९। १-२] परिगण्यन्ते।**

**इदमत्रावधेयम् —प्रतिसूक्तमृक्संख्यानिर्देशे कात्यायनेन ऋक्सर्वानुक्रमण्यामिमाः १४० चत्वारिंशदुत्तरशतं नैमित्तिका द्विपदा ऋचो द्विपदात्वेनैव निर्दिष्टाः।**

## मैक्समूलरीय ऋक्संस्करणे द्विपदा ऋचः

**त्रिंशदुत्तरैकोनविंशतितमे (१९३०) वैक्रमाब्दे (सन् १८७३ ई०) मैक्समूलरेणातिपरिश्रमेण संस्कृत्य ऋग्वेदस्य प्रथमं संस्करणं प्रकाशितम्। विद्यमानास्वपि कतिपयासु महतीषु भ्रान्तिषु तदत्युत्तमं संस्करणमित्यत्र नास्ति विवादावसरः।**

अर्थात्—हवनकाल में एक-एक द्विपदा पढ़ी जाती है, और अध्ययनकाल में दो-दो द्विपदाएं [एक ऋचा मानी जाती है]।

ऋग्वेद में १४० नैमित्तिक द्विपदाएं कौनसी है, उनका संग्रह चरणव्यूह के टीकाकार महिदास ने इस प्रकार दर्शाया है 'पश्वा न तायुम्०' आदि [देखो—संस्कृत भाग]।

इनके अतिरिक्त १७ नित्य द्विपदाओं का उल्लेख उपलेख सूत्र ( वर्ग ९।१-२ ) में मिलता है।

इस प्रकार ऋग्वेद में समस्त १७ + १४० = १५७ नित्य नैमित्तिक द्विपदा ऋचाएं हैं। आचार्य कात्यायन ने ऋक्सर्वानुक्रमणी में प्रतिसूक्त जो ऋक्संख्या लिखी है, उसमे इन १४०नैमित्तिक द्विपदाओ को द्विपदा मानकर ही गिना है, यह हम पूर्व लिख चुके हैं।

## मैक्समूलर का ऋक्संस्करण और द्विपदा ऋचाएं

मैक्समूलर ने सं० १९३० (सन् १८७३) मे ऋग्वेदमूल का प्रथम संस्करण प्रकाशित किया था। यह संस्करण वस्तुतः उसके महान् परिश्रम का फल है, जो किसी भी सम्पादन-कलाभिज्ञ पाठक से छिपा नहीं है। इतना होते हुए भी निःसंकोच कहना पड़ेगा कि मैक्समूलर के ऋक्संस्करण में कुछ भयङ्कर दोष रह गए हैं। उनमें सबसे महान् दोष नैमितिक द्विपदा ऋचाओं के मुद्रण में हुआ है, जिसके कारण उत्तरवर्ती अनेक विद्वानों से भयङ्कर भूलें हुई हैं।

तत्र मैक्समूलरेण प्रथममण्डले पञ्चषष्टितमसूक्तादासप्ततितमं षष्टिर्नैमित्तिका द्विपदा ऋचश्चतुष्पदीकृत्य त्रिंशत् मुद्रिताः, प्रतिचतुष्पदमपि च मन्त्रसंख्या निर्दिष्टा। पञ्चमे मण्डले चतुर्विंशतितमस्य सूक्तस्य चतस्रो द्विपदाश्चतुष्पदीकृत्य मन्त्रद्वयं मुद्रितम्। तत्र च प्रथमस्यान्ते १।२ एका द्वे च, द्वितीयस्यान्ते ३।४ तिस्रश्चतस्रश्च संख्या निवेशिताः। शिष्टेषु मण्डलेषु परिशिष्टाः षट्सप्ततिर्नैमित्तिका द्विपदा द्विपदात्वेनैव मुद्रिताः। एवं नैमित्तिकद्विपदानामृचां मुद्रणे मैक्समूलरेण त्रयो विकल्पाः समाश्रिताः। तत्र प्रथमः—आद्यमण्डलान्तर्गताः (सू० ६५–७०) षष्टिनैमित्तिका द्विपदाश्चतुष्पदीकृत्य मुद्रिताः, तथैव च तासु त्रिंशत्संख्या निवेशिता। द्वितीयः—पञ्चममण्डलस्य (सूक्त २४) चतस्रो नैमित्तिका द्विपदाश्चतुष्पदीकृत्य मुद्रिताः, संख्या च प्रतिमन्त्रान्ते द्विपदानुसारिण्येव द्वे द्वे (१।२, ३।४) विधृता। तृतीयः—अवशिष्टाः षट्सप्ततिर्नैमित्तिका द्विपदा द्विपदारूपेणैव मुद्रिता इति। इत्थमनुमिनुमो यन्मैक्समूलरेण नैमित्तिकद्विपदानां स्वरूपमेव सम्यङ् नाज्ञायि।

एतदेवोक्तदोषदूषित मैक्समूलरीयमृक्संस्करण प्रमाणीकृत्योपयुञ्जाना बहव आधुनिका विद्वांस ऋक्परिगणने विभ्रान्ता इत्यनुपदं वक्ष्यामः।

---

मैक्समूलर ने अपने मूल ऋग्वेद के सस्करण मे म० १, सूक्त ६५–७० तक की ६० नमित्तिक द्विपदा ऋचाओं को ३० चतुष्पदा ऋचा बनाकर छापा है, और प्रत्येक चतुष्पदा ऋचा पर मन्त्र-संख्या दी है[1]। पञ्चम मण्डल के २४वे सूक्त की ४ चार द्विपदा ऋचाओ को दो-दो चतुष्पदा ऋचा बनाकर छापा है, परन्तु प्रथम के अन्त मे १, २ और द्वितीय के अन्त मे ३, ४ संख्या छापी है। शेष मण्डलों की अवशिष्ट ७६ नैमित्तिक द्विपदाओ का द्विपदारूप से ही मुद्रण किया है। इस प्रकार मैक्समूलर ने नैमित्तिक द्विपदा ऋचाओ के मुद्रण में तीन प्रकार आश्रित किए है। **प्रथम**—पहले मण्डल ६५–७० सूक्त की ६० नैमित्तिक द्विपदाओ को ३० चतुष्पदा बनाकर छापना, और चतुष्पदा के अनुसार मन्त्रसख्या देना। **द्वितीय**—पञ्चम मण्डल के २४वे सूक्त की ४ नैमित्तिक द्विपदाओ को २ चतुष्पदा बनाकर छापना, और उन पर द्विगुणित (द्विपदा के अनुसार) मन्त्र-सख्या देना। **तृतीय**—शेष मण्डलो की ७६ नैमित्तिक द्विपदाओं को द्विपदारूप मे छापना।

सम्पादनकला की दृष्टि से यह दोष अक्षम्य है। इसमे यह भी विदित होता है कि मैक्समूलर को इन १४० नैमित्तिक द्विपदा ऋचाओ का वास्तविक स्वरूप समझ मे नही आया था।

मैक्समूलर की उपर्युक्त यह भूल यदि उसके संस्करण तक ही सीमित रहती, तो कुछ विशेष हानि नही थी। परन्तु उसके सस्करण को प्रामाणिक मानकर उत्तरवर्ती अनेक विद्वानो से भयङ्कर भूले हुई है (जिनका हम इस लेख मे यथास्थान निदर्शन करायगे)। अतः उसे किसी प्रकार क्षम्य नही कहा जा सकता।

---

१. मैक्समूलर सम्पादित ऋग्वेद सायण भाष्य के द्वितीय सस्करण (सन १८९०) मे प्रति चतुष्पदा ऋचा के आगे दुगुनी सख्या (१।२॥ ३।४॥ ५।६॥ इत्यादि) उपलब्ध होती है, जो ठीक है। सायणभाष्य के प्रथम सस्करण मे मन्त्रसख्या किस प्रकार छपी थी, यह हमे ज्ञात नही। क्योकि हमे उसका प्रथम संस्करण देखने को प्राप्त नही हुआ।

## अनुवाकानुक्रमण्युक्ता ऋक्संख्या:

शौनकेनानुवाकानुक्रमण्यामृक्संख्या द्विरलेखि। तत्र तावत् प्रतिवर्गान्तर्गतऋक्संख्यानुसारं वर्गान् निदर्शयन्नाह—

> एकर्च एकवर्गः (१) स्यादेकश्च (१) नवकस्तथा।
> द्वौ (२) वर्गौ तु द्वृचौ ज्ञेयौ त्र्यून तृचशत (९७) स्मृतम्॥४०॥
> चतुर्ऋचां शतमेकं च चत्वारः सप्ततिस्तथा (१४७)।
> पञ्चर्चानां सहस्रं तु द्वे च सप्तोत्तरे शते (१२०७)॥४१॥
> त्रीणि शतानि षट्कानां चत्वारिंशत् षट् च (३४६) वर्गाः।
> शतमेकोनविंशतिः(११९)सप्तकानां न्यूनाषष्टिर्(५९)अष्टकानाम्॥४२॥

एषा गणनैव विस्पष्टं प्रतिपत्तव्या—

| प्रतिवर्गमृक्संख्या | वर्गसंख्या | | समस्तऋक्संख्या |
|---|---|---|---|
| १ | १ | = | १ |
| २ | २ | = | ४ |
| ३ | ९७ | = | २९१ |
| ४ | १७४ | = | ६९६ |
| ५ | १२०७ | = | ६०३५ |
| ६ | ३४६ | = | २०७६ |
| ७ | ११९ | = | ८३३ |
| ८ | ५९ | = | ४७२ |
| ९ | १ | = | ९ |
| योग: | २००६ | | १०४१७ |

एवमाहत्य ऋग्वेदे (२००६) षडधिकद्विसहस्रं वर्गाः, (१०४१७) सप्तदशाधिकचतुःशतोत्तर-दशसहस्रमृचो भवन्ति। सेयं ऋक्संख्या शाकलचरणान्तर्गतायाः शैशिरीयसंहिताया बोध्या, 'तान् पारणे शाकले शैशिरीये वदन्ति (३६)' इत्युपक्रम्योक्तवर्गसंख्यानिर्देशात्। अत्र बाल-

## अनुवाकानुक्रमणी और ऋक्संख्या

शौनक ने अपनी अनुवाकानुक्रमणी में दो स्थानों पर ऋक्संख्या का निर्देश किया है। श्लोक ४०, ४१, ४२ में वर्गसंख्या का निर्देश करता हुआ वह लिखता है—**'एकर्च एकवर्गः०'**। इन श्लोकों का स्पष्टीकरण ऊपर संस्कृत भाग में दर्शाया है।

तदनुसार ऋग्वेद में २००६ वर्ग और १०४१७ ऋचाएं होती हैं। शौनक के मतानुसार यह ऋक्संख्या शाकल चरणान्तर्गत शैशिरीय शाखा की है। वह लिखता है—**'तान् पारणे शाकले शैशिरीये वदन्ति'** (३६)। इस संख्या में बालखिल्य ऋचाएं सम्मिलित नहीं हैं, और नैमित्तिक

खिल्या ऋचो न संकलिताः, न चापि नैमित्तिका द्विपदा द्विपदात्वेन परिगणिताः। वर्तमानाया-मृक्संहितायामपि बालखिल्या ऋचो विहाय वर्गाः (२००६) षडुत्तरद्विसहस्रमेव, परं मन्त्रसंख्या तु भिद्यते, तत्र मन्त्रा (१०४०२) द्व्यधिकचतुःशतोत्तरदशसहस्रसंमिता एवोपलभ्यन्ते। एतत् पञ्चदशमन्त्राधिक्यं शाखाभेदकृतमित्यनुमिनुमः। न चानुवाकानुक्रमण्यां पञ्चदश मन्त्राधिक्यं दृष्ट्वा संज्ञानसूक्तस्थाः पञ्चदश मन्त्रा अत्र संकलिता इत्यूहनीयम्। तेषाँ संकलने हि तत्सूक्तस्य चत्वारो वर्गा अपि संगृहीताः स्युः। तथा सति वर्गसंख्या षडधिकद्विसहस्रस्थाने दशाधिकद्विसहस्रं भवेत्। अतः क एते पञ्चदश मन्त्राः, कुत्र कुत्र चैते पठिता इति न शक्यते ज्ञातुम्, तथाविधस्य निर्देशस्याभावात्। तदनन्तरं च—

ऋचां दश सहस्राणि ऋचां पञ्च शतानि च। ऋचामशीतिः पादश्च पारणं संप्रकीर्तितम्॥

इत्यनेन श्लोकेन १०५८० अशीत्यधिकपञ्चशतोत्तरदशसहस्रमृचः पादश्चैक इति पारणे ऋक्संख्या दर्शयति।

इयं संख्या पूर्वनिर्दिष्टसंख्यातो नितरां भिद्यते। तत्रैवं समन्वयः—अस्मिन् श्लोके पारण-शब्देन तत्रभवाञ्छौनकाचार्यः शाकलचरणान्तर्वर्तिसर्वशाखागतानामृचां परिमाणं प्रतिपादयति। तथा चोक्तं लौगाक्षिस्मृतौ—

ऋचां दश सहस्राणि ऋचां पञ्च शतानि च। ऋचामशीतिः पादश्च पारायणविधौ खलु॥
पूर्वोक्तसंख्यायाश्चेत्तु सर्वशाखोक्तसूत्रगाः। मन्त्राश्चैव मिलित्वैव कथनं चेति तत्पुनः॥ इति
['वैदिक वाङ्मय का इतिहास' ग्रन्थे उद्धृतौ, भाग १, पृ० १३४]

---

द्विपदाओं का भी द्विपदारूप में परिगणन नहीं है। वर्तमान ऋग्वेद में बालखिल्य ऋचाओं को छोड़कर वर्गसंख्या २००६ ही है, परन्तु मन्त्र-संख्या १०४०२ है (यह हम आगे दर्शायेंगे)। इस प्रकार इसमें जो १५ ऋचाओं की अधिकता है[1], वह शाखाकृत समझनी चाहिए।

इसके आगे वह पूर्वोद्धृत **'ऋचां दश सहस्राणि'** श्लोक पढ़ता है। तदनुसार ऋग्वेद में १०५८० ऋचाएं और एक पाद है। यद्यपि इन दोनों स्थानों पर कही हुई ऋक्संख्याओं में महती भिन्नता है, तथापि इसका समाधान बहुत साधारण है। 'ऋचां दश सहस्राणि' श्लोक में 'पारणम्' पद विशेष ध्यान देने योग्य है। शौनक ने 'पारणम्' शब्द-द्वारा १०५८० और १ पाद ऋक्परि-माण ऋग्वेद की समस्त शाखान्तर्गत ऋचाओं को दर्शाया है। यह लौगाक्षिस्मृति के निम्नलिखित श्लोकों के साथ तुलना करने पर स्पष्ट विदित हो जाता है। यथा—**'ऋचां दश०'**—

इन श्लोकों में १०५८० और १ पाद ऋक्परिमाण दर्शाकर स्पष्ट शब्दों में लिखा है कि यह संख्या सर्वशाखोक्त मन्त्रों की है। यद्यपि इन श्लोकों का पाठ अत्यन्त भ्रष्ट है, तथापि उपर्युक्त अभिप्राय सर्वथा स्पष्ट है।

---

१. १५ संख्या का आधिक्य देखकर शैशिरि शाखा मे संज्ञान सूक्त के समावेश की कल्पना नहीं करनी चाहिये। क्योंकि संज्ञानसूक्त का समावेश होने पर उसके चार वर्गों का भी वर्गसंख्या में समावेश होगा। वैसा होने पर वर्गसंख्या २००६ न होकर २०१० हो जायगी। अनुवाकानुक्रमणी मे वर्गसंख्या २००६ ही लिखी है।

**शौनकोक्तमन्त्यमङ्मान चरणव्यूहपरिशिष्टेऽपि निर्दिश्यते। तथा हि—**

ऋचां दश सहस्राणि ऋचां पञ्च शतानि च। ऋचामशीतिः पादश्चैतत् पारायणमुच्यते॥ [पृष्ठ १४] इति।

**श्लोकमेनं विवृण्वन् महिदासः १०५८० अशीत्यधिकपञ्चशतोत्तरदशसहस्रमृचः पादश्चैक इत्यङ्मानमित्थमुपपादयाञ्चकार—**

'एतत् पारायणं वालखिल्यैर्विना संख्यातम्। वालखिल्यानि पारायणे न सन्ति' [पृ० १७]।

'अथाध्ययने ऋक्संख्योच्यते—षण्णवत्यधिकचतुःशतदशसहस्राणि (१०४९६), ता नैमित्तिकद्विपदाश्चत्वारिंशदुत्तरशतसहिता दशसहस्राणि (षष्ट्यधिकपञ्चशतानि) १०५६६. सज्ञानमुशना वदत् सूक्तस्य पञ्चदश ऋच एकीकृत्य १०५८० एवं पारायणे ऋक्संख्या। ऋचां दशसहस्राणीति वचनस्य संख्या पूर्णा भवतीत्यर्थः। एका उर्वरिता, सा 'भद्रं नो अपि वातय मनः' [ऋक् १०।२०।१] इति पादाधिवयम्'' [पृ० २१] इति।

**सन्त्यृग्वेदे कतिपया ऋचो यासु त्रयोऽर्धर्चाः श्रूयन्ते† ताश्च महिदासेन चरणव्यूहटीकायां**

---

चरणव्यूह-परिशिष्ट में लिखा है — ऋचां दश०'—

महीदास १०५८० और १ पाद ऋक्संख्या की उपपत्ति इस प्रकार दर्शाता है—**'एतत्०'**—

अर्थात्—अध्ययनकाल की १८५८० और एक पाद संख्य कहते हैं—१०४९६ ऋचाएं हैं, उनमें नैमित्तिक द्विपदा की (अधिक ७०) संख्या जोड़ने पर १०५६६ ऋचाएं होती हैं। सज्ञान सूक्त की १५ ऋचाएं[1] मिलाने पर १०५८० संख्या पूरी हो जाती है। एक संख्या बचती है, वह है **'भद्रं नो अपि वातय मनः'** (ऋक् १०।२०।१) एक पाद।

यहां पर महीदास ने १०४०२ ऋचाओं में ९४ संख्या अधिक जोड़ कर १०४९६ संख्या गिनी है। इस ९४ संख्या की उपपत्ति इस प्रकार है—

ऋग्वेद में ९४ ऋचाएं ऐसी है, जिनमें तीन-तीन अर्धर्च हैं।[2] अध्ययनकाल में उनके दो

---

†द्रष्टव्यैतत्पृष्ठस्था द्वितीया टिप्पणी।

१. महिदास ने १०५८० और १ पादसंख्या की उपपत्ति में संज्ञान सूक्त की जो १५ ऋचायें गिनी है, वह ठीक नहीं, क्योंकि अनुवाकानुक्रमणी में सज्ञान सूक्त के बिना ही १०४१७ मन्त्र कहे है। देखो पूर्व पृष्ठ ७०५।

२ महिदास ने उनका परिगणन इस प्रकार दर्शाया है—आसा परिगणनमाह—'अग्नि होतारम (अष्ट० २, अ० १, वर्ग १२, इसी प्रकार आगे भी समझें) पञ्च, 'स हि शर्धो न' (२।१।१३) षड्, 'अय जायत' (२।१।१४) पञ्च, 'विश्वो विहायाः' (२।१।१५) त्रिस्र., 'य त्व रथम्' (२।१।१६) पञ्च, 'प्र तद् वोचेयम्' (२।१।१७) षट्, 'इन्द्र पाह्यु प नः' (२।१।१८) पञ्च, 'इमा ते वाचम्' (२।१।१९) चत्वारि, 'स नो नव्येभि' (२।१।१९) वर्जम। 'इन्द्राय हि द्यौ.' (२।१।२०) सप्त, 'त्वया वयम्' (२।१।२१) षट्, 'अवर्म ह'(२।१।२२) एका, 'वनोति हि' (२।१।२२) एका, 'आ त्वा जुवो' (२।१।२३) षट्, 'स्तीर्णम्' (२।१।२४) पञ्च, 'इमे वा सोमा' (२।१।२५) एका, 'इमे ये ते सु वायो वा' (२।१।२५) एका, 'प्र सुज्येष्ठम्' (२।१।२६) षट्, 'ऊती देवानाम्' (२।१।२६) वर्जम्। 'गृणमायातम्' (२।२।१) त्रीणि, 'प्र प्र पूष्णः' (२।२।२) चतुष्कम्, अस्तु श्रौषट्'

(पृष्ठ १६,२०) चतुर्नवतिः परिगणिताः। तासामध्ययने द्वयोरर्धर्चयोरेकामृचं कृत्वा परिशिष्टमेकमर्धर्चं चैकामृचं मत्वा परिगणनं क्रियते। तथा सति चतुर्नवतिऋचामष्टाशीत्युत्तरं शतमृचः संपद्यन्ते। तदेवमृचां योगः—१०४०२ द्व्यधिकचतुःशतोत्तरदशसहस्रमृचो बालखिल्यरहिताः ६४ चतुर्नवतिसंख्या च त्र्यर्धर्चानामृग्द्वयकल्पनयोत्पन्ना, नैमित्तिकद्विपदानां द्विपदारूपेण परिगणनाद् विवृद्धा ७० सप्ततिसंख्या, संज्ञानसूक्तं च पञ्चदशर्चम्। एवं १०५८१ एकाशीत्यधिकपञ्चशतोत्तरदशसहस्रमृचः संजाताः। तत्र—'भद्रं नो अपि वातय मनः' [ ऋ० १० । २० । १ ] इत्येकपदा ऋक्।

महिदासोक्तोपपत्तौ स्तो द्वे भ्रान्ती। तत्र प्रथमा—महिदासेनात्र—'अध्ययने ऋक्संख्योच्यते' इत्युक्त्वापि नैमित्तिका त्रिपदा द्विपदात्वेन परिगणिताः। न च ता अध्ययने द्विपदात्वेन गण्यन्ते, किन्तर्हि चतुष्पदात्वेनेत्युक्तं पुरस्तात्। सिद्धान्तितं च तेन स्वयमेवान्यत्र—'हवन एकैका, अध्ययने द्वे द्वे' इति, 'तास्त्वृचोऽध्ययने चतुष्पदा कृत्वेत्यर्थः' [पृष्ठ १६] इति च। द्वितीया च—अनुवाकानुक्रमण्यां शौनकेन या १०४१७ सप्तदशाधिकचतुःशतोत्तरदशसहस्रमृचः पारायणे परिगणितास्तासु संज्ञानसूक्तस्थपञ्चदशर्चां सन्निवेशो नास्तीत्युक्तं पुरस्तात्। अतोऽत्र संज्ञानसूक्तगतानामृचां संकलनमपि चिन्त्यम्।

## छन्दःसंख्यापरिशिष्टोक्ता ऋग्गणना

अस्ति कस्याश्चिदृक्शाखायाः एकादशश्लोकात्मकं छन्दःसंख्यासंज्ञकं परिशिष्टम्। तत्र चेमे श्लोकाः—

एकपञ्चाशद् ऋग्वेदे गायत्र्यः शाकलेयके। सहस्रं द्वितयं चैव चत्वार्येव शतानि तु ॥ १ ॥
त्रीणि शतानि सैकानि चत्वारिंशत्तथोष्णिहः। अनुष्टुभां शतान्यष्टौ पञ्चाशत् पञ्चसंयुताः ॥२॥
बृहतीनां शतं ज्ञेयमेकाशीत्यधिकं बुधैः। शतानि त्रीणि पङ्क्तीनां द्वादशाभ्यधिकानि तु ॥ ३ ॥

---

अर्धर्च की एक ऋचा और एक अर्धर्च की एक ऋचा गिनी जाती है। इस प्रकार ९४ ऋक्संख्या की वृद्धि हो जाती है।

महिदास की इस गणना में दो भूलें हैं। प्रथम—महिदास ने 'अध्ययन में ऋक्संख्या कहते हैं' ऐसा लिखकर भी उसमें नैमित्तिक द्विपदाओं की गणना कर ली। उसने स्वयं अध्ययनकाल में चतुष्पदा माना है। दूसरी—शौनक ने अनुवाकानुक्रमणी में जो १०४१७ ऋचाएं परायण में गिनी हैं, उनमें संज्ञान सूक्तस्थ १५ ऋचाओं का सन्निवेश नहीं है, यह पहले दर्शा चुके हैं।

## छन्दःसंख्या-परिशिष्ट और ऋग्गणना

ऋग्वेद की किसी शाखा का छन्दःसंख्यासंज्ञक एक प्राचीन परिशिष्ट उपलब्ध होता है।

---

(२।२।३) चत्वारि, 'शुचिभिर्नः' (२।२।३) वर्जम्। 'वृषन्निन्द्' (२।२।४) पञ्च, 'ये देवासो' (२।२।४) वर्जम्। 'तवत्यन्नर्यम्' (२।६।२८) एका, 'सखे सखायम्' (३।४।१२) एका, 'अया रुचा' (७।५।२३) त्रीणि, एतास्त्रीणि त्रीण्यर्धर्चा ऋचा हवनीयाश्चतुर्नवतिसंख्या। इति त्रीण्यर्धर्च ऋग्घवने। अध्ययने अर्धर्च द्वयेन ऋगेका, अर्धर्चेनैकैव ऋग्द्वये कर्तव्य इत्यर्थः। चरणव्यूह पृष्ठ १६, २०।

पञ्चाशत् त्रिष्टुभः प्रोक्तास्तिस्रश्चैव ततोऽधिकाः । सहस्राण्येव चत्वारि विज्ञेयं तु शतद्वयम् ॥ ४ ॥
चत्वारिंशत्तथाष्टौ च तथा चापि शतत्रयम् । जगतीनामियं संख्या सहस्रं तु प्रकीर्तितम् ॥ ५ ॥
दशैवातिजगत्योऽपि तथा सप्त न संशयः । शक्वर्योऽपि तथैवोक्तास्तथा नव विचक्षणैः ॥ ६ ॥
नव चैवातिशक्वर्यः षडष्टयः प्रकीर्तिताः । अशीतिश्च चतस्रश्च तथात्यष्टिऋचः स्मृताः ॥ ७ ॥
धृतिद्वयं विनिर्दिष्टमेकातिधृतिरेव च । एकपदास्तु षट् प्रोक्ता द्विपदा दश सप्त च ॥ ८ ॥
प्रगाथा बार्हता येऽत्र तेषां शतमुदाहृतम् । चतुर्नवतिरेवोक्तास्तद्वद् [1]द्वृचास्त्वसंशयाः ॥ ९ ॥
काकुभानां तु पञ्चाशद् विज्ञेयाः पञ्चसंयुताः । महाबार्हत एवैकः एवं सार्धशतद्वयम् ॥१०॥
एवं दशसहस्राणि शतानां तु चतुष्टयम् । ऋचां द्व्यधिकमाख्यातमृषिभिस्तत्त्वदर्शिभिः ॥११॥ इति

एवमन्त्यं विहाय दशसु श्लोकेषु गायत्र्यादिच्छन्दोऽनुसारं या ऋक्संख्या परिगणिता, तदनुसारम्—

गायत्र्यः—२४५१ एकपञ्चाशदधिकचतुःशतोत्तरद्विसहस्रम् । उष्णिहः—३४१ एकचत्वारिंशदधिकं त्रिशतम् । अनुष्टुभः ८५५ पञ्चपञ्चाशदधिकाष्टशतम् । बृहत्यः—१८१ एकाशीत्यधिकैकशतम् । पङ्क्तयः— ३१२ त्रीणि शतानि द्वादश च । त्रिष्टुभः—४२५३ चत्वारि सहस्राणि द्वे शते त्रिपञ्चाशच्च । जगत्यः—१३४८ अष्टचत्वारिंशदधिकत्रिशतोत्तरैकसहस्रम् । अतिजगत्यः—१७ सप्तदश । शक्वर्यः— १९ एकोनविंशतिः । अतिशक्वर्यः—९ नव । अष्टयः—६ षट् । अत्यष्टयः— ८४ चतुरशीतिः । धृती—२ द्वे । अतिधृतिर्—१ एका । एकपदाः—६ षट् । द्विपदाः—१७ सप्तदश । बार्हताः प्रगाथाः— १९४ चतुर्नवत्यधिकशतम् । काकुभाः प्रगाथाः—५५ पञ्चपञ्चाशत् । महाबार्हतः प्रगाथः १ एकः ।

एषु २५० सार्धद्विशतप्रगाथा द्वृचास्तेषां ५०० पञ्चशतमृचः । तत्संकलय्यैकादशे श्लोके १०४०२ द्व्यधिकचतुःशतोत्तरदशसहस्रमृचः शाकलेयक ऋग्वेदे परिसंख्याताः ।

इसमें केवल ११ श्लोक हैं। प्रारम्भ के दस श्लोकों में गायत्र्यादि पृथक्-पृथक् छन्दों के अनुसार ऋक्संख्या का उल्लेख किया है। तत्पश्चात् अन्तिम श्लोक में सामूहिक रूप से ऋक्संख्या का निर्देश है। वे श्लोक इस प्रकार हैं 'एकपञ्चाशद्०' -

इन श्लोकों के अनुसार ऋग्वेद में **गायत्री** २४५१, **उष्णिक्** ३४१, **अनुष्टुभ्** ८५५, **बृहती** १८१, **पंक्ति** ३१२, **त्रिष्टप्** ४२५३, **जगती** १३४८, **अतिजगती** १७, **शक्वरी** १९, **अतिशक्वरी** ९, **अष्टि** ६, **अत्यष्टि** ८४, **धृति** २, **अतिधृति** १, **एकपदा** ६, **द्विपदा** १७, **बार्हतप्रगाथ** १९४, **काकुभ प्रगाथ** ५५, **महाबार्हत प्रगाथ** १ छन्द हैं। इस प्रकार तत्त्वदर्शी महर्षियों ने ऋग्वेद की समस्त ऋचाओं की संख्या १०४०२ कही है।

१. द्वृचशब्दे पाणिनीयव्याकरणेन साक्षादप्रतिपादितोऽपीकारलोपः पृषोदरादित्वाद् द्रष्टव्यः । तस्य च विकल्पाद् द्वृचशब्दोऽप्युपपन्नः । येषां मते ... तृच इत्येव भवति ।

**एतदृक्संख्यापरिसंख्यानविषये पण्डितसत्यव्रतसामश्रमिणा स्वीय ऐतरेयालोचन एवमलेखि—**

'छन्दःसंख्योल्लिखितोक्तसर्वसकलनसंख्या तु प्रतिच्छन्दःसंख्यातोऽपि विरुद्धैव प्रतीयते। तद्यथा तत्रोक्तं श्लोकैः—गायत्र्यः २४५१, उष्णिहः ३४१, अनुष्टुभः ८५५, बृहत्यः १८१, पङ्क्तयः ३१२, त्रिष्टुभः ४२५३, जगत्यः १३४८, अतिजगत्यः १७, शक्वर्यः ६, अतिशक्वर्यः ६, अष्टयः ६, अत्यष्टयः ८४, धृत्यौ २, अतिधृतिः १, द्विपदाः १७, एकपदाः ६, बार्हतप्रगाथाः १९४, ककुप्प्रगाथाः ५५, महाबार्हतप्रगाथः १। तदेवं तदुक्तप्रतिच्छन्दःसंख्यानां संकलनया १०१४२ ( द्विचत्वारिंशदधिकशतोत्तरदशसहस्रम् ) ऋचः स्युः। पूर्वप्रदर्शितश्लोकतस्तु गम्यन्ते १०४०२ ( द्व्यधिकचतुःशतोत्तरदशसहस्रम् )। तदत्र प्रायः सर्वत्र संकलनभ्रमोऽस्माभिर्ग्रन्थदृष्ट्या प्रमाणित एव' [ पृ० १४३ ] इति।

**अत्र महापण्डितस्यापि सामश्रमिमहाभागस्य द्विविधो भ्रमोऽभूत्।** प्रथमः—**षष्ठश्लोकस्योत्तरार्धे 'तथा' पद द्विरुक्तम्। तत्राद्यं पूर्वार्धगताया अतिजगतीगणनाया निर्देशकम्, अपरं प्रागुक्ताया दशसंख्यायाः समुच्चायकम्। तत्रातिजगतीवच्छक्वरीछन्दांस्यपि गणनीयानीत्यभिप्रेयते। सामश्रमिमहोदयेन पुनस्तदपरिज्ञायैकोनविंशतिस्थाने नवैव शक्वर्यः परिगणिताः।** द्वितीयश्च—**नवमे श्लोके विस्पष्टं प्रगाथाः द्वृचा उक्ताः। अतस्तेषां २५० सार्धद्विशतप्रगाथानां पञ्चशतमृचः संपद्यन्ते। ऋक्सर्वानुक्रमण्याः परिभाषाप्रकरणेऽपि—'बृहतीसतोबृहत्यौ बार्हतः, ककुप् चेत् पूर्वा काकुभः, महाबृहतीमहासतोबृहत्यौ महाबार्हतः' इत्यादिसूत्रैर्व्यक्तं द्वृचानां प्रगाथत्वमुच्यते।**

---

छन्दःसख्या-परिशिष्ट मे उल्लिखित ऋग्गणना के विषय में पं० सत्यव्रत सामश्रमी ने ऐतरेयालोचन पृष्ठ १४३ पर लिखा है—**'छन्दःसंख्यो०'**—

अर्थात्—छन्दःसख्या नाम के परिशिष्ट में कही हुई सब छन्दों की संकलन-संख्या (पूर्णयोग) प्रतिच्छन्द दर्शाई हुई छन्दःसख्या के सकलन (योग) से विरुद्ध ही प्रतीत होती है। जैसा कि श्लोकों में कहा है—गायत्री २४५१ ·· शक्वरी ६ ··। इस प्रकार प्रतिच्छन्द-निर्दिष्ट संख्याओं का संकलन करने से १०१४२ ऋचाएं होती हैं। पूर्वप्रदर्शित ( ११वें ) श्लोक से १०४०२ संख्या जानी जाती है। इस तरह सर्वत्र सकलन-भ्रम हमने ग्रन्थों से प्रमाणित कर दिया।

पं० सत्यव्रत सामश्रमी ने इन श्लोकों के समझने में दो भूलें की हैं। **प्रथम** भूल–छठे श्लोक के उत्तरार्द्ध में दो बार **'तथा'** शब्द का प्रयोग है। पहला 'तथा' शब्द पूर्वार्धगत अतिजगती की गणनाप्रकार का निर्देशक है। दूसरा 'तथा' शब्द पूर्वोक्त १० संख्या का समुच्चायक है। श्लोक का भाव यह है — जैसे अतिजगती की सख्या १०+७=१७ कही है, वैसे ही शक्वरी की गणना में भी पूर्वसंख्या १० और उत्तरसख्या ६ समझनी चाहिए, अर्थात् शक्वरी छन्द की १०+६=१६ ऋचाएं हैं। पं० सत्यव्रत सामश्रमी ने **'शक्वर्योऽपि तथैवोक्ताः'** चरण का भाव न समझ कर शक्वरी छन्द की केवल ६ ऋचाएं गिनी हैं। **द्वितीय भूल**—प्रगाथों की संख्या का निर्देश करते हुए ६ वें श्लोक में स्पष्ट कहा है कि ये प्रगाथ='द्वृच' हैं। अतः इन १६४+५५+१=२५० प्रगाथों की ५०० ऋचाएं गिननी चाहिए। ऋक्सर्वानुक्रमणी के परिभाषा प्रकरण में स्पष्ट कहा है कि बार्हत प्रगाथ=बृहती और सतोबृहती, काकुभ प्रगाथ=ककुप् और सतोबृहती, तथा महाबार्हतप्रगाथ=महाबृहती और महासतोबृहतीसंज्ञक छन्दों के योग का नाम

